# ABHIJNÁNA SÁKUNTALAM:

A

## SANSKRIT DRAMA.

BY

## KÁLIDÁSA.



EDITED

WITH NOTES AND FULL EXPLANATION

BY

KRISHNA NÁTHA NYÁYAPANCHÁNANA.



*SECOND EDITION*

CALCUTTA:

PRINTED BY P. M. SOOR AND CO., AT THE CROWN PRESS,
NO. 2, GOABAGAN STREET

PUBLISHED BY THE SANSKRIT PRESS DEPOSITORY,
168 BARANASI GHOSHE'S STREET, JORASANKO CALCUTTA.

1888.

# अभिज्ञानशकुन्तलम् ।



या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।

नमो गणेशाय ।

ईशोऽनीशोऽपि नैव स्थितपरिलसल्लिनेलोऽक्षयश्री-
र्भोगासक्तो द्विरागोऽप्यनवमतिभ्रमो दृश्यते भोगिभिर्यः ।
पुण्यं पुंप्रीतिकारं दधदपि नितरां यस्य पुण्येंगुरोषी
मालाधत्त स्वयम्भूरपि हरतु हर सोऽशुभं सञ्चितं नः ॥
यस्याध्यापनमहिमा सञ्चारयति विबुधैस्तरङ्गधियम् ।
सोऽखिलशास्त्रविचाराचार्याभ्रान्तिं गुरुर्लयति ॥
सम्यग्दर्शनधर्मशास्त्रनिपुणो व्युत्पत्तिसम्पत्तिमान्
नानागोलविचारणैकचतुरः सिद्धान्तसिद्धे पथि ।
काव्यालङ्कृतिनाटकेषु च मतिं लीलायवन्नावजो
[illegible]
यद्बुद्धिर्लयतालरागनिचये गीतेषु न व्याहता
मध्यस्थो नृपपूरुषप्रतिनिधिर्वादेषु यश्चाभवत् ।
यः सर्वं प्रियमप्युवाच सततं आर्त्तैरनेकैः हृतो
सेनाद्यैश्च विमुच्य लोकमनुजस्त्वैन रामो जितः ॥
तस्यानुज श्रीयवचन्द्रसूनुर्विदेहजन्माऽर्जुनमिश्रवंशः ।
टीकामभिज्ञानशकुन्तलस्य श्रीकृष्णनाथः कुरुतेऽल्पजन्मा ॥
येषामेतद् दिदृक्षूणां न प्रवेशोऽस्ति नाटकम् ।
अपि प्रवेशयेदेतानेषा टीका प्रवेशिका ॥
व्याख्यायते प्रमाणेन सर्व्वं मार्गेण नादितः ।
पूर्वव्याख्याविसंवादः चान्वयस्तत प्रपञ्चतो ॥
याचे साञ्जलिबन्धोऽहं यो यो दोषोऽत्र वर्त्तते ।
तत्संस्कारश्रमभिया सर्व्वं भोमैक्ष्यतां बुधैः ॥

नान्द्यन्ते सूत्रधारः॥ अलमतिविस्तरेण। नेपथ्याभिमुखमवलोक्य॥ आर्य्ये यदि नेपथ्यविधानमवसितं तदिहागम्यताम्। (२)

नटी प्रविश्य॥ अज्ज इअह्मि। आणवेदु अज्जो को णिओओ अनुचिट्ठीअदु त्ति। (३)

सूत्र॥ आर्य्ये इयं हि रसभावविशेषदीक्षागुरो विक्रमादित्यस्य

---

रक्षतु। तथाच विष्णुपुराणे सूर्य्यो जलं मही वह्निर्वायुराकाशमेव च। दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृता इति। इदं स्रग्धरा नाम वृत्तम्। तदुक्तं चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्तमोऽपि द्वौ तद्वत् षोडशाद्यौ मृगमदमुदिते षोडशान्त्यौ तथान्त्यौ। रम्भास्तम्भोरुकान्ते मुनिमुनिमुनिभि र्दृश्यते चेत् विरामो बाले हृद्यैः कवीन्द्रैः सुतनु निगदिता स्रग्धरा सा प्रसिद्धा इति॥

(२) नान्द्यन्त इति। नाटकीयविघ्नविघातायादौ क्रियमाणाशी र्नान्दी सा चात्र या सृष्टिरित्यादिश्लोकमयी। यदाह भरतः। यद्यप्यङ्गानि भूयांसि पूर्व्वरङ्गस्य नाटके। तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नप्रशान्तये। देवद्विजनृपादीनामाशीर्व्वादपरायणा। नन्दन्ति देवता यस्मात् तस्मान्नान्दीति कीर्त्तितेति। तदन्ते तत्पाठान्ते तां पठित्वेत्यर्थः। तदुक्तं मालतीमाधवटीकायाम्। सूत्रधारः पठेन्नान्दीं मध्यमस्वरमाश्रित इति। सूत्रधारो नाटकीयकथासूत्रसूचको नटप्रधानभूतः पुमान् चाहेति शेषः। एवमुत्तरत्रापि सर्व्वत्र कर्त्तृपदमाहेति क्रियया अध्याहर्त्तव्यया योजनीयम्। उक्तं हि नाटकीयकथासूत्रं प्रथमं येन सूच्यते। रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते इति। तद्वचनमाह अलमिति। अतिविस्तरेण वाग्विस्तरेण अलं स वारणीय इत्यर्थः। वारणार्थेन तृतीया। विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तर इति अलं भूषणपर्य्याप्तिशक्तिवारणवाचकमिति चामरः। नेपथ्यं वेशरचना। आकल्पवेशौ नेपथ्यमित्यमरः। अत्र तु तदर्थं व्यवधानवत्स्थानं लक्ष्यते। तदभिमुखं यथा स्यात् तथावलोक्य दृष्ट्वा स एव पुनराह आर्य्ये इति। आर्य्ये श्रेष्ठे सा चात्र नटी बोध्या उत्तरत्र नटीप्रवेशात्। नेपथ्यविधानं वेशरचनं अवसितं अवसानं गतं समाप्तमिति यावत्। तत् तदा॥

(३) नटीति। प्रविश्य रङ्गभूमिमिति शेषः। अज्जेत्यादि। आर्य्य इयमस्मि। आज्ञापयत्वार्य्यः को नियोगोऽनुष्ठीयतामिति। इयमस्मि अहमिति शेषः। को नियोगो निदेशो अनुष्ठीयतां मयेति शेषः। इति आज्ञापयतु आर्य्यः॥

(४) सूत्रेति। रसाः शृङ्गारादयः। भावयन्ति रसान् जनयन्तीति भावा रसाङ्ग-भूताः। यदाह भरतः। नानाभिनयसम्बद्धान् भावयन्ति रसानिमान्। यस्मात् तस्मादमी

अभिरूपभूयिष्ठा परिषत्। अस्यां च कालिदासग्रथितवस्तुना नवेनाभिज्ञानशकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिस्तत् प्रतिपात्रमाधीयतां यत्नः। (४)

नटी॥ सुविहिदप्पओअदाए अज्जस्स ण किम्पि परिहाइस्सदि। (५)

सूत्र॥ सस्मितम्॥ आर्ये कथयामि ते भूतार्थम्। (६)

आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः॥ (७)

---

भावा विज्ञेया नाटकोक्तिष्विति। तथा पुराणे नाट्यशास्त्रे च द्वयोस्तु रतिभावयोः। समानार्थं तया चात्र द्वयमैक्येन लक्ष्यत इति। तद्विशेषस्य तत्प्रभेदस्य दीक्षागुरोरुपदेष्टुर्विक्रमादित्यस्य उज्जयिनीनाथस्य हि यस्मादियं अभिरूपभूयिष्ठा पण्डितबहुला। प्राज्ञरूपसुरूपाभिरूपा बधमनोज्ञयोरित्यमरः। परिषत् सभा। तथा अस्यां परिषदि कालिदासेन ग्रथितं प्रबद्धं वस्तु पदार्थो यत्र तत् तेन। भावे पदार्थो धर्मः स्यात् सत्त्वं तत्त्वञ्च वस्तु चेति त्रिकाण्डशेषः। नवेनाचिरभूतेन अभिज्ञानं शकुन्तलाया यत्र तदभिज्ञानशकुन्तलम् तन्नामधेयेन तदाख्येन नाटकेनास्माभिरुपस्थातव्यमुपासितव्यञ्च तत् तस्मात् प्रतिपात्रं प्रतिव्यक्ति यत्न आधीयतामुत्पाद्यताम्। अत्र शकुन्तलाज्ञितत्व सुप्रत्यक्षा शकुन्तलापद तानव्यादि न तु कुन्तलप्रयुक्तिमतीति व्युत्पत्त्या दन्त्यादि। तदाह महाभारते। (निर्जने तु वने यस्मात् शकुन्तैः परिरक्षिता। शकुन्तलेति नामास्याः कृतञ्चापि ततो मयेति॥)

(५) नटीति। सुविहिदेत्यादि। सुविहितप्रयोगतया आर्यस्य न किमपि परिहास्यते। आर्यस्य भवतः सुविहितप्रयोगतया सुशिक्षितप्रयोगतया किमपि नाट्यादिकं न परिहास्यते च्युतं स्यात्॥

(६) स्मितेति। सस्मितं मन्दहाससहितं। ते इति सम्बन्धमात्रविवक्षाया षष्ठी। भूतार्थं सुचिताये। भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूचिते इति मेदिनी॥

(७) तमेवार्थमाह आपरितोषादिति। विदुषां धीमतामापरितोषात् सन्तोषपर्यन्तं प्रयोगविज्ञानं अभिनयनैपुण्यं आत्मन इति शेषः। साधु उत्कृष्टं न मन्ये। शिक्षितानां विज्ञानां। प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता इत्यमरः। बलवत् शक्ताभिरवेति प्रौढ्या सन्निश्चयमपि चेतश्चित्तं आत्मनि स्वसमीपे अप्रत्ययं अविश्वसनीयम् यद्वा मन्ये शिक्षितानामतीव शिक्षितानामपि चेतः आत्मनि अप्रत्ययं न विश्वासयत्। अत्र सामान्येन विशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः। तदुक्तं काव्यप्रकाशे। सामान्यं वा विशेषो वा

नटी॥ सविनयम्॥ एवमेदं । अनन्तरकरणीअं दाणीं अज्जो आणवेदु । (८)

सूत्र॥ आर्य्ये किमन्यदस्याः परिषदः श्रुतिप्रमोदहेतोर्गीतात् करणीयमस्ति । (९)

नटी॥ अथ कदमं उण उदुं अधिकरिअ गाइस्सं । (१०)

---

तदनेन समर्थ्यते ।० यत्र सोऽर्थान्तरन्यासः साधर्म्म्येणेतरेण वेति । इयमार्य्या नाम जातिः । यदुक्तं । पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा । वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृता भवेदिति । यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या इति च । अत्र गणनियमो यथा लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः । षष्ठो जश्च न लघु वा प्रथमार्द्धे नियतमार्य्यायाः॥ षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः ।० चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥ आर्य्यायाः पूर्व्वार्द्धे सप्त गणाः स्युरन्ते गुरुवर्ण एकः । तत्र विषमे प्रथमतृतीयपञ्चमसप्तमरूपे मध्यगुरुर्गणो न स्यात् । षष्ठो गणो मध्यगुरुर्लघुचतुष्टयात्मको वा स्यात् । तत्र षष्ठे न्ले लघुचतुष्टयात्मके सति द्वितीयलघुवर्णादारभ्य सयति पदं प्रवर्त्तते । परके सप्तमे लघुचतुष्टयात्मके सति प्रथमलघुवर्णादारभ्य पदं प्रवर्त्तते । तथा परार्द्धे पञ्चमगणे लघुचतुष्टयात्मके सति तत्रापि तस्मात् प्रथमाक्षरादारभ्य पदप्रवृत्तिः स्यात् । तथा चरमार्द्धे षष्ठो गण एकलघुवर्णात्मक एव स्यात् न पूर्व्वार्द्धवत् मध्यगुरुः सर्व्वलघुर्वा स्यादित्यर्थः ।० एवमेव पिङ्गलाचार्य्यसूत्रवृत्तौ हलायुधः । अतो व्याख्यानान्तरमनुपादेयम् । गणस्तु चतुर्मात्रात्मकः पञ्चविधः । ते यथा सर्व्वान्त-मध्यादिगुरवोऽत्र चतुष्कलाः । गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु विश्रुता इत्युक्ताः । सर्व्वगुरु-र्गुरुवर्णद्वयम् । अन्तगुरुर्गुरुवर्णान्तं लघुवर्णद्वयम् । मध्यगुरुर्लघुवर्णद्वयपुटितो गुरुवर्णः । आदिगुरुर्गुरुवर्णपूर्व्वकं लघुवर्णद्वयम् । तथा लघुवर्णचतुष्टयात्मकः । गकारादिसङ्केतः पश्चाद्वक्ष्यते । एषा रीतिरन्यत्राप्यनुसन्धातव्या॥

(८) नटीति । सविनयं विनीतभावमवलम्ब्येति भावः । एवमेदमित्यादि । एवमिदं । अनन्तरकरणीयमिदानीमार्य्य आज्ञापयतु । एवमिदमिति सूत्रधारोक्तिस्वीकारः । अनन्तर-करणीयमुत्तरकालकर्त्तव्यम्॥

(९) सूत्रेति । अस्याः परिषदः श्रुतिप्रमोदहेतोः श्रवणानन्दहेतोर्गीतादन्यत् किं करणीयमस्ति तदेव कर्त्तव्यमिति भावः॥

(१०) नटीति । अथेत्यादि । अथ कतमं पुनर्ऋतुमधिकृत्य गास्यामि । अथशब्दः प्रश्न-द्योतकः । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ इत्यमरः । कतमं कं निर्द्धारणे डतमः॥

सूत्र॥ आर्य्ये नन्विममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्म समयमधिकृत्य गीयताम्। सम्प्रति हि। (११)

सुभगसलिलावगाहा: पाटलसंसर्गसुरभिवनवाता:।
प्रच्छायसुलभनिद्रा दिवसा परिणामरमणीया:॥ (१२)

नटी॥ तह॥ इति गायति। (१३)

खणचुम्बिआइं भमरेहिं उह सुउमारकेसरसिहाइं।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं॥ (१४)

---

(११) सूत्रेति। ननुरनुमार्थं। प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वित्यमर। अचिरप्रवृत्त सम्प्रत्यापतितम उपभोगक्षममुपभोगार्हमिम ग्रीष्मसमयमेव तावदधिकृत्य गीयताम्। ग्रीष्मप्रवृत्ति दर्शयति सम्प्रति ह्रीति। हि यस्मात् सम्प्रतीदानीं दिवसा एवमेवमिति श्लोकीयेनान्वय॥

(१२) सुभगेति। सुभगोऽतिप्रिय सलिलेषु जलेष्ववगाहो मज्जन येषु ते तथा पाटलस्य तत्कुसुमस्य संसर्गेण सुरभि सुगन्धि र्वनवातो येषु ते तथोक्ता तथा प्रकृष्टा छाया यत्र तत प्रच्छाय तत्र सुलभा अयत्नागमा निद्रा येषु ते तथाभूता। तथा परिणामे परिपाके शेषदशायामिति यावत रमणीया मनोरमा दिवसा वर्त्तन्त इति शेष। इयमार्य्या जाति। अत्र पूर्वार्द्धे षष्ठगणस्य लघुवर्णचतुष्टयात्मकत्वात् द्वितीयलघु वर्णादारभ्य पदान्तरप्रवृत्ति। प्रथमलघुवर्णे तु पदान्तरीयो नियमित। तत्प्रमाण तु आर्य्यालक्षणे प्राग द्रष्टव्यम॥

(१३) नटीति। तह तथा। स्वीकारार्थं॥

(१४) गानमाह क्षणेति। क्षणचुम्बितानि भ्रमरै ईषत् सुकुमारकेसरशिखानि। अवतंसयन्ति दयमाना प्रमदा शिरीषकुसुमानि॥ क्षण क्षणे क्षणे अथवा क्षणेन निर्व्यापारस्थित्या भ्रमरैश्चुम्बितानि आस्वादितानि। निर्व्यापारस्थितौ कालविशेषोत्सवयो क्षण इत्यमर। तथा सुकुमारा कोमला केसराणा किञ्जल्कानां शिखा येषां तानि। सुकुमारन्तु कोमलमित्यमर। शिरीषकुसुमानि प्रमदा युवतयो दयमाना सदया सत्य। औकुमार्य्यादनतिबलयोगेनेयर्थं। अवतंसयन्ति कर्णपूरीकुर्वन्ति प्रमदा। पुंस्यवतंसो द्वौ कर्णपूरेऽपि शेखर इत्यमर। इयमुद्गाथा नाम गीति। उक्ता सा पिङ्गले। पुव्वद्धे उत्तद्धे मत्ता तीसत्ति सुभअम भणिआ। सो उग्गाहो वुत्तो पिङ्गलकइदिट्ठ सट्ठिमत्तङ्गो॥ पूर्वार्द्धे उत्तरार्द्धे मात्रास्त्रिंशदिति सुभगक भणिता। सा उद्गाथा उक्ता पिङ्गलकविदृष्टषष्टिमात्राङ्गा इत्यर्थ:॥

सूत्र॥ आर्य्ये साधु गीतम्। अहो रागापहृतचित्तवृत्तिरालिखित इव विभाति सर्व्वतो रङ्गः। तदिदानीं कतमं प्रयोगमाश्रित्यैनमाराधयामः। (१५)

नटी॥ णं पढमं ज्जेव्व अज्जेण आणत्तं अहिण्णाणसउन्तलं णाम अउव्वं णाडअं अहिणीअदु त्ति। (१६)

सूत्र॥ आर्य्ये सम्यगनुबोधितोऽस्मि। अस्मिन् क्षणे खलु विस्मृतं मयैतत्। कुतः (१७)

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा॥ (१८)

इति निष्क्रान्तौ।

प्रस्तावना। (१९)

---

(१५) सूत्रेति। अहो विस्मये रङ्गो नाट्यसभा रागेण स्वरविशेषेणापहृता चित्तवृत्तिर्मनोवृत्तिर्यस्य स तथोक्तः सन् आलिखितश्चित्रित इव सर्व्वतः सर्व्वत्र विभाति प्रकाशते। तत् तावत् कतमं कं प्रयोगं नाटकाभिनयमाश्रित्य एनं रङ्गम् आराधयाम अनुरञ्जयाम वयमिति शेषः॥

(१६) नटीति। णमित्यादि। ननु प्रथममेवार्य्येणाज्ञप्तम् अभिज्ञानशकुन्तलं नाम अपूर्व्वं नाटकमभिनीयतामिति। ननुरनुप्रश्ने। ननुशब्दो विनिश्चये अनुप्रश्ने इति मेदिनी। अपूर्व्वं नवम्। इति आज्ञप्तमित्यन्वयः॥

(१७) सूत्रेति। सम्यगनुबोधितः सम्यक् स्मारितः। त्वयेति शेषः। अस्मिन् क्षणे खलु अस्मिन् क्षण एव हेतुमाह कुत इति॥

(१८) तवेति। अतिरंहसा वेगातिशयिना सारङ्गेण मृगेण। चातके हरिणे पुंसि सारङ्गः शबले त्रिष्वित्यमरः। एष राजा दुष्मन्त इव हारिणा मनोहारिणा तव गीतरागेण गीतस्वरेणाहं प्रसभं बलात् हृतोऽपहृतचित्तवृत्तिरस्मि। राजपक्षे हृतः सुदूरं प्रापित इत्यर्थः। इदमनुष्टुभं नाम वृत्तम्। तदुक्तं पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः। षष्ठं गुरु विजानीयादित्यनुष्टुभलक्षणमिति॥

(१९) इतीति। निष्क्रान्तौ रङ्गभूमेरपगतौ नटीनटाविति शेषः। प्रस्तावना प्रस्तुतोद्भावनम्। तल्लक्षणं यथा। नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सेति। सा चात्रावलगिताख्या। यदुक्तं यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैरिति। समाप्तिगात् नाट्योद्भावनात्॥

सविस्मयम्॥ कथमनुपतत एव मे प्रयत्नप्रेक्षणीय संवृत्तोऽयं मृग। (२५)

सूत॥ उद्घातिनी भूमिरिति रश्मिसंयमनात् रथस्य मन्दीभूतो वेग तेनैष मृगो विप्रकृष्टः संवृत्त। सम्प्रति हि समदेशवर्त्ती न ते दुरासदो भविष्यति। (२६)

राजा॥ तेन हि मुचप्रन्तामभीषव। (२७)

सूत॥ यथाज्ञापयत्यायुष्मान्॥ इति भूयो रथवेग रूपयित्वा॥ आयुष्मन् पश्य-पश्य। एते हि (२८)

मुक्तेषु रश्मिषु निरायतपूर्व्वकायाः
८ निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः।
आत्मोद्धतैरपि रजोभिरलङ्घनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः॥ (२९)

---

उच्च प्लुत भम्फगति यस्य स तथाभूतत्वात्। उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे इत्यमर। वियति व्योमाकाशे बहुतर उर्व्यां भुवि स्तोकमल्प प्रयाति गच्छति पश्य। इद स्रग्धरा नाम वृत्तम्। अत्र स्वभावोक्तिरलङ्कार। तदुक्तं दण्डिना। नानावस्थ पदार्थाना रूप साक्षाद् विवृण्वती। स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिरिति॥

(२५) सविस्मयमिति। विस्मयसहितमाहेत्यर्थ। प्रयत्नप्रेक्षणीय कृच्छ्राद्निरीक्षणीय। संवृत्त सम्भूत॥

(२६) सूत इति। उद्घातयति पादस्खलन जनयतीत्युद्घातिनी निम्नोन्नता। उद्घात कथ्यते पादस्खलन इति विश्व। इति हेतो। रश्मिसंयमनात् प्रग्रहाकर्षणात्। किरण प्रग्रहौ रश्मी इत्यमर। मन्दीभूतोऽल्पीभूत। मूढाल्पापटुनिर्भाग्या मन्दा इत्यमर। विप्रकृष्टो दूरवर्त्ती। सम्प्रति इदानीम्। समदेशवर्त्ती समतलभूमिवर्त्ती रथ इति शेष। दुरासदो दुष्प्राप॥

(२७) राजेति। अभीषव प्रग्रहा। अभीषु प्रग्रहे रश्मावित्यमर॥

(२८) सूत इति। यथेत्यादि तत् क्रियते इति शेष। इति उक्त्वेत्यर्थ। भूयो रथवेगमतिशयेन रथवेगम्। रूपयित्वा रूपयित्वा। एते इति श्लोकीयवाजिन इति विशेषणम्॥

(२९) मुक्तेष्विति। रश्मिषु प्रग्रहेषु मुक्तेषु शिथिलीकृतेषु सत्सु, निरायतो ऽतिदीर्घ पूर्व्वकायो देहपूर्व्वभागो येषा ते तथोक्ता। तथा प्रसरता दीर्घसमयोचित

राजा॥ सहर्षम्॥ नूनमतीत्य हरिणं हरयो वर्त्तन्ते। यतः (३०)

यदालोके सूक्ष्मं व्रजति सहसा तद् विपुलता
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद् वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात् ॥ (३१)

---

दक्षिणवाताहितोत्तराभिमुखवेगयता खेषां खुरोत्थाना रजसा पांसूनामपि अलङ्घ्या अनतिक्रमणीया अस्माभिरुत्तराभिमुखगमनादेतेन विशेषणेन वाताधिको वेगो दर्शितः । तथा निष्कम्पा वेगातिशयात् स्थिरीभूतास्तामराणां शिरोगतानां शिखा अग्राणि येषां ते । तथा उन्नता अपगता कर्णानां शङ्का अवनतयो येषां ते ऊर्द्धीकृतकर्णा इति यावत् । ते तव एते वाजिनस्त्वारस्तुरगा वर्त्मनि मार्गे धावन्ति नु किं तरन्ति प्लवन्ते इति पश्य पश्येति पूर्व्वेणान्वयः । अत्र निष्कम्पचामरशिखा निभृतोर्द्धकर्णा धावन्त्यमी मृगजवाक्षमयेव रथ्या

सूत ॥ यथेन व्यापादम्। (३२)

राजा ॥ शरसन्धानं नाटयति॥ (३३)

नेपथ्ये ॥ भो भो राजन् आश्रमस्त्वगोऽय न हन्तव्यो न हन्तव्यः। (३४)

सूत ॥ आकर्ण्य अवलोक्य च॥ आयुष्मन् अस्य खलु ते वाणपातपथवर्त्तिन कृष्णसारस्यान्तरायौ तपस्विनौ संवृत्तौ। (३५)

राजा॥ ससम्भ्रमम्॥ प्रगृह्यन्तामभीषवः। (३६)

सूत ॥ यथाज्ञापयत्यायुष्मान्॥ इति तथा करोति॥ (३७)

॥ ततः प्रविशति सशिष्यो वैखानसः ॥ (३८)

वैखा॥ हस्तमुद्यम्य॥ भो भो राजन् आश्रमस्त्वगोऽयं न हन्तव्यो न हन्तव्यः (३९)

---

अत्र प्रथमपादार्थं पुरोवर्त्तिविषय द्वितीयतृतीयपादार्थौ पश्चाद्वर्त्तिविषयाविति कश्चित्। वस्तुतो द्वितीयतृतीयपादाभ्यां पार्श्वस्थ वर्ण्यते। इद युक्तरूपं अनुरूपं नाम वृत्तम्। तदुक्तम्। एवगुणोपेतं ... कलितकमले मध्ये गुरवस्ततो न सार्व्वभौम पुत्रमाप्नुहि लभस्व। छन्दोभङ्गप्रसक्तौ गुरुग्रन्थोऽत्र ह्रस्वादि। तथाच विश्वः। प्राज्यपरागयो। पुरु स्वर्लोकल्पयोरिति। अन्यत्र दीर्घादिरपि दृश्यते तथाच मत्स्यपुराणम्। तस्मादेव च राजर्षे शर्मिष्ठा वार्षपर्व्वणी। द्रुह्युञ्चानुञ्च पूरुञ्च त्रीन् कुमारानजीजनदिति। अतएव वक्ष्यति सेयपूरुम् वाप्नुहीति॥

(४५) इतर इति। इतरो वैखानसशिष्य। सर्व्वथा मार्गमित्यर्थ। सर्व्वथा हेतुमार्गयोरिति मेदिनी॥

(४६) राजेति। प्रतिगृहीत लब्धम्॥

(४७) वैखेति। समिधा अग्नियकाष्ठानामाहरणाय वय प्रस्थिता गच्छाम। वर्त्तमाने क्त। अविशेषणसामान्यद इति बहुवचनम्। अनुमालिनीतीर मालिन्या नद्यास्तीरस्य समीपे। सामीप्यार्थे ऽव्ययीभाव। शकुन्तलयैव साधिदैवत साधिष्ठातृजम। धान्येन धनवानितिवत् शकुन्तलयेत्यभेदे तृतीया। एषोऽस्माकं गुरोरुपाध्यायस्य कण्वस्य तदाख्यस्य कुलपते मुण्डकवालाध्यापकस्य आश्रमो मठश्च दृश्यते। मठश्छात्त्रादिनिलयो मठादौ चाश्रमोऽस्त्रियामिति रुद्र। चेद् यदि अन्यकार्यस्य कर्मान्तरस्यातिपातोऽतिक्रमो न स्यात् तत् तदा अत्र आश्रमे प्रविश्य अतिथिसत्कारोऽतिथिपर्य्या प्रतिगृह्यताम। उत्थाह यित्वमाह अपि चेति॥

(४८) धर्म्या इति। तप एव धर्म येषां ते तपोधनास्तपस्विनस्तेषां प्रतिहता अप

राजा ॥ अपि सन्निहितोऽत्र कुलपतिः ॥ (४९)

वैखा ॥ इदानीमेव दुहितरं शकुन्तलामतिथिसत्कारायादिश्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः (५०)

राजा । भवतु तामेव द्रक्ष्यामि । सा खलु विदितभक्तिं मां महर्षेः निवेदयिष्यति ॥ (५१)

वैखा ॥ साधयामस्तावत् ॥ इति सशिष्यो निष्क्रान्तः । ५२)

राजा ॥ सूत चोदयाश्वान् पुण्याश्रमदर्शनेनात्मानं पुनीमहे । (५३)

सूतः ॥ यदाज्ञापयत्यायुष्मान् ॥ इति भूयो रथवेगं रूपयति (५४)

---

गता विघ्ना यासां तास्तथोक्ताः धर्म्या धर्मादनपेताः क्रियाविहितकर्माणि समवलोक्य सम्यग् दृष्ट्वा मौर्व्यां गुणस्य यः किणस्तदाघातजनितशुष्कव्रणः । घांटा इति यस्य प्रसिद्धिः । सोऽङ्कश्चिह्नं यत्र स तथाभूतो मे भुजो बाहुः कियद् रक्षति इति ज्ञास्यसि अनुभविष्यसि । किणः शुष्कव्रणेऽपि चेति त्रिकाण्डशेषः । इयमार्या । अत्र द्वितीयचतुर्थपादान्तगयोर्लघ्वोरपि वर्णयो गुरुत्वमङ्गीकर्त्तव्यम् । तदाह । सानुस्वारश्च दीर्घो च विसर्गी च गुरुर्भवेत् । वर्णः संयोगपूर्व्वश्च लघुः पादान्तगोऽपि वेति ॥

(४९) राजेति । अपि प्रश्ने । गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपीत्यमरः । कुलपतिः कण्वः । सन्निहितोऽवस्थितः । कुलपतिलक्षणं यथा । "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृत इति ॥

(५०) वैखेति । दुहितरं शकुन्तलामतिथिसत्काराय अतिथिसपर्य्यायै आदिश्य अस्या दुहितुः प्रतिकूलमनिष्टकृद् दैवं पौर्व्वदेहिककर्मदोषं । तथाचोक्तम् । तत्र दैवमभिव्यक्तं पौरुषं पौर्व्वदेहिकमिति । शमयितुं स्वस्त्ययनादिभिर्विहन्तुं इदानीमेव सोमतीर्थं गतः । मत्स्यपुराणम् । प्रतिकूलं यदा दैवं पौरुषेण विहन्यते । मङ्गलाचारयुक्तानां नित्यमुत्थानशोलिनामिति ॥

(५१) राजेति । भवतु तदिति शेषः । तां शकुन्तलां । सैव शकुन्तलैव । विदितभक्तिरवगतभक्तिं मामेति शेषः । महर्षये कण्वाय । अत्र भक्तिशब्दस्य भावप्रत्ययान्तत्वात् तस्मिन् परे विदितशब्दस्य पुंवद्भावः सुघटः । कर्मव्युत्पन्नभक्तिशब्दविशेषणस्यैव तन्निषेधात् ॥

(५२) वैखेति । साधयामो गच्छामः । प्रायेण नाटककृतः साधि गमेः स्थाने प्रयुञ्जत इति दर्शनात् ॥

(५३) राजेति । चोदय प्रेरय । पुनीमहे पवित्रीकुर्मः ॥

(५४) सूत इति । भूयः पुनः । भूयांश्चित् बहुतरे पुनरर्थे स्वदोऽव्ययमिति मेदिनी ॥

राजा ॥ समन्तादवलोक्य ॥ सूत अकथितोऽपि ज्ञायत एवायमाभोग-स्तपोवनस्य । (५५)

सूत ॥ कथमिव । (५६)

राजा ॥ किं न पश्यति भवान् । इह हि । (५७)

नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखा निष्यन्दरेखाङ्किताः (५८)

अपि च । (५९)

---

(५५) राजेति । समन्तात् सर्वत्र । अकथितोऽपि केनापि तपोवनमिदमित्यनुपदिष्टोऽपि । ज्ञायतेऽनुमीयते । आभोग परिपूर्णता । आभोग परिपूर्णतेत्यमर । तपसे मुनिभिराश्रित वन तपोवन तस्य ॥

(५६) सूत इति । कथमिव किं रूपमिति प्रश्न ।

(५७) राजेति । न पश्यति तपोवनधर्म्मानिति शेष । हि यस्मात् इह वने एते एवमेवमिति श्लोकीयेनान्वय ॥

(५८) नीवारा इति । तरूणां वृक्षाणामध अधरस्मिन् नीवारास्तृणधान्यानि शुकाना पक्षिविशेषाणा ये कोटरार्भका कोटरस्थशावकास्तेषां मुखेभ्यो भ्रष्टा विगलिता दृश्यन्त इति शेष । तपस्विभिरेवानायासिकतया नीवारा उप्यन्ते । क्वचिदुपला प्रस्तरा इङ्गुद्यास्तापसतरो फलानि भिन्दन्तीति इङ्गुदीफलभिद सूच्यन्ते अनुमीयन्ते यत प्रस्निग्धास्तैलवन्त । इङ्गुदी तापसतरुरित्युक्तेस्तपोवनानुमानम् । विश्वासोपगमादाजन्मविश्वासलाभात् मृगा अभिन्ना विघ्नमप्राप्ता यथापूर्वं निद्धारिता इति यावत् गतयो येषा ते तथोक्ता सन्त शब्द रथध्वनि सहन्ते असम्भ्रम शृण्वन्ति । विश्रब्धमृगसञ्चारादपि सानुमानात् तपोवनानुमानम् । तथा तोयाधाराणा जलाशयाना पन्थानश्च वल्कलाना परिहितवृक्षत्वचा शिखानाञ्च निष्यन्देन जलधारया रेखाङ्किता सरेखा दृश्यन्त इति शेष । एतेन स्नातोत्तीर्णतापसगति र्दर्शिता । इद शार्दूलविक्रीडित नाम वृत्तम । तदुक्तम । आद्याश्चेदु गुरवस्त्रय प्रियतमे षष्ठस्तथा चाष्टम सन्त्येकादशतस्त्रयस्तदनु चेदष्टादशाद्यौ तत । मार्त्तण्डैर्मुनिभिश्च यत्र विरति पूर्णेन्दुबिम्बानने तद्वृत्तं प्रवदन्ति काव्यरसिका शार्दूलविक्रीडितमिति ॥

(५९) मनस्यचोपपत्तिभिरित्यभिधानादन्यदपि दर्शयितुमाह अपि चेति । अन्यदप्यर्थ ॥

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूलाः
भिन्नो रागः किशलयरुचामाज्यधूमोद्गमेन ।
एते चार्व्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति ॥ (६०)

सूत ॥ सर्व्वमुपपन्नम् । (६१)

राजा ॥ स्तोकमन्तरं गत्वा ॥ आश्रमोपरोधो माभूत्, तदिहैव रथं स्थापय यावदवतरामि । (६२)

सूतः ॥ धृताः प्रग्रहाः, अवतरत्वायुष्मान् । (६३)

राजा ॥ अवतीर्य्य आत्मानमवलोक्य च ॥ सूत ! विनीतवेशेन प्रवेष्टव्यानि तपोवनानि तदिमानि तावद् गृह्यन्तामाभरणानि धनुश्च ॥ इति सूतस्यार्पयति ॥ (६४)

---

(६०) कुल्याम्भोभिरिति । पवनचपलैर्वायुना तरङ्गितैः कुल्यानां कृत्रिमाल्पसरिताम्भोभिः सलिलैः शाखिनस्तोरभूमीरुहा धौतमूलाः प्रक्षालितपादा भवन्तीति शेषः । कुल्याल्पा कृत्रिमा सरिदित्यमरः । तथाविधजलप्रणाल्यस्तपोवन एव जलनिर्गमाय कल्प्यन्त इति भावः । तथा आज्यस्य हुतहविषो धूमोद्गमेन किशलयरुचां पल्लवप्रभानां रागो रक्तिमा भिन्नो भेदं गतः । रागः क्लेशादिके रक्ते मात्सर्य्ये लोहितादिष्विति शाश्वतः । तथा एते हरिणशिशवो मृगशावकाश्च नष्टाशङ्का आजन्माप्राप्तपीडनतया निर्भीकाः सन्तः छिन्नो मुनिभिः कृत्तो दर्भाङ्कुरः कुशाङ्कुरो यस्यां सा तथोक्तायामुपवनभुवि अर्व्वागन्तिकं समीपे मन्दमन्दं स्वैरं स्वैरं चरन्ति । पूर्व्वत्र मृगाणामत्र तु मृगशिशूनां यथापूर्व्वगति-दर्शितेत्यपौनरुक्त्यम् । इदं मन्दाक्रान्ता नाम वृत्तम् । तदुक्तम् । चत्वारः प्राक् सुतनु गुरवो द्वौ दशैकादशौ चेन्मुख्यौ वर्णौ तदनु कुसुमामोदिनि द्वादशान्त्यौ । तद्वदन्त्यौ युगरसहयै-र्यत्र कान्ते विरामो मन्दाक्रान्ता प्रबलकवयस्तन्वि तां सङ्गिरन्ते ॥

(६१) सूत इति । उपपन्नं युक्तम् ॥

(६२) राजेति । स्तोकमल्पम् । स्तोकाल्पक्षुल्लकाः श्लक्ष्णमित्यमरः । अन्तरं तपोवनाभ्यन्तरम् । आश्रमोपरोध आश्रमपीडा । यावदवतरामि अवतरणपर्य्यन्तमित्यर्थः ॥

(६३) सूत इति । प्रग्रहा अश्वरश्मयः । वागडोर इति प्रसिद्धाः । तुलासूत्रेऽश्वादि-रश्मौ प्रग्राहः प्रग्रहोऽपि चेत्यमरः ॥

(६४) राजेति । विनीतवेशेन सभ्यवेशेन अनुग्रवेशेनेति यावत् । प्रवेष्टव्यानि गन्तव्यानि । आभरणानि किरीटकुण्डलादीनि । सूतस्येति सम्बन्धमात्रविवक्षायां षष्ठी ॥

सूतः ॥ गृह्णाति । (६५)

राजा ॥ यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्त्तिष्ये तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः । (६६)

सूतः ॥ यथाज्ञापयत्यायुष्मान् ॥ इति निष्क्रान्तः । (६७)

राजा ॥ परिक्रम्यावलोक्य च ॥ इदमाश्रमपदं यावत् प्रविशामि । (६८)

प्रविश्य प्रवेष्टकेन निमित्तं सूचयित्वा ॥ अये (६९)

१७ शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्व्वत्र ॥ (७०)

नेपथ्ये ॥ इदो इदो पिअसहीओ । (७१)

राजा ॥ कर्णं दत्त्वा ॥ अये दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते यावदत्र गच्छामि । (७२) परिक्रम्यावलोक्य च ॥ अये एतास्तपस्विकन्यकाः

---

(६५) सूत इति । गृह्णाति आभरणादीनीति शेषः ॥

(६६) राजेति । यावत् यावता कालेन । प्रत्यवेक्ष्य तत्त्वावधारणेनावलोक्य । निवर्त्तिष्ये प्रत्यागमिष्यामि । तावत् तं कालं व्याप्य । आर्द्रपृष्ठाः आर्द्राणि पृष्ठस्थवस्त्रापसारणेनोष्मापगमात् शीतलानि पृष्ठानि येषां ते तथोक्ताः ॥

(६७) सूत इति । सुगमम् ॥

(६८) राजेति । परिक्रम्य इतस्ततः सञ्चर्य्य । आश्रमपदं आश्रमस्थानम् । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः । यावत् तदा ॥

(६९) प्रविश्येति । प्रवेष्टकेन बाहुना । भुजबाहू प्रवेष्टो दोरित्यमरः । निमित्तं शुभलक्षणं स्पन्दनमिति यावत् । निमित्तं हेतुलक्ष्मणोरित्यमरः । सूचयित्वा रूपयित्वा । अये इति सम्भ्रमे । अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि चेति मेदिनी ॥

(७०) शान्तमिति । इदमाश्रमपदमाश्रमस्थानं शान्तं शान्तिरसास्पदं न त्वादिरसाश्रितमिति भावः । बाहुर्दक्षिणो भुजश्च स्फुरति स्पन्दते इह आश्रमे कुतो हेतोरस्य दक्षिणबाहुस्फुरणस्य फलं स्त्रीलाभरूपं स्यात् । तथाचोक्तमद्भुतसागरे । वामेतरभुजस्पन्दो वरस्त्रीलाभसूचक इति । सम्भावनामपि दर्शयति अथवेति । भवितव्यानामवश्यम्भाविनामर्थानां सर्व्वत्र द्वाराणि आपतनोपाया भवन्ति सन्ति । भवितव्यास्तिसमानार्थो न लाक्षणिकः । इयमार्य्या जातिः ॥

(७१) नेपथ्य इति । इदं इत्यादि । इत इतः प्रियसख्यौ । इत इतः अस्माकमस्यां दिशि पीडाया द्विर्वचनम् । आगच्छतमिति शेषः ॥

(७२) राजेति । कर्णं दत्त्वा श्रोतुं कर्णं नियोज्य । अये इति सम्भ्रमे । दक्षिणस्या

स्वप्रमाणानुरूपैः सेचनघटैः बालपादपेभ्यः पयो दातुमित एवाभिवर्त्तन्ते । (७३) निरूप्य ॥ अहो मधुरमासां दर्शनम् । (७४)

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ (७५)

यावदेताञ्छायामिमामाश्रित्य प्रतिपालयामि ॥ इति विलोकयन् स्थितः । (७६)

॥ ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ॥ (७७)

एका ॥ हला सउन्तले तत्तो वि तादकस्सवस्स अस्समरुक्खआ पिअदरा त्ति तक्केमि, जेण णोमालिआ-कुसुम-परिपेलवा वि तुमं एदाणं आलवालपरिऊरणे णिउत्ता । (७८)

---

दिशीति दक्षिणेन । एनोऽपीति दक्षिणशब्दात् सप्तम्या एन । वृक्षवाटिकामुपवनम् । धिकुसमयेत्येनप्रत्ययान्तेन द्वितीया । अमात्यगणिकागेहोपवने वृक्षवाटिका इत्यमरोक्तमुपलक्षणम । आलाप आभाषणम । स्यादाभाषणमालाप इत्यमरः । यावदवधारणे । यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमरः । अत्र वृक्षवाटिका दक्षिणेन ॥

(७२) परिक्रम्येति । परिक्रम्य सञ्चर्य । दर्शनोपजातसम्भ्रमादये इति । स्वप्रमाणस्य स्वाकृतेर्गामल्पात्मभावस्य अनुरूपैः योग्यैरल्पाल्पैरिति यावत सेचनघटैः स्तवदेकार्थकलसैः । बालपादपेभ्य अप्रसूतवृक्ष्य । इतोऽत्र । अभिवर्त्तन्ते आयान्ति ॥

(७४) निरूप्येति । निरूप्य सविशेषावलोकनाद् विचार्य । अहो विस्मये । अहो ही च विस्मय इत्यमरः । आसां कन्यकानां दर्शनं मधुरं प्रियं । रसवत्स्वादुप्रियेषु मधुरोऽन्यवदिति विश्वः ॥

(७५) शुद्धान्तेति । आश्रमवासिनो वनवासिनो जनस्य इदं वपु शरीरं यदि शुद्धान्तेषु नृपाणामन्तःपुरेषु दुर्लभं दुर्लभोपमम । अदृष्टपूर्व्वत्वादीदृग्रूपस्येति भावः । अन्तःगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्चेत्यमरः । तदा खलवश्यमेव उद्यानस्य नृपोपवनस्य लता शततो वर्द्धिता इति भावः । पुमानाक्रीड उद्यानं राज्ञः साधारणं वनमित्यमरः । वनलताभिरसम्भृताभिः गुणैः सौन्दर्यादिभिः दूरीकृताः पराजिताः । अत्र निदर्शनालङ्कारः । लक्षणन्तु वक्ष्यते । इयमार्य्या ॥

(७६) यावदिति । एतास्तपस्विकन्यकाः । प्रतिपालयामि प्रतीक्षे ॥

(७७) तत इति । ततस्तस्मात् परम । यथोक्तव्यापारा सेचनघट सहन्ती ॥

(७८) एकेति । एका शकुन्तलासख्योरिति शेष । हलेत्यादि । अयि शकुन्तले

शकु॥ हला अणसूए ण केवलं तादस्स णिओओ ममावि एदेसुं सहोअरसिणेहो॥ इति वृक्षसेचनं नाटयति। (७९)

द्वितीया॥ सहि सउन्तले उदअं लम्भिदा एदे गिम्हआलकुसुमदाइणो अस्समरुक्खआ। दाणिं अदिक्कन्तकुसुमसमए वि रुक्खके सिञ्चह्म, तेन अणहिसन्धिगुरुओ धम्मो भविस्सदि। (८०)

शकु॥ हला पिअम्वदे रमणिज्जं मन्तेसि॥ इति भूयो वृक्षसेचनं नाटयति। (८१)

राजा॥ निर्व्वर्ण्य आत्मगतम्॥ कथमियं सा कण्वदुहिता शकुन्तला।(८२)

---

त्वत्तोऽपि तातकण्वस्य आश्रमवृक्षा प्रियतरा इति तर्कयामि येन नवमालिकाकुसुमपरिपेलवापि त्वम् एतेषामालवालपरिपूरणे नियुक्ता। त्वम् इति युष्मच्छब्दात् पञ्चम्यास्तस् एकत्वाधवहणात् त्वदादेश। त्वामपेक्ष्येत्यर्थ। येन तातकण्वेन। नवेति। नवमालिकाया नवमल्लिकाया कुसुमवत परिपेलवापि सुकुमारापि। पेलव कोमलमिति त्रिकाण्डशेष। एतेषा पादपानाम्। आलवालाना मूलगतपरिखाणाम्। परिपूरणे तोयैरिति शेष। हण्डे हञ्जे हलाह्वाने नीच चेटीं सखीं प्रतीति नाट्योक्तावमर॥

(७९) शकु इति। हलेत्यादि अयि अनसूये न केवल तातस्य नियोगो ममाप्येतेषु सहोदरस्नेह। नियोग आदेश सेकप्रवर्त्तक इति शेष। एतेषु पादपेषु मम एकतपोवनगर्भसम्भूततया सहोदरवत् स्नेहोऽपि सेकप्रवर्त्तक। नाटयति नाट्येन दर्शयति॥

(८०) द्वितीयेति। द्वितीया सखीत्यर्थ। सहीतुआदि। सखि शकुन्तले उदकलम्भिता एते ग्रीष्मकालकुसुमदायिन आश्रमवृक्षा इदानीमतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामस्तेन अनभिसन्धिगुरुको धर्म्मो भविष्यति। लम्भिता प्रापिता। अतीति। अतिक्रान्तोऽतिवाहित कुसुमाना पुष्पाणां समयो यैस्तान्। तेन सेकेन। अनभिसन्धिगुरुक अनभिसन्धिना प्रयोजनोद्देशाभावेन गुरु र्महान। गुरु र्महति चान्यवदिति विश्व। धर्म्म श्रेय। यदाह हारीत। यत्तु सोपध ददाति अन्यस्याविततमल्पफलमिति। सोपध प्रतिलाभेच्छया कृतम्। तथाच नारद। पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्। केवल धर्म्मबुद्ध्या तु धर्म्मदान तदुच्यत इति॥

(८१) शकु इति। हलेत्यादि। अयि प्रियवदे रमणीय मन्त्रयसे। रमणीयमिति क्रियाविशेषण। मन्त्रयसे कार्य्यमवधारयसि। भूय पुन॥

(८२) राजेति। निर्व्वर्ण्य निरीक्ष्य। निर्व्वर्णनन्तु निध्यान दर्शनालोकनेक्षणमित्यमर। आत्मगतमनतिस्पष्टम्। सा तापसाश्रमस्थिता॥

सविस्मय ॥ अहो असाधुदर्शी खलु भगवान् काण्वः । य इमामाश्रमधर्मे नियुङ्क्ते । (८३)

इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥(८४)

भवतु । पादपान्तरित एव विस्रब्धां तावदेनां पश्यामि ॥ इति तथा करोति ॥ (८५)

शकु ॥ हला अनसूए अदिपिणद्धेण वक्कलेण पिअंवदाए दढ पीडिदाम्हि ता सिढिलेहि दाव णं । (८६)

---

(८३) सविस्मयमिति । भगवान् माहात्म्यवान् । भग श्रीकाममाहात्म्यवीर्य्य-यत्नार्ककीर्त्तिष्वित्यमर । काण्वो मुनिरसाधुदर्शी चारुत्वाद्वेषी अथवा वार्द्धक्यात् साधु सुष्ठु न पश्यतीति असाधुदर्शी । य कण्व इमा रमणीयाकृति वाला आश्रमधर्मे तापस-व्रते नियुङ्क्ते प्रेरयति ॥

(८४) इदमिति । अव्याजेन छद्मना विना अच्छलेनेति यावत मनो हरतीति अव्याज मनोहरमकृत्रिमशोभासम्पन्नमिति यावत् । कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमर । इद वपु शरीर कर्म्म तप क्षम तप क्षोभ साधयितुं सम्पादयितु य ऋषिरिच्छति वाञ्छति । स ध्रुव निश्चितम् । ध्रुवो भभेदे क्लीवन्तु निश्चिते शाश्वते त्रिष्वित्यमर । नीलो-त्पलपत्रस्य इन्दीवरदलस्य धारया निशितमुखेन । खड्गादीनाञ्च निशितमुखे धारा प्रकीर्त्तित इति विश्व । शमीलता शमीशाखाम् । शमे शाखालते इत्यमर । यद्वा लताकारा शमीं छेत्तु व्यवस्यति निश्चिनोति । अत्र तादृशवपुषा तप क्षमसाधनेच्छा नीलोत्पलपत्रधारया शमीलताच्छेदनेच्छेवेति विम्बप्रतिविम्बभावपर्य्यवसानात् निदर्शनालङ्कार । सा चात्र सम्भ-वद्वस्तुसम्बन्धनिबन्धना । तदुक्त दर्पणे । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र विम्बानुविम्बत्व बोधयेत् सा निदर्शनेति । इद च शस्यविल नाम वृत्त । तल्लक्षणम् । उपेन्द्रवज्राचरणेषु सन्ति चेदुपान्त्यवर्णा लघव कृता यदि । मदोल्लसद्भ्रूजितकामकार्मुके वदन्ति व शस्यविल बुधास्तदेति । उपेन्द्रवज्रा प्रदर्शनीया ॥

(८५) भवत्विति । पादपान्तरितस्तरुव्यवहितावयव । विस्रब्धा मद्दर्शनाच्चि-ह्निमत्वेन सत्प्रयवती । येन निरवशेष विश्रम्भकथालाप श्रोष्यामीति भाव ॥

(८६) शकु इति । हलेत्यादि । अयि अनसूये अतिपिनद्धेन वल्कलेन प्रियवदया दृढ पीडितास्मि तत् शिथिलय तावदेनम । प्रियवदया अतिपिनद्धेन अतिबद्धेन वल्कलेन दृढ बलवत् पीडितास्मि पीडा लम्भितास्मि । तत् तस्मात् एन वल्कल शिथिलय शिथिल कुरु । हे सख्याख्याने जिरिनि जि ॥

अन ॥ शिथिलयति । (८७)

प्रिय ॥ सहास ॥ एत्थ दाव पओहरवित्थारइतुअं अत्तणो जोव्वणारम्भं उवालहस्स । (८८)

राजा ॥ सम्यगियमाह । (८९)

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना वल्कलेन ।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण ॥ (९०)

अथवा काममननुरूपमप्यस्या वपुषो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति । कुतः । (९१)

---

(८७) अनेति । सुगमम् ॥

(८८) प्रियमिति । एत्थेति । अत्र तावत पयोधरविस्तारहेतुकमात्मनो यौवनारम्भ मुपालभस्व । अत्र बन्धनस्य दृढीभावे पयोधरयो स्तनयो र्विस्तारहेतु वृद्धिहेतुमात्मनो यौवनारम्भ यौवनोपक्रममुपालभस्व दुर्व्वचनीयतां प्रापय । दुर्व्वाद स्यादुपालम्भ इति जटाधर ॥

(८९) राजेति । सम्यक् सतत्त्व । सतत्त्व तथ्यमृतं सम्यगिति अमर । इयं प्रियंवदा । अभिनवयौवनैवेयमिति भाव ॥

(९०) ननु प्रियंवदावचनादिदानीमेवास्या यौवनानुभवो जायते कथं स स्वत एव प्राङ्नासीदित्यत आह इदमिति । स्कन्धदेशे उपहितो दत्त सूक्ष्मग्रन्थि र्यस्य स तेन । तथा स्तनयुगस्य य परिणाहो विशालता । परिणाहो विशालतेत्यमर । तदाच्छादिना वल्कलेन तरुविशेषत्वचा हेतुना अस्या शकुन्तलाया इदमभिनवं नवीनं वपु शरीरं पाण्डु पत्राणां परिणतदलानामुदरेण गर्भेण पिनद्धं बद्धम् असम्यग् दृष्टमिति यावत् । कुसुम पुष्पमिव स्वामात्मीयाम् । स्व स्निग्धात्मीय इत्यमर । शोभां कान्तिं न पुष्यति न बिभर्त्ति । तथा च वल्कलाच्छन्नदेहतया न दृष्टिमात्रेणैव तारुण्यानुभव मागासीत् प्रियंवदोक्तेस्तु विशेषाभिनिवेशात् सम्यगवगम्यत इति भाव । अत्रोपमालङ्कार । यदुक्तं चन्द्रालोके । उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरिति । इदं मालिनीवृत्तम् ॥

(९१) यौवनाक्रान्तमानसतया जनितानुराग पुन र्वल्कलेनैवास्या शोभा समर्थ्यते अथवेति । अस्या शकुन्तलाया वपुष शरीरस्य । अननुरूपमयोग्यमपि वल्कलं पुनरलं

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥ (८२)

अपि च। (८३)

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति।
विकचसरसिजायाः स्तोकनिर्मुक्तकण्ठं
निजमिव कमलिन्याः कर्कशं वृन्तजालम्॥ (८४)

शकु ॥ (अग्रतोऽवलोक्य) ॥ सहीओ एस वादेरिदपल्लवाङ्गुलीहिं किम्पि वाहरेदि विअ मं चूअरुक्खओ ता जाव णं सम्भावेमि ॥ इति तथा करोति । (९५)

प्रिय ॥ हला सउन्तले इधज्जेव्व मुहुत्तअं चिट्ठ । (९६)

शकु ॥ किं णिमित्तं । (९७)

प्रिय ॥ तए समीवट्ठिदाए लदासनाधो विअ अअं चूअरुक्खओ पडिहादि (९८)

शकु ॥ अदो ज्जेव्व तुमं पिअम्वदत्ति भणीअसि । (९९)

राजा ॥ अवितथमाह प्रियंवदा । तथा ह्यस्याः । (१००)

---

निर्मुक्तस्त्यक्तश्च योगे मुक्तकञ्चुकभोगिनीति मेदिनी । निजं स्वीयम् । स्वके नित्ये निज त्रिष्वित्यमरः । कर्कशं कठिनं हलजालं हलसमूह इव । जालं समूह आनाय इत्यमरः । मनसि खलु किञ्चिदपि कचिभङ्गमनुरागव्यति नादधाति न जनयति । अर्लोपमालङ्कारः ॥

(९५) शकु इति । अग्रतः पुरतः । स्यात् पुरः पुरतोऽग्रत इत्यमरः । सहीओ इत्यादि । सख्यौ एष वातेरितपल्लवाङ्गुलीभिः किमपि व्याहरतीव मां चूतवृक्षः । तद् यावदेनं सम्भावयामि । वातेति । वातेन वायुना ईरिताः कम्पिताः पल्लवा एवाङ्गुलयस्ताभिः । ईड् लु कम्पगत्योरिति कविकल्पद्रुमः । व्याहरतीव वक्तीव । व्याहार उक्तिरित्यमरः । तत् तस्मात् । यावदवधारणार्थं । सम्भावयामि बहु मन्ये । तथा करोति सम्मानं करोति ॥

(९६) प्रियमिति । हलेत्यादि । अयि शकुन्तले इहैव मुहूर्त्तं तिष्ठ । मुहूर्त्तं कञ्चित् कालम् ॥

(९७) शकु इति । किं णिमित्तं । किं निमित्तं किमर्थं तिष्ठामीत्यर्थं ॥

(९८) प्रियमिति । तए इत्यादि । त्वया समीपस्थितया लतासनाथ इव अयं चूतवृक्ष प्रतिभाति । लतासनाथो लतायुक्तः । सनाथशब्दो युक्तार्थेऽन्यत्रापि श्रूयते । यथा वासवदत्तायाम् । उत्फुल्लकमलसनाथमिव गगनतलं कुर्वता इति तथा नरवाहनदत्त इव प्रियङ्गुश्यामासनाथ इत्यादि । प्रतिभाति प्रकाशते ॥

(९९) शकु इति । अदो इत्यादि । अतएव प्रियंवदेति भणयसे । भणयसे लोकैरभिधीयसे ॥

(१००) राजेति । अवितथं सत्यम् । वितथं त्वनृतं वच इत्यमरः । तदेवोप

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥ (१०१)

अन ॥ हला सउन्तले इअं सअम्बरवहू सहआरस्स तुए किदणामहेआ, वणदोसिणी त्ति णोमालिआ णं विसुमरिदासि ।(१०२)

शकु ॥ तदो अत्ताणम्पि विसुमरिस्सं । (१०३) लतामुपेत्य अवलोक्य च ॥ हला रमणीओ क्खु कालो इमस्स पादवमिहुणस्स वदिअरो संवुत्तो जेण णवकुसुमजोव्वणा णोमालिआ अअं पि बद्धफलदाए उवभोअक्खमो सहआरो ॥ इति पश्यन्ती तिष्ठति । (१०४)

---

पादयितुमाह तथा हीति । हि यस्माद् अस्याः शकुन्तलायास्तथा लताया इव । अनन्तर श्लोकीयवाक्यान्वय ॥

(१०१) अधर इति । अधरो दन्तच्छद किसलयवत् पल्लववत् रागो लोहितः यस्य स तथोक्त । पल्लवोऽस्त्री किसलयमित्यमर । तथा बाहू कोमलविटपयो सुकुमारशाखयो रनुकारिणौ सदृशौ । विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लव इति मेदिनी । तथा लोभनीयं यौवनं कुसुममिवाङ्गेषु सन्नद्धं सम्बद्धम् । अत्रोपमालङ्कार । तल्लक्षणं दर्पणे । यत्राकथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते । उपमा नाम सेति । आर्या जातिरियम ॥

(१०२) अनेति । हलेत्यादि । अयि शकुन्तले इयं स्वयम्बरवधू सहकारस्य त्वया कृतनामधेया वनतोषिणीति नवमालिका एनां विस्मृतासि । सहकारस्त्वतिसौरभरसालस्य । रसालोऽसौ सहकारोऽतिसौरभ इत्यमर । स्वयम्वरवधू स्वयंकृतास्रयेण पत्नीव । वधू स्नुषानवोढास्त्रीभार्य्यास्पृक्काङ्गनासु चेति विश्व । त्वया वनतोषिणीति कृत नामधेय नाम यस्या सा इयं नवमालिका नवमल्लिका । एनां नवमालिकाम् । विस्मृतासि स्मरणार्थत्वाद् वर्त्तमाने क्त । अत्र दृष्टो देव इतिवत् कश्चिदन्यतोऽपि कर्त्तरि क्तो वक्तव्य । यद्वा विसुमरिदेति प्राकृतत्वाद् वाचाप्रभ्र शो न दोषाय सम्बन्धेन सु विस्मरसीति व्याख्यातव्यम् ॥

(१०३) शकु इति । तदो इत्यादि । तदात्मानमपि विस्मरिष्यामि । तदा यदि वनतोषिणीं विस्मरिष्यामीत्यर्थं ॥

(१०४) लतामिति । लता वनतोषिणीम् । उपेत्य उपगम्य । हलेत्यादि । अयि अनसूये रमणीय खलु कालोऽस्य पादपमिथुनस्य रतिकर सङ्गत । येन इय नवकुसुम- यौवना नवमालिका अयमपि बद्धफलतया उपभोगक्षम सहकार । अत्र पादपपद पादेन मूलेन पिबति रसानाकर्षतीति व्युत्पत्त्या इत्यमरतासाधारण्या यौगिको नतु योगरूढ

प्रियं ॥ सस्मितम् ॥ अणसूए जाणासि किणिमित्तं सउन्तला वणदोसिणी अतिमेत्तं पेक्खदि त्ति। (१०५)

अन ॥ ण क्खु विभावेमि ता कधेहि मे। (१०६)

प्रिय ॥ जह वणदोसिणी अणुरूवेण पादवेण सङ्गदा तह अहम्पि अत्तणो अणुरूवं वरं लभेअ त्ति। (१०७)

शकु ॥ एस दे अत्तणो चित्तगदो मणोरहो। इति कलशमावर्ज्जयति ॥(१०८)

---

त्यमर। अस्य पादपमिथुनस्य पादपयुगलस्य पादपदम्पत्योरित्यपि व्यज्यते। मिथुनं दम्पती युगे इति विश्व। रमणीयो मनोरमो रतिकरो लोकानामनुरागकर पक्षे सुरतकर काल सहस्त सम्भूत। रति स्त्री स्मरदारेषु रागे सुरतगुह्ययोरिति मेदिनी। येन हेतुना इय नवमालिका नव कुसुम पुष्प पक्षे रजो यत्र तत् नवकुसुमम्। कुसुम पुष्पफलयो स्त्रीरजोनेत्ररोगयोरिति विश्व। तथाभूत यौवन वय स्वभावो यस्या सा तथोक्ता। तथा अय सहकारोऽपि बद्धफलतया फलपूर्णतया भोग्य तस्य फलवत्त्वसम्भवात्। पक्षे बद्धलाभतया। फल जातीफले सस्ये हेतुत्ये बुद्धिलाभयोरिति मेदिनी। उपभोग क्षमो लोकोपभोगयोग्य। पक्षे योषिद्भरणयक्त। भोग सुखे स्त्र्यादिभृतावहेश्च फण काययोरित्यमर। अत्र प्रस्तुते पादपयुग्मे श्लिष्टविशेषणादिभिरप्रस्तुतस्य दम्पतिभावस्य व्यवहारारोपणात् समासोक्तिरलङ्कार। यदुक्त दर्पणे। समासोक्ति समै यत्र कार्य्यलिङ्ग विशेषणै। व्यवहारसमारोप प्रस्तुतेऽन्यस्य वस्तुन इति ॥

(१०५) प्रियमिति। सस्मित स्मित सहेत्यर्थ। अणेत्यादि। अनसूये जानासि किं निमित्त शकुन्तला वनतोषिणीमतिमात्र प्रेक्षत इति। अतिमात्रमत्यर्थम्। प्रेक्षते पश्यति ॥

(१०६) अनेति। णेत्यादि। न खलु विभावयामि तत कथय मे। विभावयामि अनुभवामि। मे इति सम्बन्धमात्रविवक्षाया षष्ठी ॥

(१०७) प्रियमिति। जहेत्यादि। यथा वनतोषिणी अनुरूपेण पादपेन सङ्गता तथाहमपि आत्मनोऽनुरूप वर लभेयेति। सङ्गता कृतसङ्गमा। अनुरूप रूपस्य योग्य। वर वरणीय जन। इतिनिमित्तमिति पूर्व्ववाक्यीयेनान्वय ॥

(१०८) शकु इति। एस इत्यादि। एष ते आत्मनश्चित्तगतो मनोरथ। चित्तगतो मनोगत। मनोरथोऽभिलाष। मनोरथ कामोऽभिलाष इत्यमर। त्वमेव तथा लब्धुमिच्छसीति भाव। आवर्जयति न्युब्जयति। एस दे अत्तगदो मणोरहो इत्यन्यत्र पाठ। एष ते आत्मगतो मनोरथ इत्यर्थ ॥

अन ॥ हला सउन्तले इअं तादकण्णेण तुमं विअ सहत्थेण संवड्ढिदा माहवीलदा ता कधं इमं विसुमरिदासि। (१०९)

शकु ॥ तदो अत्ताणम्पि विसुमरिस्सं। (११०)

लतामुपेत्यावलोक्य च सहर्षम् ॥ अच्चरीअं अच्चरीअं पिअंवदे पिअं दे णिवेदेमि। (१११)

प्रिय ॥ सहि किं मे पिअं। (११२)

शकु ॥ असमए क्खु एसा आमूलादो मुउलिदा माहवीलदा। (११३)

उभे ॥ सत्वरमुपगम्य ॥ सहि सच्चं सच्चं। (११४)

शकु ॥ सच्चं किं ण पेक्खध। (११५)

प्रिय । सहर्षं निरूप्य ॥ सहि तेण हि पडिप्पिअं दे णिवेदेमि। (११६)

---

(१०९) अनेति। हलेत्यादि। अयि शकुन्तले इयं तातकण्वेन त्वमिव स्वहस्तेन संवर्द्धिता माधवीलता तत् कथमिमां विस्मृतासि। त्वमिव यथा त्वं स्वहस्तेन संवर्द्धिता तथैव माधवीलतेत्यर्थः। तदित्यादि प्रश्नः॥

(११०) शकु इति। तदो इत्यादि। तदात्मानमपि विस्मरिष्यामि। आत्मवत् कथं मयीयं विस्मरणीयेत्युत्तराभिप्रायः॥

(१११) लतामिति। अच्चरीअमित्यादि। आश्चर्यमाश्चर्यम्। प्रियंवदे प्रियं ते निवेदयामि। प्रियमाह्लादकरम्। निवेदयामि विज्ञापयामि॥

(११२) प्रियमिति। सहीत्यादि। सखि किं मे प्रियम्। सुगमम्॥

(११३) शकु इति। असमए इत्यादि। असमये खलु एषा आमूलात् मुकुलिता माधवीलता। असमये वसन्तविगमे ग्रीष्म इति यावत्। वासन्ती माधवीलतेत्यमरः। आमूलात् मूलमवधीकृत्य। आङ्मर्यादाभिविध्योरिति नियमात् तद्योगादन्यारभ्येत्युनेन पञ्चमी। मुकुलो जातोऽस्या इति मुकुलिता। इतोऽस्य जाते इति इतः। इदमेव प्रियमित्युत्तराभिप्रायः॥

(११४) उभे इति। उपगम्य लतामिति शेषः। सहीत्यादि। सखि सत्यं सत्यं। एतत् किं सत्यमिति भावः॥

(११५) शकु इति। सच्चमित्यादि। सत्यं किं न प्रेक्षध्वे। पश्यन्त्यावपि कथं मुधा पृच्छथ इति भावः॥

(११६) प्रियमिति। निरूप्य विचार्य। सहीतादि। सखि तेन हि प्रतिप्रिय

शकु ॥ किं मे पडिप्पिअं । (११७)

प्रिय ॥ आसण्णपाणिग्गहणासि तुमं । (११८)

शकु ॥ सासूयमिव ॥ एस दे अत्तणो चित्तगदो मणोरहो ता ण दे वअण सुणिस्सं । (११९)

प्रिय ॥ सहि ण क्खु परिहासेण भणामि सुदं मए तादकण्णस्स मुहादो तुह कल्लाणसूअअं एदं णिमित्तं त्ति । (१२०)

अन ॥ हला पिअम्वदे अदोज्जेव्व सहिणेहा सउन्तला माहवीलदां सिञ्चदि । (१२१)

शकु ॥ जदो वहिणी मे भोदि तदो किं त्ति ण सिञ्चेमि ॥ इति कलसमावर्ज्जयति ॥ (१२२)

राजा ॥ अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत् । अथवा कृतं सन्देहेन । (१२३)

---

ते निवेदयामि । तेन हि तेनैव प्राकालिकपुष्पोद्गमेन हेतुना । हि हेतावबधारणे इत्यमरः । प्रतिप्रियमेतत्प्रतिरूपं प्रियम् ॥

(११७) शकु इति । किमित्यादि । किं मे प्रतिप्रियम् । सुगमम् ॥

(११८) प्रियमिति । आसन्नेत्यादि । आसन्नपाणिग्रहणासि त्वम् । आसन्नं निकटमचिरभावीति यावत् पाणिग्रहणं विवाहो यस्याः सासि त्वम् ॥

(११९) शकु इति । सासूयमिव प्रियं वदायां दोषारोपणेन सकोपेव । एस इत्यादि । एष ते आत्मनश्चित्तगतो मनोरथः तन्न ते वचनं श्रोष्यामि । सुगमम् ॥

(१२०) प्रियमिति । सखीत्यादि । सखि न खलु परिहासेन भणामि श्रुतं मया तातकण्वस्य मुखात् तव कल्याणसूचकमिदं निमित्तमिति । परिहासेन नर्मवाक्येन । मुखादिति निःसृतमिति शेषः । घनाद्विद्योतते विद्युदितिवत् । कल्याणसूचकं कल्याणस्य मङ्गलस्य परिणयस्येति यावत् सूचकमनुमापकं । इदं निमित्तं माधव्या अकालकुसुमम् । इति श्रुतमित्यनेनान्वितम् ॥

(१२१) अनेति । हलेत्यादि । अयि प्रियंवदे अतएव सस्नेहा शकुन्तला माधवीलतां सिञ्चति । अतएव अस्या मङ्गलसूचकत्वादेव । सस्नेहा सप्रणया सतीतार्थः ॥

(१२२) शकु इति । जदो इत्यादि । यतो भगिनी मे भवति ततः किमिति न सिञ्चामि । भगिनी एकतातस्य वर्द्धितत्वादिति भावः । किमिति किंनिमित्तम् ॥

(१२३) राजेति । अपि प्रश्ने । नाम सम्भावनायां । नाम प्राकाश्यसम्भाव्य

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ (१२४)

तथापि तत्त्वत एवैनामुपलप्स्ये । (१२५)

शकु ॥ ससम्भ्रमम् ॥ अम्म सलिलसेअसम्भमुग्गदो णोमालिअं उज्झिअ वअणं मे मङुअरो अहिवट्टदि ॥ इति भ्रमरबाधां नाटयति । (१२६)

---

क्रोधोपशमकुत्सने इत्यमर । कुलपते कण्वस्य । इयं शकुन्तला । असवर्णा विप्रजाती तरत् यत् क्षेत्र पत्नी तत्सम्भवा तद्गर्भसमुद्भवा । क्षेत्र पत्नी शरीरयोरित्यमर । अत्राय-माशय । तदानीमासीद् विप्राणां चातुर्वर्ण्यं परिणयाधिकार । राजन्यानान्तु शूद्रान्तवर्णं त्रितयोपयमे । यदाह मनु । शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विश स्मृते । ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मन इति । तथाचास्या सवर्णासम्भवत्वे जातत्वा ब्राह्मणीत्वेन परिणयपरीहार स्यात् क्षत्रियादिसम्भवत्वे तु पुत्रा येऽनन्तरस्त्रीजा क्रमेणोक्ता द्वि जन्मनाम । तानन्तरनाम्नस्तु मातृदोषात प्रचक्षत इति मनुवचनान्तरात् जातत्वा क्षत्रियादित्वेन निष्पत्यूह स्यादस्या परिणय इति । क्षणात् तदेव निश्चिनोति अथवेति । कल्पमलम् । क्रत युगेऽसमर्थे चेति मेदिनी ॥

(१२४) असंशयमिति । अथ अयं निश्चित क्षत्रस्य क्षत्रियस्य परिग्रहक्षमा स्वीकारार्हा पूर्ववाक्यस्थेन इयमितानेनान्वय । द्विजलिङ्गी स्यात् क्षत्र क्षत्रिय इति त्रिकाण्डशेष । हेतुमाह यत् यस्मात् आर्य्यं समागम्यविचलितपूर्व्वत्वेनातिमहत् मे मन अस्यां कन्यकायामभिलाषि सस्पृहम् अत इत्यर्थं । मन प्रवृत्ते निर्णायकत्व समर्थयति सतामित्यादि । हि यस्मात् सन्देहपदेषु संशयास्पदेषु वस्तुषु पदार्थेषु सतां सततशैधा-चारिणामन्तःकरणस्य मनस प्रवृत्तयो गतय प्रमाणं निश्चायिका । उक्तं मनोबुद्धि रहङ्कारश्चित्त करणमान्तरमिति । प्रमाण नित्यमर्य्यादायास्वेषु सतावादिनि । इयत्ता-यात् हेतौ च शास्त्रैकत्वे प्रमातरीति मेदिनी । अत्र सामान्येन विशेषसमर्थनादर्थान्तर-न्यासोऽलङ्कार । इदं च शस्तवित्त नाम वृत्तम् ॥

(१२५) तथेति । तथापि अनुमानसिद्धत्वेऽपि । तत्त्वतो यथार्थत । उपलप्स्ये ज्ञास्यामि ॥

(१२६) शकु इति । ससम्भ्रममाग्रह्यप्रभावम । अम्मेत्यादि । अम्म सलिलसेक-सम्भ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्त्तते । अम्मेति विस्मये । विषादे दुःखे अम्म नित्य स्त्रीभि प्रयुज्यत इति भरत । सलिलसेकेन जलसेकेन य सम्भ्रमस्त्वरा । सम्भ्रमस्त्वरेत्यमर । तेनोद्गतो भ्रमरो नवमालिकामुज्झित्वा त्यक्त्वा मे मम वदनं अभि

राजा ॥ सस्पृहं विलोक्य ॥ साधु बाधनमपि रमणीयमस्याः ।(१२७)

यतो यतः षट्चरणोऽभिवर्त्तते ततस्ततः प्रेरितवामलोचना ।
विवर्त्तितभ्रूरियमद्य शिक्षते भयादकामापि हि दृष्टिविभ्रमम् ॥ (१२८)

अपिच ॥ सासूयमिव । (१२९)

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करं व्याधुन्वत्याः पिबसि रतिसर्व्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ (१३०)

---

ऽर्थ्योक्तत्र वर्त्तते । भिक्षसमयेत्यादिना चिह्नार्थे नाभिना द्विधोत्या । यथोक्तं वीर्थ्येत्यमाव-
चिह्नेऽभिसेव्य भागे परिमतौ । अनुस्ते च सद्भावे च द्विधोनेऽनूपौ मताविहेति । भ्रमरबाधा
भ्रमरजनितदुःखम् । पीडा बाधा व्यथा दुःखमित्यमरः ॥

(१२७) राजेति । सस्पृहं साकाङ्क्षम् । साधु प्रशस्तम् । अस्याः शकुन्तलाया
बाधनं भ्रमरपीडनमपि रमणीयं मनोज्ञम् ॥

(१२८) पूर्व्वोक्तमुपपादयितुं श्लोकेन हेतुमाह यत इति । हि यस्मात् यतो यतो
यस्यां यस्यां दिशि षट्चरणः षट्पदः अभिवर्त्तते गच्छति ततस्ततस्तस्यां तस्यां दिशि प्रेरिते
भ्रमिते वामे मञ्जुले नयने यया सा तथोक्ता । वामो वल्गुप्रतीपयोरित्यमरः । तथा विवर्त्तिते
वक्रीकृते भ्रुवौ यया सा तथोक्ता इयं शकुन्तला अकामा शिक्षितुमनीहमानापि भयात् दृष्टि-
विभ्रमं दृष्टेः विकारं यद्वा दृष्टौ चित्तस्थानवस्थानं शिक्षते अभ्यस्यतीव । चित्तस्यानव-
स्थानं शृङ्गाराद् विभ्रमो भवेदिति । अत्रोत्प्रेक्षा व्यञ्जकेवादिशब्दविरहात् प्रतीयमानो-
त्प्रेक्षा । यदुक्तं दर्पणे । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना । वाच्या प्रतीयमाना
सा प्रथमं द्विविधा मता । वाच्येवादिप्रयोगे स्यादप्रयोगेऽपरा पुनरिति । इदं
वंशस्थविलं नाम वृत्तम् ॥

(१२९) अपिचेति । अपरञ्चेत्यर्थः । सासूयमसूयया सहितमिव ॥

(१३०) चलेति । हे मधुकर करं पाणिं व्याधुन्वत्याः चालयन्त्याः शकुन्तलायाः
वेपथुमतीं सकम्पां तथा चलौ लोलौ अपाङ्गौ अन्तभागौ यस्याः सा ताम् । अपाङ्गौ नेत्रयो-
रन्तावित्यमरः । दृष्टिं चक्षुः बहुशो वारं वारं स्पृशसि । तथा रहसि भवं रहस्यं गोप्य-
माख्यातुं इति रहस्याख्यायी स इव कर्णान्तिकचरः कर्णाभ्यर्णंगतः सन् मृदु अव्यक्तं यथा
स्यात् तथा स्वनसि शब्दायसे । तथा रते सुरतस्य व्यक्ते सर्व्वस्वं समग्रसम्पत्तिमिव अधरं

अपिच । (१२१)

लोलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमा-
माभुग्नेन विवर्त्तिता वलिमता मध्येन कम्प्रस्तनी ।
हस्ताग्रं विधुनोति पल्लवनिभं शीत्कारभिन्नाधरा
जातेयं भ्रमराभिलङ्घनभिया वाद्यै र्विना नर्त्तकी ॥ (१२२)

शकु ॥ हला परित्ताअध परित्ताअध मं इमिणा दुट्ठमहुअरेण अहिहूअमाणं । (१२३)

उभे ॥ सस्मितम् । का अह्मो परित्ताणे एत्थ दाव दुस्सन्तं अक्कन्द जदो राअरक्खिदाइं तवोवणाइं । (१२४)

---

तत्राक्षतत्वेनानियाञ्छनीयमिति यावत् । अधरं पिबसि । वयन्त्वस्माभिः परिष्वेषा न केवलं तद्याथार्थ्यस्य अन्वेषात् मार्गणात् वयं हता मनोहता विफलप्रयत्ना जाता इति यावत् । मनोहत प्रतिहत प्रतिबद्धो हतश्च य इत्यमर इति केचित्, तट्टीकाकृत । त्वं खलु त्वमेव कृती निपुण । अविशेषणस्यापद इति बहुत्वाद्, वयमितीकारस्येपि मङ्गलपदनम् । इदं शिखरिणी नाम वृत्तम् ॥

(१२१) अपीति । अपिच अन्यच्चेत्यर्थः ॥

(१२२) लोलामिति । कम्प्रौ कान्तौ स्तनौ यया सा कम्प्रस्तनी शकुन्तला । हि सदोमिति कर्मे कर्त्तरि र । भ्रूलताया विभ्रमेण कौटिल्येन सहिता लोला चञ्चला दृष्टिमितस्तत अङ्गोभ पार्श्वेषु वितनुते विस्तारयति । आ ईषद् भुग्नेन कोटिलेन वलिमता वलित्वकतरङ्गलहता मध्येन मध्यावयवेन विवर्त्तिता मर्द्धोशता तथा शीत्कारेण शीदिति शब्देन भिन्नो विश्लिष्टो अधरो यस्या सा तथोक्ता च शतो पल्लवनिभ पल्लवोपमम । हस्ताग्र पदे त्वमो निभसङ्काशनीकाशप्रतिकाशोपमादय इत्यमर । हस्ताग्र पाणि विधुनोति कम्पयति । अत इय भ्रमरेण्याभिलङ्घनादभिभवाद् भिया भयेन वाद्यै र्विना नर्त्तकी लास्यकरी जाता च इसा । यतो किलिमा एव लास्यधर्म्मा इत्यस्ने न सन्ति परं वाद्यानीति भाव । अत नर्त्तकीधर्म्मप्राप्त्युपादानात् तुल्ययोगिताल्ङ्कारः । यदुक्तं चन्द्रालोके । वर्ण्यानामितरेषां वा धर्म्मैक्य तुल्ययोगितेति । इदं शार्दूलविक्रीडितं नाम वृत्तम् ॥

(१२३) शकु इति । हलेत्यादि । अयि परित्रायेथां परित्रायेथां मां अनेन दुष्टमधुकरेणाभिभूयमानाम् । परित्रायेथां इत्यत्र रतम् । य भिभूयमानामाकुलीक्रियमाणाम् ॥

(१२४) उभे इति । कियादि । का वयं परित्राणे अत्र तावत् दुष्यन्तमाक्रन्द

राजा॥ अवसरः खल्वयमस्माकमात्मानं दर्शयितुम्। न भेतव्यं न भेतव्यम्॥ इत्यर्द्धोक्ते स्वगतम्॥ एवं हि राजाहमस्मीति परिज्ञानं भविष्यति भवतु अतिथिसमाचारमेवावलम्बिष्ये। (१३५)

शकु॥ ण एसो दुव्विणीदो विरमदि ता अण्णदो गमिस्सं। (१३६)

पदान्तरे सदृष्टिक्षेपम्॥ हद्धी हद्धी कधं इदो वि मं अणुसरदि ता परित्तायध मं। (१३७)

राजा॥ सत्वरमुपगम्य॥ आः। (१३८)

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु॥ (१३९)

---

यतो राजरक्षितानि तपोवनानि। परित्राणे विषये वयं का न का अपीत्यर्थः। अत्र भ्रमरात् परित्राणे। आक्रन्द आह्वय। आक्रन्दं क्रन्दनाह्वाने मित्रदारुणयुद्धयोरिति मेदिनी॥

(१३५) राजेति। अवसरोऽवकाशः। अर्द्धोक्ते अर्द्धश्लोक्ते सत्याम्। अयमहमागतोऽस्मीतान्यवाक्यस्येति शेषः। स्वगतमनतिस्पष्टम्। एवं न भेतव्यं न भेतव्यमयमहमागतोऽस्मीत्युक्तौ। परिज्ञानं परिचयः। अतिथिसमाचारमतिथेराचारम्। अवलम्बिष्ये धारयिष्यामि॥

(१३६) शकु इति। ण एत्यादि। न एष दुर्विनीतो विरमति तदन्यतो गमिष्यामि। दुर्विनीतो दुष्टः। विरमति निवर्त्तते। शेषः परान्वितिः परस्मैपदम्। अन्यतोऽन्यप्रदेशम्॥

(१३७) पदेति। पदान्तरे पदविन्यासावसरे। सदृष्टिक्षेपं कृतनेत्रपातं यथा स्यात् तथा आद्येतिक्रियाविशेषणम्। हद्धीत्यादि। हा धिक् हा धिक कथमितोऽपि मामनुसरति। तत् परित्रायेथां माम्। हाशब्देन पीडा धिक्शब्देनात्मनिर्भर्त्सनं द्योत्यते। हा विषादशुगर्त्तिष्विति धिङ्निर्भर्त्सननिन्दयोरिति चामरः। इतोऽपि अत्रापि। अनुसरति अनुगच्छति। भ्रमर इति शेषः। तत् तस्मात्॥

(१३८) राजेति। उपगम्य तपस्विकन्यका इति शेषः। आःकारेण कोपो द्योत्यते। आस्तु स्यात् कोपपीडयोरित्यमरः॥

(१३९) क इति। दुर्विनीतानां दुष्टानां शासितरि दमयितरि पौरवे पुरुवंशप्रभवे राजनि वसुमतीं पृथ्वीं शासति पालयति सति मुग्धासु अकुटिलयौवनासु तपस्वि

॥ सख्यौ राजानं दृष्ट्वा किञ्चिदिव सम्भ्रान्ते ॥ (१४०)

सख्यौ ॥ अज्ज ण किम्पि अच्चाहिदं किन्तु खु इअं पिअसही दुट्ठ-महुअरेण आउलीकिअमाणा कादरीभूदा ॥ इति शकुन्तलां दर्शयतः ।(१४१)

राजा ॥ शकुन्तलामुपेत्य ॥ अयि तपो वर्द्धते । (१४२)

शकु ॥ ससाध्वसावनतमुखी तिष्ठति । (१४३)

अन ॥ दाणिं अदिधिविसेसलाहेण । (१४४)

प्रिय ॥ साअदं अज्जस्स, हला सउन्तले गच्छ उडआदो फलमिस्सं अग्घभाअणं उवहर इदम्पि पादोदअं भविस्सदि ॥ इति घटं दर्शयति ।(१४५)

---

कन्यासु तपस्विनीषु कुमारीषु कोयमविनयं दौर्जन्यमाचरति । प्रथमावतीर्णयौवना मुग्धेत्यत्रालङ्कारिका । इयमार्य्या नाम जातिः ॥

(१४०) सख्या इति । सम्भ्रान्ता आप्तव्यग्रभावा ॥

(१४१) सख्याविति । सख्यौ प्रियंवदानसूये । अज्जेत्यादि । आर्य्य न किमपि अत्याहितं किन्तु खलु इयं प्रियसखी दुष्टमधुकरेणाकुलीक्रियमाणा कातरीभूता । अत्याहितं महद्भयम् । अत्याहितं महाभीतिः कर्म्मजीवानपेक्षि चेत्यमरः । कातरीभूता अधीरीभूता । अधीरे कातर इत्यमरः ॥

(२४२) राजेति । अयि सम्बोधने । अयि प्रश्नानुनययोस्तथा सम्बोधनेऽपि चेति मेदिनी । तपो धर्म्मः । धर्म्मे व्रते तप इति त्रिकाण्डशेषः ॥

(१४३) शकु इति । ससाध्वसा सभया । भीतिर्भीः साध्वसं भयमित्यमरः । अव-नतमुखी अधोमुखी ॥

(१४४) अनेति । भीतया शकुन्तलया तूष्णींशीलायामनसूयया प्रत्युच्यते दाणिमित्यादि । इदानीमतिथिविशेषलाभेन । अतिथिविशेषस्य विशिष्टस्यातिथेर्लाभेन तपो वर्द्धत इत्यन्वयः ॥

(१४५) प्रियमिति । साअदमित्यादि । स्वागतमार्य्यस्य । अयि शकुन्तले गच्छ उटजात् फलमिश्रमर्घभाजनमुपहर इदमपि पादोदकं भविष्यति । स्वागतमिति भावे क्तः । स्वागतं सुखेनागतम् । आर्य्यस्येति भावक्तान्तप्रयोगात् प्रयभावक्तेति कर्त्तरि षष्ठी । एष राजानं प्रति प्रश्नः । अनन्तरं शकुन्तलां प्रत्याह अयीत्यादि । उटजात् पर्णशालात् । पर्ण-शालोटजोऽस्त्रियामित्यमरः । फलमिश्रं फलसम्पृक्तम् । करम्भः करबो मिश्रः सम्पृक्त खचित समा इति हेमचन्द्रः । अर्घभाजनमर्घपात्रम् । पात्रामत्रञ्च भाजनमित्यमरः । उपहर उपनय । अर्घे तु फलयोगः श्रीरामचन्द्रपूजनेऽगस्त्यसंहितायां निर्द्दिष्टः । यथा

राजा ॥ भवतीनां सूनृतयैव वाचा कृतमातिथ्यम् । (१४६)

अन ॥ इमस्सिं दाव पच्छाअसीदलाए सत्तवण्णवेदिआए उवविसिअ अज्जो परिस्समं अवणेदु । (१४७)

राजा ॥ नूनं यूयमप्यनेन धर्म्मकर्म्मणा परिश्रान्ताः स्तन्मुहूर्त्तमुपविशत । (१४८)

प्रियं ॥ जनान्तिकम् ॥ हला सउन्तले उइदं णो अदिधिपज्जुवासणं ता एहि उववसह्म ॥ इति सर्व्वा उपविशन्ति ॥ (१४९)

शकु ॥ आत्मगतम् ॥ कधं इमं जणं पेक्खिअ तवोविरोहिणो विआरस्स गमणीया ह्मि संवुत्ता । (१५०)

---

मत्वैव पादयेद् पाद्यान्यर्घ्यं दद्याज्जगत्पतेः । फलपुष्पैस्तु सम्पूर्णं गृहीत्वा शङ्खमुत्तममिति । ननु पाद्यमेव प्रथममुपयुज्यते नत्वर्घ्यमित्यत आह इदमिति । अपि सम्भावनायाम् । तथाच सम्भावयामीदं घटगतं जलं पादोदकं पादप्रक्षालनोचितमुदकं भविष्यतीत्यर्थः । इच्छैव गुरुणातिथिसत्कारायादिष्टेति शकुन्तलायामयमादेश. प्रियंवदाया' सङ्गतः ॥

(१४६) राजेति । सूनृतया प्रियया । सूनृत प्रिये इत्यमरः । आतिथ्यमतिथ्यर्थं कर्म्म । क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनीत्यमरः । कृतं निष्पादितम् ॥

(१४७) अनेति । इमस्सिमित्यादि । अस्यां तावत् प्रच्छायशीतलायां सप्तपर्ण-वेदिकायामुपविश्य आर्य्यः परिश्रममपनयतु । तावत् तदा । प्रकृष्टा छाया यस्यां सा प्रच्छाया । इयं प्रच्छाया च शीतला चेति प्रच्छायशीतला तस्याम् । नीललोहितवत् विशेषणयोः कर्म्मधारयः । सप्तपर्णवेदिकायां सप्तच्छदवृक्षस्य मूलगतचत्वरस्वविश्रामभूमौ । अपनयतु शमयतु ॥

(१४८) राजेति । नूनमवश्यम् । धर्म्मकर्म्मणा तरुसेचनात्मकेन । मुहूर्त्तं कञ्चित् कालम् । देशाध्वकालभावमिति कर्म्मत्वम् ॥

(१४९) प्रियमिति । जनान्तिकमप्रकाशम् । जनान्तिकमप्रकाश इति त्रिकाण्डशेष । तत्प्रकारस्तु कथान्तरमध्ये नामितानामिकोर्द्ध्वसर्व्वाङ्गुलित्रिपताकाकृतिकरं कृत्वा अन्योन्यामन्त्रणम् । त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकमित्युक्तेः । हलेत्यादि । अयि शकुन्तले उचितं नोऽतिथिपर्य्युपासनं तदेहि उपविशामः । उचितं न्याय्यं । अतिथिपर्य्युपासनमतिथेः परिसेवनं सर्व्वतः समीपोपवेशनञ्च ध्वन्यते । तत् तस्मात् । एहि आगच्छ । उपविशाम उपास्महे ॥

(१५०) शकु इति । आत्मगतमनतिस्फुटम् । कथमित्यादि । कथमिमं जनं प्रेक्ष्य

राजा ॥ सख्यौ अवलोक्य ॥ अहो समानवयोरूपरमणीयं सौहार्दमत्रभवतीनाम् । (१५१)

प्रिय ॥ जनान्तिकम् ॥ हला अणसूए को णु क्खु एसो दुरवगाहगम्भीराकिदी महुरं आलवन्तो पहुत्तदाक्खिणं विथारेदि । (१५२)

अन ॥ हला ममावि अत्थि कोदूहलं ता पुच्छिस्सं दाव णं । (१५३)

प्रकाशम् ॥ अज्जस्स महुरालावजणिदो वीसम्भो मं आलावेदि कदरो राएसिवंसो अलंकरीअदि अज्जेण कदमो वा देसो विरहपज्जुस्सुअजणो करीअदि किंणिमित्तं वा अज्जेण सुउमारेण तवोवणगमणपरिस्समे अप्पा उवणीदो त्ति । (१५४)

---

तपोविरोधिनो विकारस्य गमनीयास्मि संवृत्ता । इमं जनं राजानं प्रेक्ष्य विलोक्य तपो ब्रह्मचर्य्यं विरुणद्धि निराकरोतीति तपोविरोधी तथाभूतस्य विकारस्य प्रकृतेरन्यथाभावस्य कामस्येति यावत् कथं गमनीया गमनार्हा । ते त्वां शक्यार्हेति चार्थेऽनीय । संवृत्ता सम्भूतास्मि ॥

(१५१) राजेति । सख्यौ शकुन्तलाप्रियंवदानसूया । अहो विस्मये । अत्रभवतीनां माननीयानाम् । अत्र भवान् तत्रभवान् पूज्ययोरिति शब्दाब्धिः । सौहार्दं सख्यं वयांसि च रूपाणि च तानि वयोरूपाणि समानानि अन्यूनातिरिक्तानि च तानि वयोरूपाणि चेति तैः रमणीयं शोभनम् ॥

(१५२) प्रियमिति । जनान्तिकं अन्यजनेतरमपवार्य्येत्यर्थः । हलेत्यादि । अयि अनसूये को नु खलु एष दुरवगाहगम्भीराकृतिः मधुरमालपन् प्रभुत्वदाक्षिण्यं विस्तारयति । नु वितर्के । खलु जिज्ञासायाम् । तथाचायं वितर्कगर्भः प्रश्नः । दुःखेनावगाह्यत इति दुरवगाहः । दुरवगाहगम्भीरा अगाधगम्भीरा अनवबुद्धेति यावत् आकृती रूपं यस्य स तथोक्तः । आकृतिस्तु स्त्रियां रूपे सामान्यवपुषोरपीति मेदिनी । एषः पुमान् मधुरं प्रियमालपन् सम्भाषमाणः । स्वादुप्रियौ तु मधुराविस्त्यमरः । प्रभुत्वदाक्षिण्यं प्रभुत्वस्य ऐश्वर्य्यस्य दाक्षिण्यस्य औदार्य्यस्य च यौगपद्यम् । दक्षिणे सरलोदाराविस्त्यमरः । विस्तारयति प्रकटयति ॥

(१५३) अनेति । हलेत्यादि । अयि मम अपि अस्ति कौतूहलं तत् प्रक्ष्यामि तावदेनं । कौतूहलं कौतुकं ज्ञातुमिच्छेति यावत् । एनं जनं ॥

(१५४) प्रकाशमिति । न जनान्तिकमित्यर्थः । अनसूयैवाह अज्जस्सेत्यादि । आर्य्यस्य मधुरालापजनितो विश्रम्भो मामालापयति । कतरः पुनः राजर्षिवंशोऽलङ्क्रियते

शकु॥ आत्मगतम्॥ हिअअ मा उत्तम्म ज तुए चिन्तिदं त अणसूआ मन्तदि। (१५५)

राजा॥ स्वगतम्॥ कथमिदानीमात्मानं निवेदयामि कथं वात्मनः परिहारं करोमि भवत्वेवं तावत्। (१५६)

प्रकाशम॥ भवति वेदविदस्मि राज्ञः पौरवस्य नगरधर्म्माधिकारे नियुक्त. पुण्याश्रमदर्शनप्रसङ्गेन धर्म्मारण्यमिदमायातः। (१५७)

---

आर्य्येण कतमो वा देशो विरहपर्य्युत्सुक क्रियते किं निमित्त वा आर्य्येण सुकुमारेण तपोवनगमनपरिश्रमे आत्मा उपनीत इति। आर्य्यस्य महाभागस्य मधुरालापेन प्रियभाषणेन जनित उत्पादितो यो विश्रम्भोऽस्माक विश्वास। असौ विश्रम्भविश्वासावित्यमर। स एव मा आलापयति आलापाय प्रेरयति किमित्यत आह इतप्रभृतिम्। कतरो राजर्षिवंशश्चन्द्रार्कसम्भवयो द्वयो राजर्षिवंशयो मध्ये को राजर्षिवंश पुनरार्य्येणालङ्क्रियते जन्मना शुभो भनीक्रियते। कतमो देशेषु मध्ये को वा देशो विरहपर्य्युत्सुक तत्परिज्ञितया साम्प्रत मिहोपेततया विरहेणोत्कण्ठित क्रियते। एव सुकुमारेण मृदुलाङ्गतिना आर्य्येण किं निमित्त किमर्थं वा तपोवनगमनपरिश्रमे आत्मा उपनीत प्रयुक्त। इति आलापयतीत्यन्वय। अत्र कतरकतमौ किं यततदेकान्याद्द्विवहूनामेकनिर्द्धारणे डतरडतमाविति नेन डतरडतमप्रत्ययाभ्या किमो निष्पन्नौ॥

(१५५) शकु इति। आत्मगतमनतिस्पष्टम। हिअअ इत्यादि। हृदय मा उत्ताम्य यत् त्वया चिन्तित तदनसूया मन्त्रयते। मा उत्ताम्य उत्कण्ठित मा भव। त्वया यच्चिन्तित कोऽय महाभाग इतीत्यर्थ। मन्त्रयते कथयति॥

(१५६) राजेति। आत्मान कथ निवेदयामि स्वयत्न कथ विज्ञापयामि। वन्दिकार्य्यतया स्वय विज्ञापनानौचित्यादिति भाव। आत्मन परिहार गोपन वा कथ करोमि मिथ्यावादस्पर्शादिति भाव। तदानीमेव विचार्य्याह भवत्विति। एव तावद्वक्तव्यमिति शेष॥

(१५७) प्रकाशमिति। विस्पष्टमित्यर्थं। वेदविदस्मीतानेन विशालमतुभान्ति राजन्यानामपि वेदाधिकारानुमित्या च न व्याहृतम। तथा पौरवस्य पुरुवशप्रभवस्य राज्ञो नगरधर्म्माधिकारे राजधानीगतधर्म्माधिकरणे विचारालय इति यावत्। तदाह कात्यायन। धर्म्मशास्त्रानुसारेण अर्थशास्त्रविरूपणम। यत्राधिक्रियते स्थाने धर्म्माधिकरण हि तदिति। नियुक्तो रक्षित। एतेन धर्म्माधिकरणप्रराजपुरुषत्व बोध्यते। तथाच मत्स्यपुराणम। सम शत्रौ च मित्रे च सर्व्वशास्त्रविशारद। विप्रमुख्य कुलीनश्च धर्म्माधिकरणो भवेदिति।

अन॥ अज्ज सणाधा धम्मआरिणी। (१५८)

शकु॥ शृङ्गारलज्जां नाटयति॥ (१५९)

सख्यौ॥ उभयोराकारं विदित्वा॥ हला सउन्तले जइ अज्ज तादो इध सण्णिहिदो भवे। (१६०)

शकु॥ तदो किं भवे। (१६१)

सख्यौ॥ तदो जीविदसव्वस्सेणावि इमं अदिधिविसेसं कदत्थं करेदि। (१६२)

---

वस्तुत पौरवस्य पुरोरपत्यस्य राज्ञो मत्पूर्व्वस्येत्यर्थ। यानि नगराणि ये च धर्म्मास्तेषामधिकारे नियुक्तस्तदधिकारी सन इत्यर्थमभिसन्धाय कृपा च नाभिधीयते। तथा पुण्यस्य पवित्रस्य आश्रमस्य सदस्य दर्शनप्रसङ्गेन दर्शनप्रसक्ततया इद धर्म्मारण्यमायात। एतदुभयत्रैव समानम्। अत्र श्लेषाख्योऽलङ्कार। यदाह भोजराज। एकक्रमेण वाक्येन द्वयोर्भेदनमर्थयो। तच्छ्लेषा यत्र स शब्दश्लेष इत्यभिशब्दित इति॥

(१५८) अनेति। अज्जेत्यादि। अद्य सनाथा धर्म्मचारिणि। सनाथा नाथेन सह वर्त्तमाना॥

(१५९) शकु इति। शृङ्गारलज्जा शृङ्गारस्योद्भूतलज्जाम्। सनाथपदप्रयोगादिति भाव। नाटयति क्रियया दर्शयति॥

(१६०) सख्याविति। उभयो राज्ञ शकुन्तलायाश्च। आकारमाकृते भावम्। विदित्वा अन्योन्यानुरागसत्त्वेनावगम्य। हलेत्यादि। अयि शकुन्तले यद्यद्य तात इह सन्निहितो भवेत्। तात कण्व। सन्निहित उपस्थित॥

(१६१) शकु इति। तदो इत्यादि। तदा किं भवेत्। तदा तातसन्निधाने॥

(१६२) सख्याविति। तदो इत्यादि। तदा जीवितसर्व्वस्वेनापि इममतिथिविशेष कृतार्थं कार्य्यात। सर्व्वस्व सम्पत्ति। तच्चाजीवित भूहिरण्यादि जीवितन्तु सर्व्वस्व दारापत्यादि सहजतो यस्मै कस्मैचित तस्यादेयत्वादत्र जीवितसर्व्वस्वेनापीत्युक्त। यथाह कात्यायन। विक्रयश्चैव दानञ्च न नेया स्युरनिच्छव। दारा पुत्राश्च सर्व्वस्वमात्मन्येव नियोजयेत्। आपत्काले तु कर्त्तव्य दान विक्रय एव च। अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चय इति। अतएव सर्व्वस्वदक्षिणायामुक्त स्व कुटुम्बाविरोधेन देय दारसुतादृते इति। प्रकृते तु नैष्ठिकब्रह्मचारिण पुत्रदाराणामसम्भवात जीवितसर्व्वस्वपदेन शकुन्तलैवाभिप्रेता अतएव शकुन्तलाया कोप सङ्गच्छते। अतिथिविशेष विशिष्टमतिथि कृतार्थं सफलप्रयोजनम॥

शकु॥ सअतककोपम्॥ अवेध तुह्मे किम्पि हिअए कदुए मन्तेध ण वो वअणं सुणिस्सं। (१६३)

राजा॥ वयमपि भवत्यो. सखीगतं किञ्चित् पृच्छामः। (१६४)

सख्यौ॥ अज्ज अणुग्गहो वि अब्भत्थणा। (१६५)

राजा॥ तत्रभवान् काश्वः शाश्वते ब्रह्मणि वर्त्तते इयञ्च व सखी तस्यात्मजा कथमेतत्। (१६६)

अन॥ सुणादु अज्जो अत्थि कोसिओ त्ति गोत्तणामहेओ महाप्पहावो राएसी।(१६७)

---

(१६३) शकु इति। सतककोपेन कलिमरोषेण सहित सक्षतककोप। जोवित सर्व्वस्वपदेन शकुन्तलाया एवाभिप्रेतत्वादिति भाव। कतकः स्यात् पुमान् कण्यखर्परे चाप्य सम्भवे। पुत्रभेदे कलिमे च लिप्विति शब्दाब्धि। अवेधेत्यादि। अपसरत युवा किमपि हृदये कत्वा मन्त्रयेथे न वा वचन श्रोष्यामि। अपसरत अपगच्छत। किमपि मत्परिवायसम्बन्धमिति भाव। हृदये कत्वा अभिसन्धाय। मन्त्रयेथे कथयथ॥

(१६४) राजेति। सखीगत शकुन्तलासम्बद्धम्॥

(१६५) सख्याविति। अज्जेत्यादि। आर्य्य अनुग्रहोऽपि अभ्यर्थना। अनुग्रहेऽपि विषये अभ्यर्थना प्रार्थना क्रियत इति शेष। काकुक्त्या प्रश्नोऽयम्। तथाच यत प्रश्न एव भवतामस्मास्वनुग्रहोऽनुग्रहीतश्च कथिताभ्यर्थ्यते अतो न युज्यत एव प्रागुविज्ञापनमिति भाव॥

(१६६) राजेति। तत्रभवान् गौरवित। गौरविताख्यार्य्यमिश्रा श्लाघ्यास्तत्रभवत्रा इति त्रिकाण्डशेष। कण्वो महर्षि शाश्वते नित्ये। शाश्वतस्तु ध्रुवो नित्यसदातनसनातना इत्यमर। ब्रह्मणि ब्रह्मचर्य्ये वर्त्तते नैष्ठिकब्रह्मचारीति यावत। तदाह कूर्म्मपुराणम्। ब्रह्मचार्य्युपकुर्व्वाणो नैष्ठिको ब्रह्मतत्पर। योऽधीत्य विधिवद् वेदान् गृहस्थाश्रममाव्रजेत्। उपकुर्व्वाणको ज्ञेयो नैष्ठिको मरणान्तिक इति। इय वो युष्माक सखी शकुन्तला च तस्य महर्ष रात्मजा औरसी एतत कथ केन प्रकारेण सम्भवतीत्यर्थ। या क्रियामन्तरेण न कदाचिदप्यौरसापत्यसम्भवस्तस्या —अवकीर्णीभवेद गत्वा ब्रह्मचारी तु योषितम्। गर्द्दभपशुमालभ्य नैर्ऋत स विशुध्यतीति याज्ञवल्क्येन ब्रह्मचारिण प्रतिषेधादिति भाव॥

(१६७) अनेति। सुणादित्यादि। शृणोत्वार्य्य अस्ति कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षि। कौशिक इति गोत्रनामधेय कुशिकस्यापत्यमिति व्युत्पत्त्यावगतनाम यस्य स। महाप्रभावो महातेजा। प्रभाव शक्तितेजसोरिति विश्व। राजर्षि क्षत्रियतपस्वी विश्वामित्र इति यावत्॥

राजा ॥ स खलु भगवान् कौशिकः । (१६८)

अन० ॥ तं सहीए पहवं अवगच्छ उज्झिदाए सरीरसम्वड्ढणादिहिं उण तादकण्वो वि एदाए पिदा । (१६९)

राजा ॥ उज्झितशब्देन जनितं नः कुतूहलं तदामूलाच्छ्रोतुमिच्छामि । (१७०)

अन० ॥ सुणादु अज्जो पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स कधम्पि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घआरिणी पेसिदा । (१७१)

---

(१६८) राजेति । अनसूयावचनाज्जातानुभव आह स खल्वित्यादि । य क्षत्रियोऽपि विप्रतामगमदिति भावः ॥

(१६९) अनेति । तमित्यादि । तं सख्याः प्रभवमवगच्छ उज्झितायाः शरीरसंवर्द्धनादिभिः पुनस्तातकण्वोऽप्येतस्याः पिता । तं कौशिकं सख्याः शकुन्तलायाः प्रभवं जन्महेतुमवगच्छ जानीहि । स्याज्जन्महेतुः प्रभव इत्यमरः । उज्झितायास्त्यक्तायाः अस्याः इति शेषः । शरीरस्य संवर्द्धनादिभिर्न तूत्पादनयेति भावः ॥

(१७०) राजेति उज्झितशब्देन उज्झितायाः शरीरसंवर्द्धनादिभिरित्यत्र प्रयुक्तेनेत्यर्थः । कुतूहलं कौतुकं सविशेषशुश्रूषेति यावत् । नः अस्मात् । आमूलात् आद्यमारभ्य । मूलमाद्ये शिफाभयोरित्यमरः ॥

(१७१) अनेति । सुणादित्यादि । शृणोत्वार्य्यः पुरा किल तस्य राजर्षेरुग्रे तपसि वर्त्तमानस्य कथमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा नियमविघ्नकारिणी प्रेषिता । पुराऽतीतकाले । पुरा पुराणे निकटे प्रबन्धातीतभाविष्विति मेदिनी । किलेति परम्परागतवार्त्तायाम् । वार्त्तासम्भाव्ययोः किलेत्यमरः । उग्रे उत्कटे । उग्रः शूद्रासुते क्षत्रात् श्रीकण्ठे चोत्कटेऽपि चेति विश्वः । तपसि कृच्छ्रचान्द्रायणादिनियमे वर्त्तमानस्य तदाचरत इति यावत् । तस्य राजर्षेर्विश्वामित्रस्य नियमस्य तपसो विघ्नकारिणी विघातनशीला मेनका नामाप्सरा जातशङ्कैस्तपोमहिम्ना स्वस्वाधिकाराच्छेदनविषये जातभयैर्देवैः कथमपि अनन्यावगतं यथा स्यात् तथा प्रेषिता प्रेरिता तत्समीपमिति शेषः । यद्यपि स्त्रियां बहुष्वप्सरस इत्यमरसम्मतो बहुवचनान्त एवाप्सरःशब्दस्तथापि अप्सरसा व्यथितेत्यादिप्रयोगदर्शनात् कश्चिदेकवचनान्तोऽप्यङ्गीकार्य्यः । यद्वा प्राकृतत्वादपभ्रंशो न दोषाय संस्कृते तु अप्सरस इति नियमविघ्नकारिण्य इति प्रेषिता इति बहुवचनान्तैरेव व्याख्यातव्यम् ॥

राजा॥ अस्तेरवान्यसमाधिभीरुत्वं देवानाम्। ततस्ततः। (१७२)

अन॥ तदो वसन्तावदाररमणीए समए उम्मादहेतुगं ताए रूवं पेक्खिअ॥ इत्यर्द्धोक्ते न लज्जा नाटयति। (१७३)

राजा॥ पुरस्तादवगम्यत एव सर्व्वथा अप्सरःसम्भवेषा। (१७४)

अन॥ अध इं। (१७५)

राजा॥ उपपद्यते। (१७६)

मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः।
98 न प्रभातरलं ज्योतिरुदेति वसुधातलात्॥ (१७७)

---

(१७२) राजेति। देवानामिन्द्रादीनाम् अन्येषां अ॰समाधि नियमस्तस्माद् भीरुत्व भयशीलत्वमस्त्येव प्रागप्येवं बहुश श्रुतमिति भाव। समाधि नियमे ध्याने नीवाके च समर्थने इति विश्व॰। प्रकृतमनुसारयति ततस्तत इति॥

(१७३) अनेति। तदो इत्यादि। ततो वसन्तावताररमणीये समये उन्मादहेतुक तस्या रूप प्रेक्ष्य। वसन्तस्य अवतारेण प्रवृत्त्या रमणीये मनोहरे समये उन्मादस्य चित्तविभ्रमस्य हेतुक हेतुभूत तस्या मेनकाया रूप सौन्दर्यं प्रेक्ष्य दृष्ट्वा। अर्द्धोक्ते न अपारस्त्वनियमेन राजर्षि णा तेनास्यामाहितो गर्भं इत्यन्तपूर्ण वाक्यस्येति शेष॥

(१७४) राजेति। पुरस्तादग्रत साक्ष्यप्रमिति यावत। अवगम्यते ज्ञायत एव सर्व्वथा अङ्गीकारे। सर्व्वथा सर्व्वप्रकारे प्रतिज्ञाभ्यपहेतुष्विति मेदिनि। प्रतिज्ञा अङ्गीकार। अप्सर सम्भवा अप्सरोगर्भसम्भूता॥

(१७५) अनेति। अध इ। अथ किम्। अन्यत किं एतदेवेत्यर्थ। अङ्गीकारेऽपि चाथ किमिति हारावली॥

(१७६) राजेति। उपपद्यते युज्यते॥

(१७७) मानुषीति। मानुषीभ्यो मानवजातिभ्य वीयमस्य शकुन्तलासम्बन्धिनो रूपस्य सौन्दर्यस्य सम्भव समुद्भव स्यात्। नु पृच्छायां। नु पृच्छायां वितर्के चेत्यमर। कथमपि नेत्यर्थ। तदेव दर्शयति नेति। प्रभातरलं प्रभया त्विषा तरल भास्वरम्। तरल चञ्चले पिङ्गे हारमध्यमणावपि। भास्वरे चेति विश्व। ज्योति सविता वसुधातलात् भूतलात् उदेति। उदय प्राप्नोति। ज्योति दिनेशानलयोरपि स्यादिति विश्व। अत्र एकाप्युत्पत्तिक्रिया पौनरुक्त्यनिरासाय सम्भवोदयपदाभ्यां पृथक् निर्दिष्टेति प्रतिवस्तूपमालङ्कार इति केचित्। वस्तुतस्तु भिन्न एवात्र सम्भवादुदयपदार्थं तथाचात्र उपमान क्रियायां अपि प्रतिबिम्बनाद् दृष्टान्तो नामालङ्कार। तदुक्तं प्रकाशे। दृष्टान्त पुनरेतेषां

राजा ॥ एतत् पृच्छामि । (१८४)

वैखानसं किमनया व्रतमाप्रदानाद्
२१ व्यापाररोधि मदनस्य निषेवितव्यम् ।
अत्यन्तमेव सदृशेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥ (१८५)

प्रिय ॥ अज्ज धम्माअरणपरवसो एस जणो गुरुणो उण से अनुरूअ-
वरप्पदाणे संकप्पो । (१८६)

राजा ॥ सहर्षमात्मगतम् । (१८७)

---

(१८४) राजेति । एतत् वक्ष्यमाणम् ॥

(१८५) वैखानसमिति । मदनस्य कामस्य व्यापारमष्टाङ्गमैथुनं रुणद्धि निवर्त्तयतीति तत् तथाभूतं वैखानसं व्रतं तापसानां नियमं ब्रह्मचर्य्यमिति यावत् । अष्टाङ्गमैथुननिवृत्तेरेव ब्रह्मचर्य्यपदार्थत्वात् । तथा च दक्षः । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । अनुरागात् कृतं ह्येतद् ब्रह्मचर्य्यविरोधकर्म्मिति । वैखानसं वानप्रस्थसम्बन्धीति केचित् तन्न तस्य मदनव्यापाररोधित्वाभावात् रागानिवृत्तौ पत्नीसहितवनगास्थाने तस्य श्रुतेः । अनया शकुन्तलया किमाप्रदानात् परिणयपर्य्यन्तं निषेवितव्यं पालयितव्यम् । आहो किम् । आहो उताहो किमुत विकल्पे किं किमूत चेत्यमरः । अत्यन्तं देहावसानपर्य्यन्तमेव सदृशेक्षणेन ईक्षणसादृश्येन वल्लभाभिः प्रियाभिः । दयितं वल्लभं प्रियमित्यमरः । हरिणाङ्गनाभि-र्मृगीभिः समं सह । साकं सार्द्धं समं सहेत्यमरः । निवत्स्यति आश्रमवासं करिष्यतीत्यर्थः । तथा चास्या उपकुर्व्वाणत्वं नैष्ठिकत्वं वेति प्रश्नार्थः । स्त्रीणां चैतद् ब्रह्मचर्य्यं द्वैविध्यं हारीतेनोक्तं यथा । द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे च भैक्ष्यचर्य्येति सद्योवधूनामुपनयनं कृत्वा विवाहः कार्य्य इति । यमेनापि । पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनञ्च वेदानां सावित्री-वाचनं तथेति । इदं वसन्ततिलकं नाम वृत्तम् ॥

(१८६) प्रियमिति । अज्जेत्यादि । आर्य्य धर्म्माचरणपरवश एष जनः गुरोः पुनरस्या अनुरूपवरप्रदाने सङ्कल्पः । धर्म्माचरणस्य धर्म्मानुष्ठानस्य परवशोऽधीनः धर्म्मभिया स्वातन्त्र्यात्मकमधर्म्ममुपयातुं नार्हतीति भावः । एतेन स्वयं महाधर्म्मनिपुणता दर्शिता । एष जनः शकुन्तलाजनः । गुरोः कण्वस्य । अनुरूपेति । अनुरूपो रूपस्य योग्यो यो वरो जामाता । भाविनि भूतवदुपचारः । वरो जामातरि वृते इति मेदिनी । तस्य प्रदाने सङ्कल्पो मनोऽभिलाषः । उभयथा दुर्घटपरिणयेयं स्त्रीति भावः ॥

•(१८७) राजेति । सुगमम् ॥

शकु ॥ उत्तरमदत्त्वैव प्रस्थिता । (१९३)

राजा ॥ स्वगतम् ॥ कथमियं गच्छति (१९४)

जिघृक्षुरिव पुनरिच्छां निगृह्य ॥ अहो चेष्टानुरूपिणी कामिजनचित्तवृत्तिः । अहं हि । (१९५)

अनुयास्यन् मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ (१९६)

प्रिय ॥ शकुन्तलामुपेत्य ॥ हला चण्डि णारिहसि गन्तुं । (१९७)

शकु ॥ परिवृत्य सभ्रूभङ्गम् ॥ किं त्ति । (१९८)

प्रिय ॥ दुवे मे रुक्खसेअणके धारेसि तेहिं दाव अत्ताणं मोआवेहि तदो गमिस्ससि ॥ इति बलान्निवर्त्तयति ॥ (१९९)

---

यस्य स तम् अतिथिविशेषस्तुभिक्षया त्यक्त्वा स्वच्छन्दत स्वाभिप्रायात् । अभिप्रायश्छन्द आशय इत्यमरः । गमनमाश्रमवासिनस्तपोवनगतस्य जनस्य न युक्तम् ॥

(१९३) शकु इति । उत्तरं प्रतिवचनम् ॥

(१९४) राजेति । इयं शकुन्तला कथं गच्छति । न गच्छत्विति भावः ॥

(१९५) जिघृक्षुरिति । जिघृक्षुः ग्रहीतुमिच्छुः शकुन्तलामिति शेषः । इच्छां जिघृक्षाम् । निगृह्य दमयित्वा । अहो विस्मये । कामिजनस्य कामवतो मानवस्य चित्तवृत्तिरिच्छा चेष्टा कायकृतव्यापारस्तदनुरूपिणी तत्सदृशरूपा । हि यस्मादहं स्वस्थानादचलन्नपि गत्वेव प्रतिनिवृत्त इति श्लोकीयेनान्वयः ॥

(१९६) अनुयास्यन्निति । सहसा अतर्कितं यथा स्यात् तथा । स्वाविनयव्यक्तिमनासहमानेति यावत् । अतर्किते तु सहसेत्यमरः । मुनितनयां शकुन्तलामनुयास्यन् सन् विनयेन धीरतया वारितो निवर्त्तितः प्रसरो वेगः अनुगमनस्येति शेषः । यस्य स तादृशोऽहम् । प्रसरः प्रणये वेगे इति विश्वः । स्वस्थानादध्यासितभूमेरचलन्नु पदमप्यगच्छन्नपि गत्वा पुनः प्रतिनिवृत्तः पराङ्मुखीभूत इव अस्मीति शेषः । इयमार्य्या ॥

(१९७) प्रियमिति । उपेत्य उपगम्य । हलेत्यादि । अयि चण्डि नार्हसि गन्तुम् । चण्डि अतिकोपने । चण्डस्त्वत्यन्तकोपन इत्यमरः । गौरादित्वान्ङीष् । गन्तुमितोऽन्यत्र गन्तुम् । नार्हसि नोपयुक्तासि ॥

(१९८) शकु इति । परिवृत्य अभिमुखीभूय । सभ्रूभङ्गं भ्रूकौटिल्येन सहितम् । किं त्ति । किमिति किं हेतुकमित्यर्थः । इति हेतुप्रकरणप्रकाशादिसमाप्तिष्वित्यमरः ॥

(१९९) प्रियमिति । दुवे इत्यादि । द्वे मे वृक्षसेचनके धारयसि ताभ्यां तावदात्मानं

राजा ॥ भद्रे वृक्षसेचनादेवात्रभवती परिश्रान्ता तर्कयामि । तथा-
ह्यस्याः । (२००)

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्द्धजाः ॥ (२०१)

तदहमेनामनृणां करोमि ॥ इत्यङ्गुरीयकं ददाति । (२०२)

---

मोचय ततो गमिष्यसि । मे मह्यम् । धारिणा योगे चतुर्थी । वृक्ष सिच्यते अनेनेति वृक्षसेचनमुदककुम्भ । ततोऽस्याः कण । ते धारयसि अन्ये द्वे समानीय मह्यं दातुमङ्गीकृतवती त्वं गृहीतवत्यसि । ताभ्यां ऋणबन्धभूताभ्यां आत्मानं मोचय आत्मानं त्याजय । ताभ्यामित्यत्रापत्नकर्त्तरि तृतीया । निवर्त्तयति स्वस्थानं स्थापयति ॥

(२००) राजेति । भद्रे प्रियवदे । अत्रभवती शकुन्तलाम । परिश्रान्ता जात परिश्रमाम् । तर्कयामि अनुभवामि । तदेव दर्शयति तथाहीति । अस्या शकुन्तलाया बाहू अतिमात्रलोहिततलावित्यादिभि श्लोकीयेनान्वय ॥

(२०१) स्रस्तेति । बाहू स्रस्तौ दुर्बलतयावनतौ अंसौ स्कन्धौ ययोस्तौ । स्कन्धो भुजशिरोऽंसोऽस्त्रीत्यमर । तथा अतिमात्रलोहिते अतिशयेन रक्ते तले पाणितले ययोस्तथाभूतौ च दृश्येते इति शेष । अत्र तलशब्द एव पाणितलवाचक । तलप्रहाराभिहत, तलेनोरस्यताडयदित्यादिवत । एव घटानामुदककुम्भानामुत्क्षेपणादुद्गमनाद्धेतो प्रमाणात स्वाभाविकादधिको दीर्घ इति यावत् । श्वासो निश्वासोऽद्यापि अधुनापि स्तनयो वेपथु कम्पं जनयति । टु वेपृङ कम्पने इति कविकल्पद्रुम । ट्वितोऽथुः भाव इति अथु । तथा वदने घर्माम्भसा स्वेदवारिणा कर्णशिरीषं कर्णाभरणभूतं शिरीषपुष्पं कर्णाद्धि कोमलतया स्वेदसलिललग्नतया च स्पन्दमानं निवर्त्तयतीति कर्णशिरीषरोधि जालकं अस्फुटकोरकरूप बद्धमुद्गतमित्यर्थ । घर्माम्भसा विन्दुकारत्वं प्राप्तमित्यर्थं । जालकं कोरके दम्भे इति मेदिनी । तथा बन्धे बन्धने स्रंसिनि स्खलति सति पर्याकुला प्राप्तविकीर्णभावा मूर्द्धजा केशाश्च एकहस्तेन अपरेण घटोद्वहनादिति भाव । यमिता बद्धा दृश्यन्ते इति शेष । अत्र स्वभावोक्तिरलङ्कार । तदुक्त दर्पणे । नानावस्थ पदार्थानां रूपं साक्षाद् विवृण्वती । स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिरिति । इदं शार्दूलविक्रीडितं नाम वृत्तम् ॥

(२०२) तदिति । तत् तस्मादहमेनां शकुन्तलामनृणां ऋणशून्यां करोमि इत्युक्त्वा अङ्गुरीयकं ददाति अर्पयति । राजेति पूर्वेणान्वय ॥

सख्यौ ॥ प्रतिगृह्य नामाक्षराणि वाचयित्वा च परस्परमवलोकयतः । (२०३)

राजा ॥ अलमन्यथासम्भावनया राज्ञः प्रतिग्रहोऽयम् । (२०४)

प्रियं ॥ तेण हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीविओअं अज्जस्स वअणादो ज्जेव अणिणा एसा भोदु । (२०५)

अन ॥ हला सउन्तले मोआविदासि अणुकम्पिणा अज्जेण अहवा राएसिणा, ता कहिं दाणिं गमिस्ससि । (२०६)

शकु ॥ आत्मगतम् ॥ ण एदं जणं परिहरिस्सं जइ अत्तणो पहविस्सं । (२०७)

प्रियं ॥ किं दाणिं ण गच्छीअदि । (२०८)

---

(२०३) सख्याविति । प्रतिगृह्य गृहीत्वा अङ्गुरीयकमिति शेषः । नामाक्षराणि अङ्गुरीयकगतनामवर्णान् । वाचयित्वा पठित्वा । वचक सन्देशे इति कविकल्पद्रुमः सन्देशः पाठ । अतएव वाचयत्यखिलां लिपिमिति हलायुध उदाजहार ॥

(२०४) राजेति । नामाक्षराणि वाचयित्वा भामवश्य दुष्मन्तं निरचैषीदियमिति निश्चित्याह । अलमिति । अन्यथासम्भावनया मम स्वत्वसम्भावनया । राज्ञः सकाशादयं प्रतिग्रहः । तदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायात् इदं प्रतिगृहीतमित्ययं । ममेति शेषः । अत्र अन्यथासम्भावनया राजस्वग्रहणदोषस्पर्शसम्भावनया अलं राज्ञः सकाशाद् अयं प्रतिग्रहः शकुन्तलाया इति शेष इत्यर्थोऽप्यन्तर्वादभिप्रेत ॥

(२०५) प्रियमिति । तेणेत्यादि । तेन हि नार्हति इदमङ्गुरीयकमङ्गुलीवियोगं आर्य्यस्य वचनादेव अनृणा एषा भवतु । तेन राजप्रतिगृहीतत्वेन । अङ्गुलीवियोगमङ्गुलित्यागम् । नार्हति न कर्त्तुं युक्तं भवति । आर्य्यस्य भवतः । अनृणा मयोपेक्षितऋणा । एषा शकुन्तला ॥

(२०६) अनेति । हलेत्यादि । अयि शकुन्तले मोचितासि अनुकम्पिना आर्य्येण अथवा राजर्षिणा तत् कुत्रेदानीं गमिष्यसि । मोचितासि अनृणीकृतासि । अनुकम्पिना सदयेन । कृपा दयानुकम्पा स्यादित्यमरः । नामाक्षराणि वाचयित्वा जातस्वल्पसंशयादाह अथवेति । राजर्षिणा महाराजेन ॥

(२०७) शकु इति । णेत्यादि । नैतं जनं पर्य्यहरिष्यं यद्यात्मनः प्राभविष्यम् । एतं जनं राजानम् । पर्य्यहरिष्यं पर्य्यत्यक्ष्यम् । आत्मन इति कर्म्मणि षष्ठी । प्राभविष्यं प्रभुरभविष्यम् ॥

(२०८) प्रियमिति । किमित्यादि । किमिदानीं न गम्यते । किं कथम् ॥

शकु ॥ दाणिं किं तुह आअत्तह्मि, जदो मे रोअदि तदो गमिस्सं । (२०८)

राजा ॥ शकुन्तला विलोकयन्नात्मगतम् ॥ किं खलु यथा वयमस्यामियमपि अस्मान् प्रति तथा स्यात्, अथवा लब्धावकाशा मे मनोवृत्तिः । कुत । (२१०)

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यवहिता मयि भाषमाणे ।
कामं न तिष्ठति मदाननसम्मुखीयं
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ (२११)

नेपथ्ये ॥ भो भोस्तपस्विनः तपोवनसन्निहितसत्त्वरक्षणाय सज्जीभवन्तु भवन्तः प्रत्यासन्नः किल मृगयाविहारी राजा दुष्मन्तः । (२१२)

---

(२०९) शकु इति । दाणिमित्यादि । इदानीं किं तवायत्तास्मि । यदा मे रोचते तदा गमिष्यामि । आयत्ता अधीना । अधीने निघ्न आयत्त इत्यमरः । अत्र नाहं तवायत्ता । स्वाधीनाहमित्यभिप्रायो व्यङ्ग्यः । आन्तरिकस्तु महाभागस्येदानीमायत्तास्मीति । यदा यत्काले मे मह्यम् । रोचते प्रीतिकरो भवति । क्रोधेर्ष्योदितप्रयोगात् मे इति चतुर्थी ॥

(२१०) राजेति । किं खल्वित्या वितर्कगर्भः प्रश्नो द्योत्यते । वयमस्यां यथा अनुरक्ता इति शेषः । तथा तद्वदनुरागवती । अनन्तरं तस्या अनुराग निश्चिताह अथवेति । लब्धावकाशा लब्धविषयद्वारा मनोवृत्तिर्निश्चयात्मिका । मदीयो निश्चय शकुन्तलागतानुरागरूपविषयस्यार्थं द्वारमासाद्येत्यर्थः । निश्चय क्षेम द्वारेण शकुन्तलानुराग विषयीकरोतीत्याह कुत इति ॥

(२११) तद् दर्शयति । वाचमिति । यद्यपि मद्वचोभिर्मदुक्तिभिः सह वाचं निजोक्तिं न मिश्रयति न च वदयति तथापि । अध्याहार्यमेतत् । मयि भाषमाणे व्याहरति सति अवहिता सावधाना सती कर्णं ददाति शृणोतीत्यर्थः मदुक्तानीति शेषः । एव कामं प्रकामेन । कामं प्रकामोऽनुमतौ च इति । प्रकामे पादपूरणार्थेऽप्यनुमतौ चेत्यव्ययमेकार्थवर्गे मेदिनी । मदाननस्य मन्मुखस्य सम्मुखी अभिमुखी सती भूयिष्ठं बहुकालं व्याप्य न तिष्ठति वर्तते किन्तु अस्या बालाया दृष्टिः दृक् अन्यो मद्भिन्नो विषयो यस्याः सा तथोक्ता न अभोग्यमर्थं । वसन्ततिलकं नाम वृत्तमिदम् ॥

(२१२) नेपथ्य इति । तपस्विन तपोधन तत्र सन्निहितानामवस्थितानां सत्त्वानां

तुरगखुरहतस्तथाहि रेणु र्विटपविषक्तजलार्द्रवल्कलेषु।
पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमद्रुमेषु॥ (२१३)

राजा॥ स्वगतम्॥ अहो धिक् समान्वेषिणः सैनिकास्तपोवनमभिरुन्धन्ति। (२१४)

पुनर्नेपथ्ये॥ भो भोस्तपस्विनः पर्य्याकुलयन् वृद्धस्त्रीकुमारानेष गजः प्राप्तः। (२१५)

तीव्राघातादभिमुखतरुस्कन्धभग्नैकदन्तः
प्रौढाकृष्टव्रततिवलयासङ्गनाज्जातपाशः।

---

जन्तूनां रक्षणाय त्राणाय। सत्त्वमस्त्री तु जन्तुष्वित्यमरः। सज्जीभवन्तु उद्युक्ता भवन्तु। प्रत्यासन्नः किल निकटवर्त्ती सम्भाव्यते। वार्त्तासम्भाव्ययोः किलेत्यमरः। मृग्यन्ते अन्विष्यन्ते जन्तवोऽस्यां क्रियायामिति मृगया तया विहरति परिक्रामतीति मृगयाविहारी। विहारस्तु परिक्रम इत्यमरः। राजा प्रत्यासन्न इत्यनेन ईतिभीतिर्दर्शिता। यथाह। अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृता इति॥

(२१३) राजप्रत्यासत्तिं प्रमापयति तुरगेति। हि यस्मात् तथा तथा, राजप्रत्यासत्त्या तुरगाणामश्वानां खुरैर्हतस्त्वक्षितो रेणुर्धूलिः। रेणुर्द्वयोः स्त्रियां धूलिरित्यमरः। परिणतः परिणामं गतः सायन्तन इति यावत्। योऽरुणः सविता स इव प्रकाशत इति तथाभूतः पाटलवर्ण इति यावत्। शलभानां पतङ्गानां समूह इव। समौ पतङ्गशलभावित्यमरः। विटपेषु शाखासु विषक्तानि अवसक्तानि जलार्द्राणि मुनीनामवगाहनजलक्लिन्नानि वल्कलानि तरुत्वचो येषां ते तथोक्तेषु आश्रमद्रुमेषु आश्रमवृक्षेषु पतति। उपद्रवाय समुत्थितानां पतङ्गसङ्घानां पाटलवर्णत्वं प्रतापक्षीणतमनक्तयोऽन्वाभिः। शलभसमूहसाम्यख्यापनेन रेणूनामीतिविशेषवदाश्रमोपद्रावकत्वं सूचितम्। विटपेत्यादिविशेषणेन धूलिसम्पर्काद्वल्कलानां मलिनत्वमपेक्ष्यत्वञ्च दर्शितम्। उपमालङ्कारः। इदं पुष्पिताग्रा नाम वृत्तम्। तदुक्तं। अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति। अयुजि विषमे। युजि समे। सङ्केतस्तु। नस्त्रिगुरुस्त्रिलघुश्च मकारो भादिगुरुः पुनरादिलघुर्यः। जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥ गुरुरेको गकारस्तु लकारो लघुरेकक इत्युक्तं। एवमन्यत्राप्यूह्येयम्॥

(२१४) राजेति। धिक् मामिति शेषः। मिलितहस्त्यश्वरथपादातं सेना तत्र एकदेशभूता सैनिकाः। सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते इत्यमरः। अभिरुन्धन्ति पीडयन्ति॥

(२१५) पुनरिति। पर्य्याकुलयन् व्यस्तीकुर्वन्॥

मूर्त्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्म्मारण्यं विशति गजः स्यन्दनालोकभीतः ॥ (२१६)

॥ सर्व्वाः श्रुत्वा ससम्भ्रममुत्तिष्ठन्ति । (२१७)

राजा ॥ स्वगतम् ॥ अहो धिक् कथमपराद्धस्तपस्विनामस्मि भवतु प्रतिगच्छामि तावत् । (२१८)

सख्यौ ॥ महाभाअ इमिणा हत्थिसम्भमेण पज्जाउला म्ह ता अणुजाणीहि णो उडअगमणे । (२१९)

अन ॥ शकुन्तलां प्रति ॥ हला सउन्तले पज्जाउला अज्जा गोदमी भविस्सदि ता एहि सीग्घं एकत्था होम्ह । (२२०)

शकु ॥ गतिरोधं रूपयित्वा ॥ हद्धी हद्धी ऊरुत्थम्भविअम्भलम्हि संवुत्ता । (२२१)

---

(२१६) तीव्रेति । तीव्रादिकान्तादाघातात् अभिमुखस्य सम्मुखीनस्य तरोः वृक्षस्य स्कन्धे प्रकाण्डे भग्न एको दन्तो यस्य स तथोक्तः । एकेनैव दन्तेनाघातसम्भवादिति भावः । तथा गाढं प्रवृद्ध सातिशयमिति यावत् । प्रवृद्ध प्रौढमेधितमित्यमरः । यथा स्यात् तथा आकृष्टो यो व्रततिवलयो लतावलयस्तस्यासङ्गात् सम्बन्धात् जातः पाशो बन्धनं यस्य स तथोक्तः । पाशः पक्षादिबन्धने इति विश्वः । तथा भिन्नं पृथक्कृतं सारङ्गाणां हरिणानां यूथं समूहो येन स तथा स्यन्दनस्य रथस्य आलोकेन दर्शनेन भीतः । यदाह स्यन्दनो रथ इत्यमरः । नोऽस्माकं तपसो धर्म्मारण्यस्य मूर्त्तो मूर्त्तिमान् विघ्न इव गजो वनहस्ती धर्म्मारण्यं विशति पीडयति । अत्रोत्प्रेक्षालङ्कारः । यदुक्तं प्रकाशे । सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यदिति । इदं मन्दाक्रान्ता नाम वृत्तम् ॥

(२१७) सर्व्वा इति । ससम्भ्रमं सत्वरम् ॥

(२१८) राजेति । धिक् मामिति शेषः । तपस्विनामिति सम्बन्धे षष्ठी । अपराद्धः कृतापराधः । भवतु तदिति शेषः । प्रतिगच्छामि स्वस्थानं गच्छामि ॥

(२१९) सख्याविति । महेत्यादि । महाभाग अनेन हस्तिसम्भ्रमेण पर्याकुलाः स्मस्तदनुजानीहि नः उटजगमने । हस्तिसम्भ्रमेण हस्तिनः वेगेन । सम्भ्रमः स वेगसम्भ्रमावितावमरः । पर्याकुला व्यग्राः । अनुजानीहि अनुमन्यस्व । नः अस्मान् ॥

(२२०) अनेति । शकुन्तलां प्रति शकुन्तलामुद्दिश्योक्तवती तावत् । हलेत्यादि । अयि शकुन्तले पर्याकुला आर्य्या गौतमी भविष्यति तदेहि शीघ्रमेकस्था भवामः । पर्याकुला अस्मददर्शनात् व्याकुला । गौतमी वृद्धतापसी धर्म्मशीला । एकस्था मिलिताः ॥

(२२१) शकु इति । गतिरोधं गतेः प्रतिबन्धं रूपयित्वा नाटयित्वा । हद्धीत्यादि ।

राजा॥ स्वैरं स्वैरं गच्छन्तु भवत्यः। आश्रमबाधा यथा न भवति तथाहमपि यतिष्ये। (२२२)

सख्यौ॥ महाभाअ विदिदभूइट्ठोसि सम्पद उवआरमज्झत्थदाए अवरद्धम्ह ता मरिसेहि असम्भाविदसक्कारं भूओवि पच्चवेक्खणणिमित्तं पज्जं विण्णवेम्ह। (२२३)

राजा॥ मा मैव, दर्शनेनैव भवतीनां सम्भूतसत्कारोऽस्मि। (२२४)

शकु॥ हला अणसूए अहिणवकुससूइपरिक्खदं मे चलणं, कुरुवअसाहापरिलग्गञ्च वक्कलं, दाव पडिपालेध मं जाव णं मोआवेमि। इति राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता॥ (२२५)

राजा॥ निश्वस्य॥ गताः सर्व्वाः भवत्वहमपि गच्छामि। शकुन्तला-

---

हा धिक् हा धिक् ऊरुस्तम्भविह्वलास्मि संवृत्ता। हाधिकशब्दाभ्यां सन्तरगते प्रतिबन्धात् विषादात्मनिर्भर्त्सने द्योत्येते। ऊरुस्तम्भविह्वला ऊर्व्वोः स्तम्भेन स्थैर्य्येण विह्वला विक्लवचेता॥

(२२२) राजेति। स्वैरं स्वैरं मन्दं मन्दं अनतितिरयेति भावः। मन्दस्वच्छन्दयोः स्वैरमित्यमरः। आश्रमबाधा आश्रमपीडा। पीडा बाधा व्यथा दुःखमित्यमरः। यतिष्ये यत्नं करिष्ये॥

(२२३) सख्याविति। महेत्यादि। महाभाग विदितभूयिष्ठोऽसि साम्प्रतमुपचारमध्यस्थतया अपराद्धाः स्म तन्मर्षय असम्भावितसत्कारं भूयोऽपि प्रत्यवेक्षणनिमित्तमार्य्यं विज्ञापयामः। विदितं भूयिष्ठं बहुतरं येन स विदितभूयिष्ठः विदितार्थः आकारेङ्गितादिः। साम्प्रतमिदानीमुपचारेषु सत्कारेषु मध्यस्थतया औदासीन्येन हेतुना वयमपराद्धाः कृतापराधाः स्म तन्मर्षय क्षमस्व। असम्भावितोऽकृतः सत्कारः सपर्य्या यस्य स तथोक्तमार्य्यं भूयोऽपि पुनरपि प्रत्यवेक्षणनिमित्तं दर्शनार्थं विज्ञापयामो निवेदयामः॥

(२२४) राजेति। एवं मा मा नहि नहि। सम्भूतसत्कारो जातसत्कारः॥

(२२५) शकु इति। हलेत्यादि। अयि अनसूये अभिनवकुशसूचिपरिक्षतं मे चरणं कुरुवकशाखापरिलग्नञ्च वल्कलं तावत् प्रतिपालयत मां यावदेनं मोचयामि। अभिनवस्य कुशस्य सूच्या शिखया परिक्षतं विद्धम्। सूचिर्न्ना व्यधभेदे च व्यधनीशिखयोरपीति रत्नकोषः। कुरुवकस्तरुविशेषः तस्य शाखायां परिलग्नमतिशयेन लग्नम्। प्रतिपालयत प्रतीक्षध्वम्। एनं वल्कलम्। मोचयामि अपसारयामि। सव्याजं सकपटम्। कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमरः।

दर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति यावदनुयात्रिकाननतिदूरे तपोवनस्य निवेशयामि न खलु शक्तोऽस्मि शकुन्तलादर्शनव्यापारादात्मानं निवर्त्तयितुम्। मम हि। (२२६)

गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥ (२२७)

इति निष्क्रान्ताः सर्वे।

प्रथमोऽङ्कः। (२२८)

---

(२२६) राजेति। निश्वस्य दीर्घमिति शेषः। मन्दौत्सुक्यः अल्पोद्योगः। मूढाल्पापटुनिर्भाग्या मन्दाः इति इष्टार्थोद्युक्त उत्सुक इति चामरः। नगरगमनं राजधानीं प्रतिगमनम्। अनुयात्रिकाननुगामिनः सैनिकान्। वाराद्यैरिति विकल्पात् तपोवनस्यातिदूर इति न पञ्चमी। निवेशयामि संस्थापयामि। न खलु न तु। शक्तः समर्थः। शकुन्तलादर्शनव्यापारादिति यतो वारणमित्यपादाने पञ्चमी। आत्मानं हृदयम्। आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिष्विति विश्वः। निवर्त्तयितुं तस्य प्रवृत्तिं विघातयितुम्। तत्र हेतुमाह ममेति॥

(२२७) गच्छतीति। मम शरीरं पुरोऽग्रतो गच्छति। स्यात् पुरः पुरतोऽग्रत इत्यमरः। असंस्थितं चञ्चलम्। संस्था न्याय्यपथस्थितिरित्यमरः। चेतो मनः पश्चात् धावति शकुन्तलालोलुपत्वादिति भावः। मम किमिवेत्युपमामाह चीनेत्यादि। प्रतिवातं वायोः प्रतिकूलं नीयमानस्य केतोः ध्वजस्य चीनांशुकं चीनदेशोद्भवं सूक्ष्ममिति यावत् वस्त्रमिव। तद् यथा असंस्थितं पश्चाद् धावति तथेत्यर्थः। अत्रोपमालङ्कारः। यदुक्तं चन्द्रालोके। उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरिति। इयमार्या जातिः॥

(२२८) इतीति। इति एवं रूपे। सर्वे नटाः। अङ्कः परिच्छेदः। अङ्कः स्थानेऽन्तिके मन्तौ रूपकोत्सङ्गलक्ष्मसु। नाटकादिपरिच्छेदे चित्रयुक्ते च भूषणे इति विश्वः॥

इति श्रीलक्ष्मणाचार्यसंकलितायामभिज्ञानशकुन्तलटीकायां
प्रवेशिकाख्यायां प्रथमाङ्कविवरणम्॥

---

# द्वितीयोऽङ्कः।

तत प्रविशति विदूषक ।(१)

विदू॥ निश्वस्य॥ भो इदोह्मि एदस्स मिअआसीलस्स रणो वअस्स-भावेण णिव्विसो अअं मिओ अअं वराहो अअं सद्दूलो त्ति, मज्झन्दिणे वि गिह्मे विरलपादवच्छाआसु वणराइसु आहिण्डिअ पत्तसङ्करकसाअ-विरसाइं उसकडुआइं पिज्जन्ति गिरिणईसलिलाइं, अणिअदवेलम्ह उण्होसमंसभूइट्ठं भुञ्जीअदि, तुरअगधावणाह्म सद्देण रत्ति पि मे णत्थि पकामसुइदव्वं महन्ते ज्जेव पच्चूसे दासीए पुत्तेहिं साउणिअलुद्धेहिं कण्णोवघादिणा वणगमणकोलाहलेण पडिबोधिदोह्मि, एत्तिकेण वि मे पीडा ण सवुत्ता जदो अअं गण्डस्स उवरि विप्फोडओ सवुत्तो तेण हि किल अह्मेसु अवहीणेसु तत्थभवदा मिआणुसारिणा अस्समपदं पवि-ट्ठेण मम अधणदाए सउन्तला णाम कावि तवस्सिकण्णआ दिट्ठा तं पेक्खिअ सम्पदं णअरगमणस्स कथम्पि ण करेदि एव ज्जेव चिन्त-अन्तस्स मे पहादा अच्छिसु रअणी का गदी जाव ण किदआरपरिग्गहं पिअवअस्सं पेक्खामि। (२)

---

(१) ततइति। विदूषक शृङ्गारसहायविशेष। तथाच। शृङ्गारस्य सहाया विटचेटविदूषकाद्या स्यु। भक्ता नर्मसु निपुणा कुपितवधूमानभञ्जना शुद्धा इति। तल्लक्षणमाह। कुसुमवसन्ताद्यभिध कर्मवपुर्वेषभाषाद्यै। हास्यकर कलहरति विदूषक स्यात् स्वकर्मज्ञ इति॥

(२) विदू इति। निश्वस्य दीर्घमिति शेष। भो इत्यादि। भो हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्ण अयं मृगो अयं वराहो अयं शार्दूल इति मध्यन्दिनेऽपि ग्रीष्मे विरलपादपच्छायासु वनराजिषु आहिण्डता पत्रसङ्करकषायविरसानि उष्णकटुकानि पीयन्ते गिरिनदीसलिलानि अनियतवेलम् उष्णोष्णमांसभूयिष्ठं भुज्यते

परिक्रम्यावलोक्य च ॥ एसो बाणासणहत्थो हिअआणिहिदपिआअणो वणपुप्फमालाहारी इदो ज्जेव आअच्छदि पिअवअस्सो, भोदु अङ्गभङ्ग-

तुरगगजानाञ्च शब्देन रात्रावपि मे नास्ति प्रकामशयितव्यं महत्येव प्रत्यूषे दास्याः पुत्रैः शाकुनिकलुब्धैः कर्णोपघातिना वनगमनकोलाहलेन प्रतिबोधितोऽस्मि, एतावतापि मे पीडा न संवृत्ता यतोऽयं गण्डस्योपरि विस्फोटकः संवृत्तः तेन हि किल अस्मासु अवहीनेषु तत्रभवता मृगानुसारिणा आश्रमपदं प्रविष्टेन ममाधन्यतया शकुन्तला नाम कापि तपस्वि-कन्यका दृष्टा तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न करोति एवमेव चिन्तयतो मे प्रभाता अक्षिषु रजनी का गतिः यावदेनं कृतदारपरिग्रहं प्रियवयस्यं प्रेक्षे । भो इति अनधिकारामन्त्रणम् । वयस्यभावेन समवयस्कतया । वयस्यः स्निग्धः सवया इत्यमरः । निर्विण्णो दुःखितः अयं मृगोऽयं वराह इत्यादि दर्शयन्निति शेषः । मध्यन्दिने मध्याह्ने । समा-सेऽपि अभिधानाद् विभक्तेरलुक् । ग्रीष्मे ग्रीष्मसमये । विरलाः सान्तराः पादपानां छाया यासु तासु वनराजिषु वनश्रेणीषु । वीथ्यालिरावलिः पङ्क्तिश्रेणीलेखास्तु राजय इत्य-मरः । आहिण्डद्य अश्वर्यं । आङ्पूर्वस्य हिडि गतावित्यस्य रूपं । पत्राणां सङ्करेण विविधजातीनां पत्राणामेकत्र समवायेन । सङ्करोऽग्निचटत्कारे क्षिप्तधूल्याधिक्षेपे च । सम्मार्जन्यां विरुद्धानामेकाधिकरणस्थिताविति शब्दाब्धिः । कषायाणि लोहितानि । निर्यासेऽपि कषायोऽथ सुरभौ लोहितेऽन्यवदिति विश्वः । तथा उष्णानि च तानि कटुका-न्युत्कटूनि चेति उष्णकटुकानि गिरेः पर्वतस्य नद्या निर्झरस्य सलिलानि तोयानि पीयन्ते । अनियता नियमरहिता वेला समयो यत्र तत् यथा स्यात् तथा । कदाचित् पूर्वाह्णे कदाचिन्मध्याह्ने कदाचिदपराह्णे इति यावत् । उष्णोष्णमतप्रायं मांसमेव भूयिष्ठमन्यस्माद् भोजनीयादधिकतरं यत्र तत् भुज्यते च । प्रकामशयितव्यं यथेप्सितशयितव्यम् । कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितमित्यमरः । महत्येव प्रत्यूषे अतिप्रत्यूष एव । दास्याः पुत्रैर्नीचैः । शकुनान् पक्षिणो हिंसन्ति ये ते शाकुनिकाः । शकुन्तिपक्षिशकुनिशकुन्त-शकुनद्विजा इत्यमरः । लुब्धा मृगवधाजीवाः । व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि स इत्यमरः । ते च ते च तैः शाकुनिकलुब्धैः । कर्णोपघातिना श्रुतिकटुना । प्रति-बोधितोऽस्मि जागरितोऽस्मि । एतावता हेतुना । पीडा दुःखम् । संवृत्ता समतीता । वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले इत्यमरः । यदि दुःखं न समतीतं तदा किमभवदित्यत आह यत इति । अयं वक्ष्यमाणोऽर्थः । गण्डस्य व्रणस्य एतेन दुःखपारावारत्वं दर्शितम् । तमर्थं प्रकाशयति तेन हीति । किल श्रुतवार्त्तायाम् । अव-हीनेषु पश्चात्पतितेषु । अधन्यतया अपुण्यवत्तया । सुकृती पुण्यवान् धन्य इत्यमरः । कथां जल्पनम् । अक्षिषु अक्षिव्यापारेषु सत्स्विति शेषः । जाग्रदवस्थायामित्यर्थः । का गतिः क उपायः । गतिः स्त्री मार्गदशयोः ज्ञाने यात्राभ्युपाययोरिति मेदिनी । कृतदारपरिग्रहं कृतविवाहम् ॥

विमलो भविअ चिट्ठिस्सं एवम्पि णाम विस्सामं लहेअं ॥ इति दण्डकाष्ठमवलम्ब्य स्थित । (३)

॥ तत प्रविशति यथानिर्दिष्टो राजा। (४)

राजा ॥ आत्मगतम्। (५)

कामं प्रिया न सुलभा, मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे, रतिमुभयप्रार्थना कुरुते ॥ (६)

स्मित कृत्वा ॥ एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्ति प्रार्थयिता विप्रलभ्यते। कुतः। (७)

स्निग्ध वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया
यातं यच्च नितम्बयो गुरुतया मन्दं विलासादिव ।

---

(३) परीति। परिक्रम्य इतस्तत सञ्चर्य्य। एसो इत्यादि। एष बाणासनहस्तो हृदयनिहितप्रियजनो वनपुष्पमालाधारी इत एवागच्छति प्रियवयस्य । भवतु अङ्गभङ्गविकलो भूत्वा स्थास्यामि। एवमपि नाम विश्राम लभेय। बाणासनहस्तो धनुर्हस्त । हृदयेति। हृदये मनसि निहितो न्यस्त प्रियजन प्रणयिजनो येन स तथोक्त प्रियोत्कण्ठित इत्यर्थ । वनेति। एतस्य स्मरणदाहनिवारणहेतुत्वात विरहावस्था प्रकाशने अनो हेतुगर्भ विशेषणमेतत्। अङ्गेति। अङ्गाना भङ्गेन वक्रतया विकल स्थगितेन्द्रिय । एवमपि इत्य प्रकारेणापि। नाम सम्भाव्ये यदीत्यर्थ । विश्राम मृगयाव्यापारादिति शेष । लभेय प्राप्नुयाम्। दण्डकाष्ठ दारुमययष्टिम्। अवलम्ब्य धृत्वा ॥

(४) तत इति। यथानिर्दिष्टो वनपुष्पमालाधारी वैमनस्यप्रकाशी चेत्यर्थ ॥

(५) राजेति। स्निग्ध वीक्षितमिति श्लोकान्तवाक्यानां कर्त्तृपदमेतत ॥

(६) काममिति। प्रिया शकुन्तला काम पर्य्याप्त न सुलभा नातिसुलभेत्यर्थ । मनो हृदयन्तु तस्या प्रियाया भावस्याभिप्रायस्य दर्शनमात्रेणाश्वसितीति भावदर्शनाश्वासि। भाव सत्तास्वभावाभिप्रायचेष्टात्मजन्मस्वित्यमर । तथा मनसिजे कामे अकृतार्थे अकृतप्रयोजनेऽपि उभयो प्रियाया मम च प्रार्थना रति कुरुते जनयति। अत्र कामापरितार्थतया रत्युत्पादनमित्यापाततो विरुद्धतया भासमानत्वाद् विरोधालङ्कार । यदुक्त प्रकाशे। विरोध सोऽविरोधेऽपि विरुद्धत्वेन यद् वच इति। सुरतार्थतया विरोध, अनुरागार्थतया परीहार । रति स्त्री स्मरदारेषु रागे सुरतगुह्ययोरिति मेदिनी । इयमार्य्या॥

(७) स्मितमिति। स्मित कृत्वा भावविशेषप्रलोभितया शकुन्तलाकृतप्रार्थनादिमान मेऽाऽकिञ्चित्कर तदपि पुन परमार्थ मन्यमानो व्याहरामीति विविच्य मन्द हसित्वा। राजेति पूर्व्वेण सम्बन्ध । मनोगतमिदानीं प्रकाशयति एवमिति। आत्मनोऽभिप्राये-

मा गा इत्युपरुद्धया यदपि तत् सासूयमुक्ता सखी
सर्वं तत् किल मत्परायणमहो कामः स्वतां पश्यति ॥ ( ८ )

विदू॥ तथास्थित एव॥ भो महाराअ ण मे हत्थो पसरदि ता वाआ मेत्तेण जआवीअसि जअदु जअदु भवं। ( ९ )

राजा॥ विलोक्य सस्मितम्॥ कुतोऽयं गात्रोपघातः। ( १० )

विदू॥ कध कुदो त्ति सअं ज्जेव अच्छि भञ्जिअ ण्णस्स कारणं पुच्छसि। ( ११ )

---

णाशयेन सम्भाविता निश्चिता इष्टजनस्य अभिलषितजनस्य चित्तवृत्तिर्मनोरथो येन स तथा भूतः प्रार्थयिता कामयिता जन एव मादृशो भूत्वा विप्रलभ्यते वञ्चितो भवति। तदभिलाषस्य स्वमनःकल्पितत्वेन वस्तुतस्तदभिलाषाभावात् सुतरामलब्धसमागमो भवतीति भावः। तस्याश्चित्तवृत्तिर्निजाभिप्रायमात्रसम्भाविता इत्यं यित्वमाह कुत इति॥

( ८ ) स्निग्धमिति। अन्यतः अन्यस्मिन्नपि दिशि नयने अक्षिणी प्रेरयन्त्या पातयन्त्या तया शकुन्तलया यत् स्निग्धं सप्रणयं वीक्षितं दृष्टम्। तया नितम्बयोः कटिपश्चाद्भागयोर्गुरुतया भारवत्तया। पश्चान्नितम्बः स्त्रीकट्या इत्यमरः। विलासात् यच्च भावोत्कलतभावविशेषादिव। तदुक्तम्। तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिष्विति। तात्कालिको दयितालोकनादिभवः। मन्दं मन्दं यथा स्यात् तथा यच्च यातं गतम्। तथा मा गा न गच्छ इति एवमुक्ता उपरुद्धया प्रियंवदानिवारितया तया सखी प्रियंवदा सासूयं दोषाविष्कारसहितं तत् किमिति न गमिष्यामीति सभ्रूभङ्गवाक्यं यदपि उक्ता अभिहिता तत् सर्वं मत्परायणं मदाश्रयं किल मदाश्रयमेव सम्भावयामि इत्यर्थः। परायणमभीष्टे स्यात् तत्परा श्रययोरपीति मेदिनी। अहो कामोऽभिलाषः स्वतामन्योद्देशानामपि क्रियाणामात्मीयतां पश्यति। उक्तं हि। शेषप्रस्थापने स्निग्धै वीक्षितैर्मृदुभाषितैः। दूतीसम्प्रेषणैर्नार्या भावाभिव्यक्तिरिष्यत इति॥

( ९ ) विदू इति। तथास्थितो दण्डकाष्ठमवलम्ब्य स्थितः। भो इत्यादि। भो महाराज न मे हस्तः प्रसरति तद् वाचामात्रेण जाप्यसे। जयति जयति भवान्। प्रसरति प्रचलति। वाचामात्रेण न हस्तोद्यमेनेत्यर्थः। जाप्यसे जयाय प्रेर्यसे॥

( १० ) राजेति। गात्रोपघातो गात्रपीडा॥

( ११ ) विदू इति। कथमित्यादि। कथं कुत इति। स्वयमेवाक्षि भङ्क्त्वा अश्रुकारणं पृच्छसि। कथमिति पृच्छसीति शेषः। भङ्क्त्वा पीडयित्वा। तथा च भवतैव जनितमेतत्कारणं तत् कथं कुत इति पृच्छसीति भावः॥

राजा॥ न खल्ववगच्छामि भिन्नार्थमभिधीयताम्। (१२)

विदू॥ जं वेदसो खुज्जस्स लीलं विडम्बेदि तं किं अत्तणो पहावेण आधवा णईवेअस्स। (१३)

राजा॥ नदीवेगस्तत्र कारणम्। (१४)

विदू॥ ममावि भवं। (१५)

राजा॥ कथमिव। (१६)

विदू॥ जुत्तं णाम एव्व जं तुए रज्जकज्जाइं उज्झिअ तादिसं अक्खलिदपदं पदेसं च वणचलवित्तिणा होदव्वं त्ति, किं एत्थ मन्तीअदु, अहं उण बह्मणो पच्चहं सावदाणुसरणेहिं सक्खोहिदसन्धिबन्धणाणं अत्तणो अङ्गाणं अणीसोह्मि ता पसीद मे एक्काहम्मि दाव विसमीअदु। (१७)

(१२) राजेति। भिन्न कुब्जादितर अर्थ स्तात्पर्य्यं यस्य तत् तथोक्त वाक्यमभिधीयतामुच्यताम्॥

(१३) विदू इति। जमित्यादि। यद् वेतस कुब्जस्य लीला विडम्बयति तत् किमात्मन प्रभावेण अथवा नदीवेगस्य। वेतसो वानीर। सरिद्भ्यन्तररूढ इति शेष। कुब्जस्य पुरुषस्य लीला क्रियाम्। लीला विलासक्रिययोरित्यमर। यद् विडम्बयति नदीवेगवशात् तिरश्चीन तया यदनुकरोति। तत् वक्रीभावेन कुब्जलीलाविडम्बनम्। प्रभावेण शक्त्या। नदीवेगस्य प्रभावेणेति सम्बन्ध। प्रभाव शक्तितेजसोरिति विश्व॥

(१४) राजेति। तत्र वेतसस्य कुब्जलीलाविडम्बने॥

(१५) विदू इति। ममेत्यादि। ममापि भवान्। भवान् कारणमित्यनुषङ्ग॥

(१६) राजेति। सुगमम्

(१७) विदू इति जुत्तमित्यादि। युक्तं नामैव यत् त्वया राज्यकार्य्याणि उज्झित्वा तादृशमस्खलितपद प्रदेशञ्च वनचरवृत्तिना भवितव्यमिति। किमत्र मन्त्यताम् अहं पुन ब्राह्मण प्रत्यहं श्वापदानुसरणै स क्षोभितसन्धिबन्धनानाम् आत्मनोऽङ्गानामनीशोऽस्मि तत् प्रसीद मे एकाहमपि तावद् विश्रम्यताम्। राज्यकार्य्याणि प्रजापालनादीनि अस्खलितपद विरामरहितस्य तादृशप्रदेश वनगहनञ्च उज्झित्वा त्यक्त्वा त्वया वनचरस्य व्याधादेरिव वृत्ति मृगयादिरूप आजीवो यस्य स तथोक्तेन यद् भवितव्यम्। विमृश्य बुद्धिना भविष्यमितिभाव भावे तव्य। इत्येव तथाभूतत्व नाम युक्तम्। नाम सम्भाव्ये। अत्र विषये किं मन्त्र्यतामुपदिश्यता पदेति शेष। स प्रश्ने गौ। न किमप्युपदेष्टव्यमिति

राजा ॥ आत्मगतम् ॥ अयमेवमाह, ममापि कण्वसुतामनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः। तथाहि। (१८)

न नमयितुमधिज्यमुत्सहिष्ये धनुरिदमाहितसायकं मृगेषु।
सहवसतिमुपेत्य यैः प्रियायाः कृत इव लोचनकान्तिसंविभागः ॥ (१९)

विदू ॥ राज्ञो मुखमवलोक्य ॥ अत्तभवं किम्पि हिअए कदुअ मन्तेदि नारण्णे क्खु मए रुदिदं। (२०)

राजा ॥ सस्मितम् ॥ अनतिक्रमणीयं सुहृद्वाक्यमिति स्थितोऽस्मि। (२१)

---

भाव। अहं पुनरहं तु ब्राह्मण प्रत्यहं प्रतिदिनं श्वापदानां हिंस्रपशूनाम्। श्वापदो ना हिंस्रपशाविति शब्दाब्धिः। अनुसरणैरनुगमनैः कर्तृभूतैः संक्षोभितानि सञ्चालितानि सन्धिबन्धनानि सन्धीनां बन्धनानि येषां तानि तथोक्तानां आत्मनोऽङ्गानामनीशः चालनाक्षमोऽस्मि। तत् तस्मात्। प्रसीद प्रसन्नो भव। एकाहमिति देशाध्वकालेति कर्मत्वम्। विश्रम्यता त्वयेति शेषः। भावे णीविभक्तिः। विस्समिदुमिति पाठे विश्रमितुं प्रसीदेत्यन्वयः ॥

(१८) राजेति। अयं प्रियवयस्यः। आह ब्रवीति। कण्वसुतां शकुन्तलाम्। निरुत्सुकमनुद्यमम् ॥

(१९) न नमयितुमिति। इदमधिज्यम् ज्यां गुणमधिकृत्य वर्त्तमानं ज्यायुक्तमित्यर्थः। आहितः संयोजितः सायकः शरो यत्र तत् तथोक्तम्। शरे खड्गे च सायकः इत्यमरः। धनुः मृगेषु विषयेषु नमयितुं गुणाकर्षणेन वक्रीकर्तुं न उत्सहिष्ये उत्साहं न करिष्यामि। अत्रोद्देश्यविधेयभावेन मृगान् हेतुगर्भं विशिनष्टि सहेत्यादि। यैः मृगैः सहवसतिं सहवासम्। वसतिः स्यात् स्त्रियां वासे यामिन्याञ्च निकेतने इति मेदिनी। उपेत्य प्राप्य प्रियायाः शकुन्तलायाः लोचनयोः नेत्रयोः कान्तेः शोभायाः स विभागो विभज्य स्वीकारः कृत इव तेषु मृगेष्वित्यर्थः। तथाच प्रियालोचनकान्तिजुषः परं सादरमेव द्रष्टव्या न हन्तव्या इति भावः। अत्रोत्प्रेक्षालङ्कारः। पुष्पिताग्रा नाम वृत्तमिदम्। लक्षणमनूक्तम् ॥

(२०) विदू इति। अत्तेत्यादि। अत्र भवान् किमपि हृदये कृत्वा मन्त्रयते अरण्ये खलु मया रुदितम्। किमपि अनिर्वचनीयम्। हृदये कृत्वा चिन्तयित्वा। मन्त्रयते अस्पष्टं व्याहरति। अरण्ये इति। तथाच मद्वचनमरण्यरोदनवत् किमपि समाश्वासनप्रतिवचनमाप्नोतीति भावः ॥

(२१) राजेति। अनतिक्रमणीयमलङ्घनीयम्। इति अतो हेतोः। स्थितोऽस्मि मृगयार्थं गमनाद्विरतोऽस्मि ॥

विदू॥ सपरितोषम्॥ तेण हि तुमं चिरं जीव॥ इत्युत्थातुमिच्छति। (२२)

राजा॥ तिष्ठ शृणु मे सावशेषं वचः। (२३)

विदू॥ आणवेदु भवं। (२४)

राजा॥ विश्रान्तेन भवता ममाप्यन्यस्मिन्ननायासे कर्मणि सहायेन भवितव्यम्। (२५)

विदू॥ किं मोदअखण्डिआए। (२६)

राजा॥ यद् वक्ष्यामि। (२७)

विदू॥ गहीदो क्खणो। (२८)

राजा॥ कः कोऽत्र भोः। (२९)

दौवारिकः प्रविश्य॥ आणवेदु भट्टा। (३०)

राजा॥ रैवतक। सेनापतिस्तावदाहूयताम्। (३१)

---

(२२) विदू इति। सपरितोषं ससन्तोषम्। तेणेत्यादि। तेन हि त्वं चिरं जीव। तेन हेतुना। इति उक्त्वेति शेषः। इच्छति उपक्रमते॥

(२३) राजेति। शृणु मे वच इत्येतावन्मात्रोक्तौ श्रुतं यदुक्तमिति प्रत्युक्तिं सम्भाव्याह सावशेषमिति। सावशेषं शेषपर्य्यन्तम्॥

(२४) विदू इति। आणवेत्वादि। आज्ञापयतु भवान्॥

(२५) राजेति। विश्रान्तेन मृगयाव्यापारात् कृतविश्रामेण। अन्यस्मिन् मृगये-तरस्मिन्। अनायासे सुकरे॥

(२६) विदू इति। किमित्यादि। किं मोदकखादिकायाम्। खादिका खादनम्। लड्डो कभात इत्युक्तेरन्यत्रापि प्रयोगात इत्युक्ते भावे ण्वुल्। स्त्रियां क्तिन् इति येन चिकीर्षा यस्य मोदकेति ज्ञापकात् स भक्षिया वक्तव्य॥

(२७) राजेति। यद् वक्ष्यामि तदेवेति शेष॥

(२८) विदू इति। गहीदेत्यादि। गृहीतः क्षणः। क्षणो निर्व्यापारस्थिति। निर्व्यापारस्थितौ कालविशेषोत्सवयो क्षण इत्यमरः। गृहीतोऽवलम्बित। नोदास्यामि न शान्मदपि किमपि करिष्यामीति भाव। गृहीत प्रतीक्षितः क्षण समय इत्यन्ये॥

(२९) राजेति। भो अत्र कः कः वर्त्तते इति शेष॥

(३०) दौवारिक इति। द्वारे नियुक्तो दौवारिक। ठषे कादिति ठक। द्वार-स्वरेति वकारस्य उमागम। किति वृद्धिरिति वृद्धि। आणवेत्वादि। आज्ञापयतु भर्त्ता॥

(३१) राजेति। रैवतक इति दौवारिकनामधेयम्॥

दौवा॥ तह ॥ इति निष्क्रम्य सेनापतिना सह प्रविश्य ॥ एदु एदु अज्जो, एस आलावदिण्णअमुहो भट्टा इध ज्जेव चिट्ठदि उवसप्पदु णं अज्जो। (३२)

सेना॥ राजानमवलोक्य स्वगतम् ॥ दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्ता। तथाहि देवः। (३३)

अनवरतधनुर्ज्यास्फालनक्रूरकर्मा
रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्त्ति॥ (३४)

उपगम्य॥ जयति जयति स्वामी। स्वामिन् गृहीतश्वापदमरण्यं तत् किमन्यदनुष्ठीयताम्। (३५)

राजा ॥ भद्रसेन ! भग्नोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन। (३६)

सेना॥ जनान्तिकम्॥ सखे माधव्य स्थिरप्रतिज्ञो भव अहं तावत् स्वामिनश्चित्तमनुवर्त्तिष्ये। (३७)

प्रकाशम्॥ देव प्रलपत्येष वैधेयः ननु प्रभुरेव निदर्शनम्। पश्यतु देवः। (३८)

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः॥(३९)

---

मापिता श्वापदा हि सजन्तवो येन तत् तथोक्तम्। भवतीति शेष। तत् तस्मात् अन्यत मृगयाप्रस्थानेतरत् किमनुष्ठीयता क्रियताम्। प्रश्ने गो। अस्माभिरिति शेष॥

(३६) राजेति। भद्रसेनेति नाम। मृगयापवादिना मृगयानिन्दकेन। अवर्णाक्षेपनिर्वादपरीवादापवादवत्। उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हण इत्यमर। माधव्येन तन्नाम्ना प्रियवयस्येन॥

(३७) सेनेति। जनान्तिकं राज्ञोऽप्रकाशम्। स्थिरप्रतिज्ञो मृगयानिषेधे दृढाध्यवसाय। अनुवर्त्तिष्ये अनुचरिष्यामि। चित्तमस्य कीदृगित्यनुभविष्यामीति भाव॥ •

(३८) प्रकाशमिति। राज्ञ इति शेष। प्रलपति अनर्थकं वक्ति। प्रलापोऽनर्थकं वच इत्यमर। वैधेयो मूर्ख। अज्ञे मूढयथाजातमूर्खवैधेयबालिशा इत्यमर। प्रभुर्भवान्। निदर्शनं दृष्टान्त॥

(३९) मेद इति। वपु शरीर मेदसो देहस्थौल्यकरधातुविशेषस्य छेदेन खण्डनेन अपगमेनेति यावत्। कृश क्षीणमुदर यत्र तत्। तदुक्त भावप्रकाशे। अव्यायामदिवास्वप्नश्लेष्माहारसेविन। मधुरोऽन्नरस प्राय स्नेहान्मेदो विवर्द्धयेदिति। अन्यच्च तत्रैव। मेदो हि सर्वजन्तूनामुदरेष्वस्थिषु स्थितम्। अतएवोदरे वृद्धि प्रायो मेदस्विनो भवेदिति। अतएव लघु विगतभार सत् उत्साहयोग्य भवति। एतेनाहवेषु निरलसभावसम्भावना दर्शिता। अपि एवं सत्त्वाना जन्तूना भयक्रोधयो भये क्रोधे च विकृतिमत प्राप्तविकारं चित्त लक्ष्यते अनुभूयते। एतेन युध्यमानस्य रिपो र्विकारदृष्ट्या भीति क्रोधो वेति निश्चयप्रकारा दर्शिता। एवं चले जङ्गमे लक्ष्ये शरव्ये इषवो बाणा यत् सिध्यन्ति सफला भवन्ति धन्विनां धनुष्मताम्। धन्वी धनुष्मान् धानुष्क इत्यमर। स च उत्कर्षो

विदू॥ सरोषम्॥ अवेहि रे उच्छाहहेतुअ। अत्तभवं पइदिं आवण्णो, तुमं दाव दासीए पुत्तो अडइदो अडइं आहिण्डन्तो जाव सिआलमिअलोलुअस्स कस्स वि जिण्णरिच्छस्स मुहे णिवडिदो होहि। (४०)

राजा॥ सेनापते आश्रमसन्निकर्षे स्थितोऽस्मीति वचनं ते नाभिनन्दामि। अद्य तावत्। (४१)

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः॥ (४२)

---

मैथुनम्। एतेन शरविद्यापकौशलं दर्शितम्। अतो मिथ्या हि वितथमेव मृगया व्यसनं व्यसनगणान्तर्भूतां वदन्ति मन्वादय इति शेषः। कुतः कस्माद् व्यापारादीदृग् विनोदः एतमानन्दः न कुतोऽपीत्यर्थः। हिरवधारणे। हि हेताववधारणे इत्यमरः। व्यसनान्याह मनुः। कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु। मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्यत्रिकं वृथाट्या च कामजो दशको गणः। पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक इति। वृत्तमिदं शार्दूलविक्रीडितं नाम॥

(४०) विदू इति। अवेहीत्यादि। अपेहि रे उत्साहहेतुक। अत्तभवान् प्रकृतिमापन्नः, त्वं तावद् दास्याः पुत्र अटवीतोऽटवीमाहिण्डमानो यावत् शृगालमृगलोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे निपतितो भव। अपेहि अपगच्छ। प्रकृतिः स्वभावः। प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोरिति मेदिनी। दास्याः पुत्रो नीच। आहिण्डमानः परिभ्रमन्। यावदवधारणे। जीर्णऋक्षस्य वृद्धभल्लूकस्य। [illegible] अच्छभल्लोऽपि भल्लूके। अच्छाच्छभल्लभल्लूका इति चामरः। [illegible] कश्चित् पाठः। [illegible] अयं हि प्रायेणाटवी [illegible] इति परिहासः॥

(४१) राजेति। नाभिनन्दामि न बहु मन्ये॥

(४२) गाहन्तामिति। महिषा शृङ्गैर्मुहुर्वारंवारं ताडितमाहतं निपानस्य जलाशयस्य सलिलं जलं गाहन्तां विलोडयन्तु। मृगकुलं हरिणसमूहः छायायां बद्धं कदम्बकं समूहो येन तत् तथोक्तं सत् रोमन्थम् [illegible]। [illegible]

सेना॥ यथा प्रभविष्णवे रोचते। (४३)

राजा॥ तेन हि निवर्त्तय पुरोगतान् धनुर्ग्राहिणः यथा च मे सैनिकास्तपोवनं नाभिरुन्धन्ति दूरात् परिहरन्ति च तथा निषेद्धव्याः। पश्य। (४४)

शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला अपि सूर्यकान्तास्ते ह्यन्यतेजोऽभिभवाद्दहन्ति ॥(४५)

सेना॥ यथाज्ञापयति स्वामी। (४६)

विदू॥ भो उच्छाहहेतुअ णिक्कम णिक्कम। (४७)

सेनापति र्निष्क्रान्तः। (४८)

---

राणां पतिभिर्यूथनाथैर्विश्रब्धैरनाक्रमनालोकनाद् विश्वासवद्भिः सद्भिः। समौ विस्रम्भविश्वासावित्यमरः। पल्वले अल्पे सरसि। पल्वलस्त्वल्पसर इत्यमरः। मुस्तानां क्षतिः क्षयः क्रियताम्। तथा इदमस्मद्धनुश्च शिथिल. एकस्याः कोटेरवमुक्तो ज्याबन्धो मौर्व्या बन्धो यस्य तत् तथाभूतं सत् विश्रामं लभताम्॥

(४३) सेनेति। यथा यत्प्रकारः। प्रभविष्णवे प्रभवे भवते इति यावत्। रोचते प्रीतिं जनयति। तथैव भवत्विति शेषः॥

(४४) राजेति। नाभिरुन्धन्ति नाक्रामन्ति। परिहरन्ति त्यजन्ति। चेतसस्थापयति पश्येति॥

(४५) शमेति। शमः शान्तिरेव प्रधानं येषु तेषु तपोवनेषु तपश्चर्यारण्येषु गूढमलक्ष्यमाणं दाहो भस्मीकरणं आत्मा स्वभावो यस्य तत् तथोक्तम्। आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म चेत्यमरः। तेजोऽस्ति। तथाहि सूर्यकान्ताः सूर्यरश्मिसम्पर्केणाग्न्युद्गारिणो मणिविशेषाः स्पर्शानुकूलाः स्पर्शे अनुकूलाः सुखयितारः तेऽपि अन्येन तेजसा अभिभवादाक्रमणाद् दहन्ति दाहं जनयन्ति। अत्र दृष्टान्तोऽलङ्कारः। वृत्तमिदमुपजातिर्नाम। यदुक्तम्। यत्र द्वयोरप्यनयोस्तु पादा भवन्ति सीमन्तिनि चन्द्रकान्ते। विद्वद्भिराद्यैः परिकीर्त्तिता सा प्रयुज्यतामित्युपजातिरेषेति। अनयोरिन्द्रवज्रोपेन्द्रवज्रयोः। उपेन्द्रवज्रा कथ्यते, सा चागुरुपादादिवर्णोपेन्द्रवज्रोच्यते॥

(४६) सेनेति। सुगमम्॥

(४७) विदू इति। भो इत्यादि। भो उत्साहहेतुक निष्क्राम निष्क्राम। सुगमम्॥

(४८) सेनेति। सुगमम्॥

न च परिहार्य्येऽत्र वस्तुनि दुष्मन्तस्य मनः प्रवर्त्तते। (६१)

विदू॥ ता कधेहि। (६२)

राजा॥ ललिताप्सरोभवं किल मुनेरपत्यं तदुज्झिताधिगतम्।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम्॥ (६३)

विदू॥ विहस्य॥ भो जधा पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिडीए सद्धा भोदि तधा अन्तेउरइत्थियारअणपरिभोइणो भअदो इअं पत्थणा। (६४)

राजा॥ सखे तावदेनां न जानासि येन त्वमेवमवादीः। (६५)

---

(६१) अधुना वस्तुतोऽभ्यर्णनीयतां वेदयितुमाह न चेति। परिहार्य्ये त्याज्येऽत्र वस्तुनि पदार्थे च दुष्मन्तस्य मनो न प्रवर्त्तते प्रवृत्तिमद् भवति॥

(६२) विदू इति। अपरिहार्य्यतावीजं शुश्रूषमाण आहेत्यादि। तत् कथय। तत् तावत्॥

(६३) राजेति। अपरिहार्य्यतावीजं कथयति ललितेति। ललिताप्सरोभवं ललिताभ्यो रमणीयाभ्यो अप्सरोभ्यो भूतं तत् किल शकुन्तलारूपं वस्तु मुनेः कण्वस्य मात्रा उज्झितं सत् मुनिना अधिगतं लब्धमित्युज्झिताधिगतमपत्यं न त्वौरसमित्यर्थः। अत्र प्रधानेनापत्येन सम्बन्धात् मुनेरिति षष्ठी न त्वधिगतमित्यस्य कर्त्तृत्वात् तृतीया तस्य गुणीभूतत्वात्। अतोऽत्र उपपदविभक्तेः कारकविभक्तिर्गरीयसीति न्यायेन तृतीयया षष्ठ्या बाधस्याभावो न दोषाय यत उक्तम्। उत्सर्गस्यापवादेन प्रधानेन गुणस्य च। बाधो विधीयते यस्मात् ततोऽनेन न बाधिता इति। उपमया विशिनष्टि अर्कस्येति। शिथिलं च्युतं अर्कस्य आकन्देति प्रसिद्धस्य पादपस्य उपरि च्युतं गलितं नवमालिकायाः कुसुमं पुष्पमिव। यथा नवमालिकाकुसुमं ललितलताभवमेव उपरिपातादर्कस्य वा कुसुममिव दृश्यते तदुज्झिताधिगतं न तु प्रसूतं कुसुमं तथेत्यर्थः। अत्रोपमालङ्कारः। इयमार्य्या॥

(६४) विदू इति। विहस्य मध्यमं हसित्वा। मध्यमं स्यात् विहसितमित्यमरः। भो इत्यादि। भो यथा पिण्डखर्ज्जूरैरुद्वेजितस्य तिन्तिड्यां श्रद्धा तथा अन्तःपुरस्त्रीरत्नपरिभोगिनो भवत इयं प्रार्थना। पिण्डखर्ज्जूरे पिण्डीभूते खर्ज्जूरे। पिण्डी स्यात् पिण्डीतगरेऽप्याहुः खर्ज्जूरभेदयोरिति मेदिनी। उद्वेजितस्यातिमाधुर्य्यजनितारुचिकस्य। तिन्तिड्यां चिञ्चायां। अम्लत्वादिति भावः॥

(६५) राजेति। एनां शकुन्तलां। अवादीरुक्तवानसि॥

विदू॥ तं क्खु रमणीअं णाम जं भअदोवि विह्मअं उप्पादेदि ।(६६)

राजा॥ वयस्य किं बहुना । (६७)

चित्ते निवेश्य परिकल्पितसर्व्वयोगान्
रूपोच्चयेन विधिना विहिता कृशाङ्गी ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातु र्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ (६८)

विदू॥ 'सव्वधा पच्चादेसो क्खु सा रूववदीणं । (६९)

---

(६६) विदू इति । तमित्यादि । तत् खलु रमणीयं नाम यद् भवतोऽपि विस्मयमुत्पादयति । तं वस्तु । खलु निश्चये । नाम सम्भावनायाम् । रमणीयमेव सम्भावयामीत्यर्थः ॥

(६७) राजेति । शकुन्तलाया रूपं वर्णयिष्यन्नामन्त्रयते वयस्येति । बहुना वर्णनेनेति शेषः ॥

(६८) चित्ते इति । धातुः विधातुः विभुत्वं निर्म्माणे प्रभुत्वम् । विभुः शिवे प्रभौ नित्ये इति विश्वः । तथा तस्याः शकुन्तलाया वपुः शरीरञ्च अनुचिन्त्य चिन्तयित्वा स्थितस्य मे मम सम्बन्धे । स्थितस्येत्यध्याहार्य्यं क्रिययोरनेककर्त्तृकत्वापत्तेः । सा कृशाङ्गी तन्वी शकुन्तला परिकल्पिता अभिनवसृष्टा न तु सृष्टा मद्दृष्टपूर्व्वा इति भावः । ये सर्व्वयोगाः निर्म्माणस्य निखिलोपायाः उपादानकारणानीति यावत् । योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः । तान् चित्ते मनसि निवेश्य निधाय । न तु निर्म्मीयमाणवस्तुनः सौकुमार्य्यभङ्गभिया हस्तयोर्निवेश्येति भावः । रूपोच्चयेन सौन्दर्य्यराशिना करणेन । रूपमाकारसौन्दर्य्यं नाणकेष्वपि दृश्यते इति त्रिकाण्डशेषः । विधिना स्रष्ट्रा विहिता निर्म्मिता अतएव अपरा जगत्सु वर्त्तमानेभ्यः स्त्रीरत्नेभ्यः पृथग्विधा स्त्रीरत्नसृष्टिः एव स्त्रीरत्नं प्रतिभाति प्रकाशते । कृशाङ्गीत्यत्र स योगोपपत्ताङ्गवाचिनः प्रतिषेधेऽपि अङ्गादन्नाना योपादौ पाठादीप् । अङ्गाद्यन्ता यथा । मृद्वङ्गी सुदतीति च इत्यादि । पुच्छाः न ... तथा ... इति । अत्र लोकदृष्ट्या सृष्टौ अभेदेऽपि तद्भेदनिश्चयस्य सिद्धत्वादतिशयोक्तिरलङ्कारः । यदुक्तं दर्पणे । सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते । भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययः । पौर्व्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा मता इति । तद्विपर्य्ययः अभेदे भेदः सम्बन्धे असम्बन्धः । दण्डिनापि । विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी । असावतिशयोक्तिः स्यादिति । विशेषस्य उत्कर्षस्य । वृत्तमिदं वसन्ततिलकं नाम ॥

(६९) विदू इति । सव्वधेत्यादि । सर्व्वथा प्रत्यादेशः खलु सा रूपवतीनाम् ।

राजा ॥ परिजनानवलोक्य ॥ मृगयावेशमपनयन्तु भवन्तः । रैवतक ! त्वमपि स्वनियोगमशून्यं कुरु । (४९)

रैव॥ जं महाराओ आणवेदि ॥ इति निष्क्रान्तः ।(५०)

विदू॥ किदं भअदा सम्पदं णिम्मक्खिअं ता इमस्सिं पादवच्छाआविरइदविदाणसणाहे सिलाअले उवविसदु भवं जाव अहम्मि सुहासीणो होमि। (५१)

राजा॥ गच्छाग्रतः। (५२)

विदू॥ एदु एदु भवं ॥ उभौ परिक्रम्योपविष्टौ। (५३)

राजा॥ सखे माधव्य अनाप्तचक्षुःफलोऽसि येन त्वया द्रष्टव्यानां परं न दृष्टम्। (५४)

विदू॥ णं भवं ज्जेव मे अग्गदो वट्टदि। (५५)

---

(४९) राजेति। परिजनान् परिवारजनान्। अपनयन्तु त्यजन्तु। स्वनियोगं द्वारे द्वारे नियुक्तत्वादस्य। अशून्यं कुरु शून्यं न कुरु आत्मनेति शेषः। तत्र गच्छेति भावः। अथवा स्वनियोगं स्व मत्प्रादेशमशून्यं कुरु पालय ॥

(५०) रैवेति। जमित्यादि। यन्महाराज आज्ञापयति ॥

(५१) विदू इति। किदमित्यादि। कृतं भवता साम्प्रतं निर्मक्षिकं तदस्मिन् पादपच्छायाविरचितवितानसनाथे शिलातले उपविशतु भवान् यावदहमपि सुखासीनो भवामि। साम्प्रतमिदानीम्। निर्मक्षिकं मक्षिकापदसंचाररहितम्। जनशून्यमित्यर्थः। पादपेति। पादपस्य शाखिनो या छाया तया विरचितं सम्पादितं यद् वितानं चन्द्रातपस्तत्सनाथे तद्युक्ते अतः विशिष्टे सनाथयतिशयितम्। शिलातले शिलास्वरूपे। अथ सत्त्वपयोरस्मो तत्रमितप्रमर। यावत् यथा येनेत्यर्थः ॥

(५२) राजेति। सुगमम् ॥

(५३) विदू इति। एदु इत्यादि। एतु एतु भवान्। उभौ राजा विदूषकश्च ॥

(५४) राजेति। चक्षुःफलं रमणीयसन्दर्शनं अनाप्तमप्राप्तं तद् येन स। परं श्रेष्ठम् ॥

(५५) विदू इति। णमित्यादि। ननु भवानेव मे अग्रतो वर्त्तते। मदग्रतस्त्वमेव। दृष्टव्यतमस्त्वं भवतो मदग्रवर्तित्वात् कथं दृष्टव्यानां परं न दृष्टं मयेति भावः ॥

राजा ॥ सर्व्वः खलु कान्तमात्मानं पश्यति अहन्तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि । (५६)

विदू ॥ स्वगतम् ॥ भोदु ण से प्पसरं वड्ढयिस्सं । (५७)

प्रकाशम् ॥ भो जइ सा तवस्सिकण्णआ अणब्भत्थणीआ ता किं ताए दिट्ठआए । (५८)

राजा ॥ धिङ्मूर्ख । (५९)

निवारितनिमेषाभि र्नेत्रपङ्क्तिभिरुन्मुखः ।
8 नवामिन्दुकलां लोकः केन भावेन पश्यति ॥ (६०)

---

(५६) राजेति । सर्व्वं खलु सर्व्व एव जन आत्मानं स्वं कान्तं सुन्दरं पश्यति अहन्तु आश्रमललामभूतामाश्रमभूषणस्वरूपां । प्रधानध्वजलिङ्गेषु पुण्ड्रवाजिभिवरूपेषु । भूषावाजिप्रभावेषु ललाम स्याल्ललाम चेति रुद्रः । तां शकुन्तलामेव अधिकृत्य अभिप्रेत्य ब्रवीमि दृष्टव्यानां परमिति वच्मि ॥

(५७) विदू इति । स्वगतमनतिव्यक्तम् । भोदु इत्यादि । भवतु नास्य प्रश्रयं वर्द्धयिष्यामि । प्रश्रय प्रणयम् । प्रश्रय प्रणय समावित्यमरः ॥

(५८) प्रकाशमिति । भो इत्यादि । भो यदि सा तपस्विकन्यका अनभ्यर्थनीया तद् किं तया दृष्टया । तपस्विनो मुने कन्यका तपस्विकन्यका । अतोऽनभ्यर्थनीया भवत इति शेषः । किं फलमिति शेषः ॥

(५९) राजेति । परिज्ञातामपि वस्तुतोऽभ्यर्थनीयतां पश्चाद् वेदयिष्यन्ननभ्यर्थनीयाया दृष्टे वैफल्यमिति यदुक्तं विदूषकेण तदेव प्रथमं खण्डयितुं निर्भर्त्सयन्नाह धिगिति । मूर्खेति सम्बोध्य श्लोकेन पृच्छति ॥

(६०) निवारितेति । लोको जनः शम्भो र्मौलिस्थितिरिच्छातप्रेक्षायामेकत्वम् । उन्मुख ऊर्द्धमुखः सन् निवारितास्त्याजिता निमेषाः स्पन्दनानि याभिस्ताभि र्नेत्रपङ्क्तिभि-र्नेत्रश्रेणिभि र्नवां प्रतिपद्युदितामिन्दुकलां कलामात्रमिन्दुं केन भावेनाभिप्रायेण पश्यति । मङ्गलपदनिरामत्तत्तम प्रायदर्शनादप्रीततया तदपगमसन्तोषेणैव न तु लिप्सयेति भावः । अत्र प्रतिपच्चन्द्रस्य दृष्टुमशक्यतया नवां द्वितीयोदितामिति केचिद् व्याचख्युस्तन्न प्रतिपक्षेऽपि चन्द्रदर्शनसम्भवात् । यथाह ज्योतिस्तत्त्वे । चन्द्रो द्वादशभिः पश्चाद् दृश्यः प्राग् यात्यदृश्यतामित्यभिधाय अनभ्रायाश्च शरदि हेमन्तेऽप्यतुषारिणि । रवेः सार्द्धदशांशेऽपि दृश्यतामेति चन्द्रमा इति । सार्द्धदशांशेऽपि द्वादशानां भागानां सार्द्धांशमध्येऽपि । अतएव प्रतिपच्चन्द्रमिव प्रजाः प्रणेमुरिति किरातार्जुनीयम् ॥

राजा॥ इदञ्च मे मनसि वर्त्तते। (७०)

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनामुक्तं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि॥ (७१)

विदू॰। तेण हि खज्जं लज्जं गच्छदु भवं मा जाव सा कस्सवि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे णिवडिस्सदि। (७२)

राजा॥ परवती खलु तत्रभवती न च सन्निहितगुरुजना। (७३)

---

सर्व्वथा प्रतिज्ञाया अङ्गीकारद्योतन इति यावत्। सर्व्वथा सर्व्वप्रकारे प्रतिज्ञाभयहेतुष्विति मेदिनी। प्रत्यादेशो निराकरण तदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायात् तत्कर्त्तीति यावत्। प्रत्यादेशो निराकृतिरित्यमरः। खलु निश्चये। प्रत्यादेश एव इत्यर्थः॥

(७०) राजेति। इदं वक्ष्यमाणम्॥

(७१) अनाघ्रातमिति। अनाघ्रातमनुतगन्धग्रहं पुष्पमिव कररुहै र्नखैरलूनमच्छिन्नम् अक्षुण्णमिति यावत्। किसलयं पल्लव इव पुनर्भव कररुहो नखोऽस्त्री नखरोऽस्त्रियामित्यमरः। अनामुक्तमङ्गेष्वपिनद्धमपरिहितमिति यावत् रत्नं मणिरिव। आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवदित्यमरः। अनास्वादितो रसनया अननुभूतो रसो यस्य तत् तथोक्तं नवं मध्विव। एवं पुण्यानां सुकृतानां धर्म्माणां अखण्डं समग्रं न लब्धवैगुण्यजातकिञ्चिदूनमिति भावः। समग्रं सकलपूर्णाखण्डमित्यमरः। फलमिव च अनघं मनोज्ञं। अनघ निर्म्मलापापमनोज्ञेष्वभिधेयवदिति मेदिनी। तद्रूपमिह भुवि कं भोक्तारमुपभोक्तारं समुपस्थास्यति उपगमिष्यति न जाने नानुभवामि। अत्र मालोपमालङ्कारः। उक्तं दर्पणे। मालोपमा यदेकस्योपमानं बहु दृश्यत इति। इदं शिखरिणी नाम वृत्तम्॥

विदू॥ अध तुए उवरि कीदिसो से चित्तराओ। (७४)

राजा॥ वयस्य स्वभावादेवाप्रगल्भास्तपस्विकन्यकास्तथापि तु। (७५)

अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकथोदयम्।
विनयवारितवृत्तिरतस्तया न विवृतो मदनो न च संवृतः॥(७६)

विदू॥ विहस्य॥ किं दिट्ठिमेत्तेण ज्जेव भअदो अङ्कं आरोहदु।(७७)

राजा॥ सखीभ्यां मिथः प्रस्थाने पुनः सलीलया तत्रभवत्या मयि भूयिष्ठमाविष्कृतो भावः। तथाहि। (७८)

---

स्वयं न कस्यापि हस्तगता भविष्यतीति ज्ञापयति। ननु प्रभुरेवैना पात्रमात्रं कर्त्तु-मधिकरोतीति वचनमाशङ्क्याह न चेति। सन्निहित उपस्थितो गुरुजनो यस्या सा तथोक्ता च न॥

(७४) अधेत्यादि। अथ तवोपरि कीदृशोऽस्याश्चित्तरागः। अथ प्रश्ने। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः। चित्तरागश्चेतसोऽनुरागः॥

(७५) राजेति। अप्रगल्भा अनिःशङ्का। निःशङ्कता प्रयोगेषु बुधैः प्रोक्ता प्रगल्भतेत्युज्ज्वलनीलमणिः। तथापि अप्रगल्भत्वेऽपि॥

(७६) अभीति। मयि अभिमुखे सम्मुखस्थे सति ईक्षितं दर्शनं संहृतं गोपायितं अथच अन्येन निमित्तेन हेतुना कथाया उदयो यत्र तत् यथा स्यात् तथा हसितम् अन्येन हेतुना कथामुद्भाव्य हसितमित्यर्थः। अतो अस्मात् तया शकुन्तलया विनयेन कष्टचेष्टया यद्वा विनयेन सुशिक्षितत्वेन कर्त्रा वारिता सन्तम्भिता वृत्तिराचारो यस्य स तथोक्तो मदनः कामो न विवृतो व्यक्तीकृतो न च संवृतो न च गोपायितः। तथाच सुशिक्षितकन्यात्वेन स्वेदरोमाञ्चादयो न व्यक्तीभूता कामस्तु ईक्षणस्य वरणादव्यक्तीकृतोऽपि असम्बद्ध-कथोदयेन कृतहसितादेव व्यक्तीभूत इति भावः। इदं द्रुतविलम्बितं नाम वृत्तम्। तदुक्तम्। अयि कृशोदरि यत्र चतुर्थकं गुरु च सप्तमकं दशमं तथा। विरतिगञ्च तथैव विचक्षणै द्रुतविलम्बितमित्युपदिश्यत इति॥

(७७) विदू इति। किमित्यादि। किं दृष्टिमात्रेणैव भवतोऽङ्कमारोहतु। आरोहत्विति सम्प्रश्ने लोट्॥

(७८) राजेति। सखीभ्यामिति सहार्थे तृतीया। मिथो रहसि। मिथोऽन्योन्यं रहस्यपीत्यमरः। प्रस्थाने गमने। पुनरर्थ्ये। सलीलया सविलासया। लीला विलास-क्रिययोरित्यमरः। भूयिष्ठमिति आविष्कारक्रियाविशेषणम्। आविष्कृतो विवृतः। भावो ऽभिप्रायः। भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मस्वित्यमरः॥

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद् विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ (७९)

विदू ॥ गहीदपाधेओ किदोसि तए अदो अणुरत्तं तवोवणं त्ति तक्केमि ।'(८०)

राजा ॥ सखे तपस्विभिः कैश्चित् परिज्ञातोऽस्मि चिन्तय तावत् केनापदेशेन पुनराश्रमपदं गच्छामः । (८१)

विदू ॥ को अवरो अवदेसो णं भवं राआ । (८२)

राजा ॥ ततः किम् । (८३)

विदू ॥ णीवारच्छट्ठभाअं तावसा मे उवहरन्तु त्ति । (८४)

---

(७९) दर्भेति । तन्वी शकुन्तला कतिचित् कियन्ति पदानि गत्वैव दर्भाङ्कुरेण कुशाङ्कुरेण चरणः क्षत इति अकाण्डे अनवसरे वस्तुतो दर्भाङ्कुराविधेऽपीत्यर्थः । इति व्याजात् स्थिता । काण्डोऽस्त्री दण्डबाणार्वणवर्गावसरवारिष्वित्यमरः । तथा द्रुमाणां वृक्षाणां शाखासु असक्तं अलग्नमपि वल्कलं परिहितवल्कलञ्च विमोचयन्ती सती विवृत्तवदना अपावृत्तवदना च आसीत् ॥

(८०) विदू इति । गहीत्यादि । गृहीतपाथेयः कृतोऽसि तया अतोऽनुरक्तं तपोवनमिति तर्कयामि । गृहीतं पाथेयं सम्बलं पथिव्ययितव्यधनमिति यावत् येन स तथोक्तः कृतोऽसि वदनविवर्त्तनादिनेति शेषः । तदालोचनया अध्वसुखसम्भवादिति भावः । अनुरक्तमनुरागविषयतामापन्नम् ॥

(८१) राजेति । परिज्ञातः परिचितः । अपदेशेन निमित्तेन लक्ष्येण वा । अपदेशो लक्ष्ये निमित्तेऽपदेश इत्यादिरमरः । आश्रमपदमाश्रमस्थानम् । प्रथमगमने मृगयाव्यपदेशः । सम्प्रति तु पुनर्गमनापदेशश्चिन्तनायोपयुज्यते ॥

(८२) विदू इति । को इत्यादि । कोऽपरोऽपदेशः ननु भवान् राजा । ननु यत ॥

(८३) राजेति । ततस्तस्माद् राजत्वादित्यर्थः ॥

(८४) विदू इति । णीवारेत्यादि । नीवारषष्ठभागं तापसा मे उपहरन्त्विति । नीवाराणां शस्यादितृणधान्यानां षष्ठभागं तापसास्तपस्विनो मे मह्यं उपहरन्तु ददतु इति अपदेश इत्यर्थः । अत्र मनुः । षष्ठांशभागमादेयो राज्ञा वर्णाश्रमयोः । धान्यानामष्टमो

राजा ॥ मूर्ख ! अन्यमेव भागधेयमेते तपस्विनो मे निर्वपन्ति यो रत्नराशीनपि विहायाभिनन्द्यते। पश्य (८५)

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद् धनम्।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः॥ (८६)

नेपथ्ये ॥ हन्त सिद्धार्थौ स्वः। (८७)

राजा ॥ कर्णं दत्त्वा ॥ अये प्रशान्तस्वरैस्तपस्विभिर्भवितव्यम्। (८८)

---

भाग. षष्ठो द्वादश एव वा। आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम्। गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च। पत्रशाकतृणानाञ्च वैदलस्य च चर्म्मणाम्। मृण्मयानाञ्च भाण्डानां सर्व्वस्याश्ममयस्य चेत्यादि॥

(८५) राजेति। म्रियमाणोऽप्याददीत न राजा श्रोत्रियात् करं। न च क्षुधास्य संसीदेत् श्रोत्रियो विषये वसन्निति, तथा—यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा। तस्यापि तत् क्षुधा राष्ट्रमचिरेणैव सीदति। श्रुतवृत्ते विदित्वास्य धर्म्म्यां वृत्तिं प्रकल्पयेत्। संरक्षेत् सर्व्वतश्चैनं पिता पुत्रमिवौरसमिति मनूपदेशात् वयस्यवाक्यमनभिनन्दन्नाह मूर्खेति। अन्यं नीवारातिरिक्तमेव। भागधेयं करम्। भागधेयः करो बलिरित्यमरः। निर्व्वपन्ति ददति। यो भागधेयो रत्नराशीन् मणिस्तूपान् विहाय त्यक्त्वा अभिनन्द्यते अस्माभिरादृियते तमन्यं भागधेयमित्यर्थः॥

(८६) तापसोपस्थियमाणभागधेयं दर्शयति यदिति। हि यस्मात् नृपाणां राज्ञां वर्णेभ्यो ब्राह्मणेभ्यो यद् धनं शस्यादिकरभूतमुत्तिष्ठति आयाति तत् क्षयि क्षयशीलं। क्षयादेरिन्निति सूत्रात् इन्। आरण्यका अरण्यवासिन आश्रमिण इति यावत्। अक्षय्यं क्षयानर्हं तपसो धर्म्मस्य षड्भागं षष्ठभागं नोऽस्मभ्यं ददति। तदुक्तं मनुना। संरक्षमाणो राजाऽयं कुरुते धर्म्ममन्वहम्। तेनायुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव चेति। तथा। यदधीते यद् यजते यद् ददाति यदर्च्चति। तस्य षड्भागभाग् राजा सम्यग् भवति रक्षणादिति॥

(८७) नेपथ्य इति। नृपतिश्चेत्नगरं प्रस्थितस्तद्दृसतार्थावेव सावेहात्कण्ठया समागच्छन्तौ तापसकुमारौ राजसभासन्दर्शनेन कृतार्थावित्युक्तं हन्तेति। हन्त हर्षेऽनुकम्पायामित्यमरः। सिद्धौ निष्पन्नोऽर्थौ नरपतिसाक्षात्काररूपो ययोस्तौ तथोक्तौ स्व आवामित्यादि॥

(८८) राजेति। अये इति सम्भ्रमे। अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि चेति मेदिनी। प्रशान्ता अनुद्धताः स्वरा येषां ते तथोक्तैः प्रशान्तस्वरैरतएव तपस्विभिः। भवितव्यमिति भावे तव्यः॥

प्रविश्य दौवारिकः ॥ जअदु जअदु भट्टा एदे दुवे इसिकुमारआ पडिहारभूमिं उवत्थिदा । (८६)

राजा ॥ अविलम्बं प्रवेशय तौ । (६०)

दौवा ॥ जं भट्टा आणवेदि ॥ इति निष्क्रम्य ऋषिकुमाराभ्यां सह पुनः प्रविश्य ॥ इदो इदो भवन्ता । (६१)

उभौ ॥ राजानं विलोकयतः । (६२)

एकः ॥ अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः । अथवा उपपन्नमेतदस्मिन् ऋषिकल्पे राजनि । कुतः । (६३)

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्व्वभोग्ये
१५ रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्व्वः । (६४)

---

(८६) प्रविश्येति । जअदु इत्यादि । जयति जयति भर्त्ता एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ । प्रतीहारभूमिं द्वारभूमिं । स्त्री द्वा द्वार प्रतीहार इत्यमरः ॥

(६०) राजेति । सुगमम् ॥

(६१) दौवेति । जमित्यादि । यद् भर्त्ता आज्ञापयति । परिक्रम्य प्रवेश्य । इद इत्यादि । इत इतो भवन्तौ । आगच्छतामिति शेषः ॥

(६२) उभाविति । ऋषिकुमाराविल्यर्थः ॥

(६३) एक इति । ऋषिकुमारयोरिति शेषः । अहो विस्मये । दीप्तिमतोऽपि तेजस्विनोऽपि । विश्वसनीयता आश्वसनीयता । कल्पान्तरेण विस्मयमपाकरोति अथवेति । ऋषिकल्पे ईषदूने ऋषौ । ईषदसमाप्तौ कल्पप्रत्ययः । अस्मिन् राजनि एतत् दीप्तिमतोऽपि विश्वसनीयत्वमुपपन्नं युक्तम् । ऋषिकल्पत्वे हेतुमुपपादयति कुत इति ॥

(६४) अध्येति । न केवलं मुनय एवाश्रमवासिनः अमुना राज्ञापि सर्व्वाणि भोग्यानि भोगयोग्यानि यत्र स तथोक्ते आश्रमे वसति स्थितिरध्याक्रान्ता अधिष्ठिता । पञ्चम्यां आश्रमो वनं राजपक्षे गार्हस्थ्यम् । आश्रमो ब्रह्मचर्य्यादौ वानप्रस्थे वने मठे इति मेदिनी । तथा मुनय एव न केवलं तपस्विनः अयमपि रक्षायोगात् प्रजापालनसम्बन्धात् प्रत्यहं प्रतिदिनं तपोधर्म्मं सञ्चिनोति सञ्चयं करोति । तपश्चान्द्रायणादौ स्याद्‌ धर्म्मे लोकाभरे ब्रवीदिति विश्वः । तथाह मनुः । न पापिष्ठनिषेवितं प्रजानाश्चैव पालनम् । एतेन

द्वितीय ॥ सखे अयं स बलभित्सखो दुष्मन्तः। (८५)

प्रथम ॥ अथ किम्। (८६)

द्वितीय ॥ तेन हि। (८७)

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति।
आशंसन्ते समितिषु सुरा सक्तवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ (८८)

---

ब्राह्मणानाञ्च राज्ञां श्रेयस्करं पदमिति। तथा वशिनो जितेन्द्रियस्य अस्यापि राज्ञः केवलं विशेषात् राजपूर्व्वो राजशब्दपूर्व्वो मुनि इति एतदर्थकं पुण्यं पवित्रं शब्दो राजर्षिरिति भावः। चारयति देशान्तरेषु कीर्त्तिं प्रचारयतीति चारणः कुशीलवाख्यनटविशेषः। चारणास्तु कुशीलवा इत्यमरः। तद्द्वन्द्वेन तद्युग्मेन ताभ्यां। गीतं पठितं सन्। स्त्रीपुंसौ मिथुनं द्वन्द्वमित्यमरः। मुहुः पुनः पुनः द्यामिन्द्रलोकं स्पृशति। अत उपपन्न-मित्यर्थः सर्व्वभोग्ये इत्यादिभिरीषदूनत्वं ऋषिभ्यो बोधयति। ऋषिधर्म्मप्रदर्शनादत्र तुल्ययोगितालङ्कारः। यदुक्तं दर्पणे। विवक्षितं गुणोत्कर्षं यत्र समीकृत्य कस्यचित्। कीर्त्तनं स्तुतिनिन्दार्थं सा स्मृता तुल्ययोगितेति। इदं मन्दाक्रान्ता नाम वृत्तम्॥

(८५) द्वितीय इति। ऋषिकुमारयोरिति शेषः। अयं दृश्यमानः। स कथा-प्रसङ्गेन श्रुतः। बलं भिनत्ति सूदयतीति बलभित् बलारातिरिन्द्र इति यावत्। तस्य सखा बलभित्सखः। सख्युश्चोरात्र इति च॥

(८६) प्रथम इति। अथ किं किमन्यत् यदुक्तं तदेवतत्त्वं। अङ्गीकारेऽपि चाथकिमिति हारावली॥

(८७) द्वितीय इति। तेन हि तेनैव॥

(८८) नैतदिति। नगरपरिघो नगरद्वारागलाविव प्रांशू दीर्घौ बाहू यस्य स तथोक्तः। परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोरिति मेदिनी। दीर्घं प्रांशु विशालञ्चेति धनञ्जयः। अथ राजा उदधेः समुद्रस्य श्यामं कालिमा नीरभाग इति यावत्। स एव सीमा यस्याः सा तथोक्ता कृत्स्नामशेषां धरित्रीं भुवं यदेकोऽद्वितीयो भुनक्ति पालयति। अत्र नावं स्यैव भूजो ये इत्यात्मनेपदम्। एतन्न चित्रमाश्चर्य्यं। हि यस्मात् दैत्यैरसुरैः सक्त-सम्भृतं वैरं विद्वेषो येषां ते तथोक्ताः सुरा देवाः। वैरं विरोधो विद्वेष इत्यमरः। समि-तिषु युद्धेषु। समित्याजिसमिद्युध इत्यमरः। अधिज्ये अधिगतगुणे अस्य राज्ञो धनुषि पौरुहूते माहेन्द्रे वज्रे च विजयमाशंसन्ते अभ्यर्थयन्ते न त्वन्यस्मिन् कापीत्यर्थः। तथा च

उभौ उपगम्य ॥ विजयस्व राजन् । (९९)

राजा ॥ आसनादुत्थाय ॥ अभिवादये भवन्तौ । (१००)

उभौ ॥ स्वस्ति भवते । इति फलान्युपनयत । (१०१)

राजा ॥ सप्रणामं परिगृह्य ॥ आगमनप्रयोजनं श्रोतुमिच्छामि । (१०२)

उभौ ॥ विदितो भवानिहस्थस्तपस्विनाम् । ते च भवन्तमभ्यर्थयन्ते । (१०३)

राजा ॥ किमाज्ञापयन्ति । (१०४)

उभौ ॥ तत्रभवत कण्वस्य कुलपतेरसान्निध्यात रक्षांसि न इष्टिविघ्नमुत्पादयन्ति तत् कतिपयदिवसमात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति । (१०५)

---

सागरान्तां महीमयमेको भुनक्तीत्यविषित्व स्वर्गलोकपर्यन्तमोऽस्याधिकारो ज्ञाप्य इत्याशय ध्वलापाकरणिकसत्रापि वज्रधत्र धनु सौधाहस्राय सुराणां विजयाय सनविषयत्वद्वैकधर्म सत्रोपादानात् दीपकालङ्कार । यदुक्तं प्रकाशे । सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् । सैव क्रियासु बह्वीषु कारकस्येति दीपकमिति । प्राकरणिकाप्राकरणिकानां धर्मस्य सकृद् इत्तिरेक दीपकं कारकस्य बह्वीषु क्रियासु सकृद् वृत्तिरपर दीपकम् ॥

(९९) उभाविति । विजयस्वेति विपराभ्यां जेरात्मनेपदम् ॥

(१००) राजेति । अभिवादये प्रणमामि । फलवत्कर्त्तर्यात्मनेपदम् ॥

(१०१) उभाविति । स्वस्ति मङ्गल । स्वस्तिमङ्गलपापोर्ध्वादिमापनिर्पजनादिष्विति भागुरि । भवत इति मङ्गलार्थयोगात्रादिना चतुर्थी । फलानीति । यदाह । रिक्तपाणि र्न पश्येत् तु राजानं देवतां गुरुम् । नैमित्तिकञ्च वैद्यञ्च फलेन फलमादिशेदिति ॥

(१०२) राजेति । परिगृह्य स्वीकृत्य ॥

(१०३) उभाविति । भवान् इहस्थो विदित आश्रमस्थित इत्येतदस्मत्कर्त्तृक ज्ञात । इहाश्रमस्थाने अभ्यर्थनामात्रात् विदित इति वर्त्तमाने क्त तद्योगात् तपस्विनामिति कर्त्तरि षष्ठी । ते स्वामिन ॥

(१०४ राजेति । सुगमम् ॥

(१०५) उभाविति । कुलपते र्मण्डलाधिप । असान्निध्यादनुपस्थानात् । रक्षांसि राक्षसाः । इष्टिविघ्नं यागव्याघातम् । इष्टि यागे स्थुयो रित्यमर । कतिपयानि कतिपयादि व्याप्ताविति अत्यन्त । सारथिरेव द्वितीयो यस्य स सारथिद्वितीयस्तेन । सनाथौ कृभि

राजा ॥ अनुगृहीतोऽस्मि। (१०६)

विदू ॥ अपवार्य्य ॥ एस दाणिं भअदो अणुकूलो गलहत्थो। (१०७)

राजा ॥ स्मितं कृत्वा ॥ रैवतक मद्वचनाद्उच्यतां सारथिः सबाणकार्म्मुकं रथमुपस्थापयेति। (१०८)

दौवा ॥ जं देवो आणवेदि ॥ इति निष्क्रान्तः। (१०९)

उभौ ॥ सहर्षं स। (११०)

अनुकारिणि पूर्व्वेषां युक्तरूपमिदं त्वयि।
आपन्नाभयसत्त्रेषु दीक्षिताः खलु पौरवाः ॥ (१११)

राजा ॥ सप्रणामम् ॥ गच्छतां भवन्तौ अहमनुपदमागत एव। (११२)

उभौ ॥ विजयस्व ॥ इति निष्क्रान्तौ। (११३)

राजा ॥ माधव्य अप्यस्ति ते कुतूहलं शकुन्तलादर्शनं प्रति। (११४)

---

रात्रमोपरोधसंभव इति तै रक्षमिति भाव । सनाथीक्रियतां सस्वामिकीक्रियताम्। आश्रम कुलपतेरसान्निध्यादस्वामिको मठ । इति अभ्यर्थयन्त इत्यन्वय ॥

(१०६) राजेति। अनुगृहीतस्तपस्विभिः कृतानुग्रह ॥

(१०७) विदू इति। अपवार्य्य पराहृत्य। तदुक्तम्। तद्भवेदपवारितम्। रहस्य तु यदन्यस्य पराहृत्य प्रकाश्यते इति। एष इत्यादि। एष इदानीं भवतोऽनुकूलो गलहस्त । इदानीमेव गलहस्त कर्म्मणि नियोगो भवतोऽनुकूल सुखावह ॥

(१०८) राजेति। सबाणकार्म्मुकं बाणेन कार्म्मुकेण धनुषा च सहित । उपस्थापय आनय। इति उच्यतामित्यन्वय ॥

(१०९) दौवेति। जमित्यादि। यद् देव आज्ञापयति। देवो राजा ॥

(११०) उभाविति। सुगमम् ॥

(१११) अन्विति। पूर्व्वेषां पुरुप्रभृतीनामनुकारिणि सदृशे त्वयि इदं भयात् त्राणकरणं युक्तरूपं अनुरूपं खलु यस्मात् पौरवाः पुरुवंशप्रभवा राजान आपन्नानां आपत्प्राप्तानामभयसत्त्रेषु अभयदानरूपयागेषु यद्वा सदाभयदानेषु दीक्षिता व्रतिन । आपद् आपत्प्राप्ते स्यादिति सत्त्रमाच्छादने यज्ञे सदादाने धनेऽपि चेति चामर ॥

(११२) राजेति। अनुपदमनुगः सन्। अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययमित्यमर । आगत एव आगतत्वेन निश्चेतव्य इत्यर्थ ॥

(११३) उभाविति। सुगमम् ॥

(११४) राजेति। अपि प्रश्ने। कुतूहलं लालसा ॥

विदू ॥ पढमं अपरिबाधं आसी सम्पदं रक्खसवुत्तन्तेण सपरिबाधं । (११५)

राजा ॥ मा भैषीः ननु मत्समीप एव वर्त्तिष्यसे । (११६)

विदू ॥ एष तुह रधचक्करक्खीभूदोम्हि जइ ण कोवि आअच्छिअ विग्घं करेदि । (११७)

प्रविश्य दौवारिकः ॥ जअदु जअदु भट्टा सज्जो रधो भत्तुणो विजअप्पआणं अवेक्खदि, एस उण णअरादो देवीणं आणत्तिहरो करभओ आअदो । (११८)

राजा ॥ सादरम् ॥ किमम्बाभिः प्रेषितः । (११९)

दौवा ॥ अध इं । (१२०)

राजा ॥ तेन हि प्रवेश्यताम् । (१२१)

दौवा ॥ तह ॥ इति निष्क्रम्य पुनः करभकेण सह प्रविश्य ॥ करभअ ! एसो भट्टा उवसप्पदु भवं । (१२२)

(११५) विदू इति । पढममित्यादि । प्रथममपरिबाधमासीत् साम्प्रतं राक्षसवृत्तान्तेन सपरिबाधम् । अपरिबाधं कष्टं विना । सपरिबाधं कष्टेन सह । कुतूहलमिति विशेष्यम् ॥

(११६) राजेति । भैषीरिति मा ठी बेति ठी । ननु यत । वर्त्तिष्यसे स्थास्यसि ॥

(११७) विदू इति । एस इत्यादि । एष तव रथचक्ररक्षीभूतोऽस्मि । यदि न कोऽप्यागत्य विघ्नं करोति । युध्यमानस्य कश्चिद्रथचक्ररक्षकोऽपेक्ष्यते, तत्राहं तथाभूतोऽस्मीत्यर्थः । कोऽपि राक्षसः । विघ्नं चक्ररक्षाया इति शेषः ॥

(११८) प्रविश्येति । जअदित्यादि । जयति जयति भर्त्ता सज्जो रथो भर्त्तुर्विजयप्रयाणमपेक्षते । एष पुनर्नगराद् देवीनामाज्ञप्तिहरः करभक आगतः । सज्जो बद्धास्त्रशस्त्रः । विजयप्रयाणं विजयाय प्रस्थानम् । अपेक्षते आकाङ्क्षति । आज्ञप्तिहरो वार्त्तावहः । करभकस्तन्नामा ॥

(११९) राजेति । सादरं सनादरम । अम्बाभिर्मातृभिः । अम्बा मातेति नाटॺोक्तावमरः । प्रेषितः प्रेरितः ॥

(१२०) दौवेति । अध इं अथ किम् ॥

(१२१) राजेति । सुगमम् ॥

(१२२) दौवेति । तह तथा । करभअ इत्यादि । करभक एष भर्त्ता उपसर्पतु भवान् । उपसर्पतु उपगच्छतु ॥

करभक ॥ उपसृत्य प्रणम्य च ॥ जअदु जअदु भट्टा देवीओ आणवेन्ति।(१२३)

राजा ॥ किमाज्ञापयन्ति। (१२४)

कर॥ आआमिणि चउत्थदिअहे पुत्तपिण्डपालणो णाम उववासो भविस्सदि तहिं दीहाउणा अवस्सं अम्हे सम्भावइदव्व त्ति। (१२५)

राजा ॥ इतस्तपस्विनां कार्यम् इतो गुरुजनाज्ञा उभयमनतिक्रमणीय तत् किमत्र प्रतिविधेयम्। (१२६)

विदू॥ भो तिसङ्कु विअ अन्तरा चिट्ठ। (१२७)

राजा॥ सत्यमाकुलीभूतोऽस्मि। (१२८)

कृत्ययो र्भिन्नदेशत्वाद् द्वैधीभवति मे मनः।
पुरः प्रतिहतं शैलैः स्रोतः स्रोतोवहा यथा॥ (१२९)

---

(१२३.) करेति। जअदिल्यादि। जयति जयति भर्त्ता देव्य आज्ञापयन्ति॥

(१२४) राजेति। सुगमम॥

(१२५) करेति। आआमिणीत्यादि। आगामिनि चतुर्थ दिवसे पुत्रपिण्डपालनो नाम उपवासो भविष्यति तत्र दीर्घायुषा अवश्य वय सम्भावयितव्या इति। पुत्रेति। पुत्रपिण्डाना पुत्रेण प्रदास्यमानपिण्डाना पालन रक्षण सम्भावनमिति यावत् यस्मात् स तथोक्त। भविष्यति अनुष्ठित इत्यादि। सम्भावयितव्या बहुमन्तव्या आगमनेन सम्भावयितव्या इति यावत्। इति आज्ञापयन्तीत्यन्वय॥

(१२६) राजेति। अनतिक्रमणीयमनवहेलनीयम। तत् तस्मात। अत्र अनयो र्विषययो किं कर्म प्रतिविधेयमुपायतयानुष्ठातव्यम्॥

(१२७) विदू इति। भो इत्यादि। भोस्त्रिशङ्कुरिवान्तरा तिष्ठ। न दिव न च भूमिमन्तराधितिष्ठति यथा त्रिशङ्कुस्त्व तथान्तरा तिष्ठेत्यर्थ। श्रूयते हि रामायणादौ कौशिकास्त्रिशङ्कुतपोवीर्यैर्णोर्द्धमितोऽपि नाकस्य सुरैरग्निशङ्कु र्नामैक्ष्वाकुकुलश्रितोऽश्वरो गुरुशापोपजनितमातिकूल्ये नाम्नाण्डलेनाधःपातितोऽन्तरान्तरीक्ष एवावाकशिरास्तिष्ठतीति। सोऽद्भुत तु विस्तरभयादुक्त॥

(१२८) राजेति। सत्यमित्युपहासप्रतिषेधाय। आकुलीभूतोऽस्मि व्यग्रीभूतोऽस्मि॥

(१२९) कृत्ययोरिति। कृत्ययोराश्रमपालनमातृसम्भावनरूपयो र्भिन्नदेशत्वात् भिन्नो अनेको देशो अधिकरणभूमी ययोस्तौ तयोस्तत्वात् मम मन पुरो अग्रे शैलै र्गिरिभिः प्रतिहत इतस्ततो विक्षिप्त स्रोतोवहा नदीनां स्रोतो यथा स्रोत इव द्वैधीभवति एकमपि अनेकानि भवति। अत्रोपमालङ्कार॥

विचिन्त्य ॥ सखे माधव्य त्वमप्यम्बाभिः पुत्र इव गृहीतः स भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रतामस्माकमावेद्य तत्रभवतीनां पुत्रकार्यमनुष्ठातुमर्हति । (१३०)

विदू = भो मा रक्खसभीरुअं मं आवगच्छ । (१३१)

राजा ॥ स्मितं कृत्वा ॥ भो महाब्राह्मण कथमिदं त्वयि सम्भाव्यते ।(१३२)

विदू ॥ तेण हि राआणुअ विअ गच्छिदुं इच्छेमि । (१३३)

राजा ॥ ननु तपोवनोपरोधः परिहरणीय इति सर्वानेवानुयात्रिकांस्त्वयैव सह प्रेषयिष्यामि । (१३४)

विदू ॥ सगर्व्वम ॥ जुअराओम्हि दाणिं संवुत्तो । (१३५)

राजा ॥ आत्मगतम ॥ चपलोऽयं ब्राह्मणवटुः कदाचिदिमामस्मत्प्रार्थनामन्तःपुरिकाभ्यो निवेदयेत् । भवत्वेवं तावद् वक्ष्यामि । (१३६)

---

(१३०) विचिन्त्येति विचार्य्येत्यर्थः । प्रतिनिवृत्य प्रतिगत्य । तवेति । तपस्विनां कार्ये व्यग्रता व्यासक्ततां । व्यग्रो व्यासक्त आकुले इत्यमरः । आवेद्य विज्ञाप्य । अनुष्ठातुं कर्त्तुम ॥

(१३१) विदू इति । भो इत्यादि । भो मा राक्षसभीरुकं मामगच्छ । अवगच्छ जानीहि ॥

(१३२) राजेति । महाब्राह्मणेत्यनेनाल्पमतित्वाच्छद्मस्तुतिमभणयन् विमापकर्षं व्याहरति । महाब्राह्मणशब्दो हि याचकस्वादावपभ्राड्हारकविशेषु प्रयुज्यते । इदं राक्षसभीरुत्वम । सम्भाव्यते मन्यते ॥

(१३३) विदू इति । तेणेत्यादि । तेन हि राजानुज इव गन्तुमिच्छामि ॥

(१३४) राजेति । नन्वित्यनुज्ञाने । तपोवनस्य उपरोधः पीडा परिहरणीयो निवारणीय । इति हेतो । अनुयात्रिकान् अनुगतान सैनिकान् ॥

(१३५) विदू इति । सगर्व्वं साहङ्कारम । गर्व्वोऽभिमानोऽहङ्कार इत्यमरः । जुअ इत्यादि । युवराजोऽस्मि इदानीं संवृत्तः । युवराज कुमार । युवराजस्तु कुमारो भर्त्तृदारक इति नाट्योक्तावमरः ॥

(१३६) राजेति । आत्मगतमनतिस्पष्टम । चपलश्चञ्चल । ब्राह्मणवटु ब्राह्मणबालक । बालको माणवो बाल किशोरो वटुरित्यपीति शब्दरत्नावली । कदाचिच्छब्द सम्भावना द्योतयति । इत्यमेव प्रयुक्त कादम्बर्याम । यथा पूर्वभागे । कदाचिदनभि

विदूषकस्य हस्तं गृहीत्वा । प्रकाशम् ॥ सखे माधव्य ऋषिगौरवादाश्रमपदं प्रविशामि न खलु सत्यमेव तापसकन्यायामभिलाषो मे । पश्य । (१३७)

क्व वयं क्व परोक्षमन्मथो मृगशावैः सह वर्द्धितो जनः ।
परिहासविकल्पितं सखे परमार्थेन न गृह्यतां वचः ॥ (१३८)

विदू ॥ एवमेदं । (१३९)

राजा ॥ माधव्य त्वमपि स्वनियोगमनुतिष्ठ अहमपि तपोवनरक्षार्थं तत्रैव गच्छामि । (१४०)

इति निष्क्रान्ताः सर्वे ।

द्वितीयोऽङ्क । (१४१)

---

मत्करविकारदर्शनकुपितोऽयं शापाभिज्ञां करोति मां अदूरकोपा हि मुनिजनस्य प्रकृतिरित्यवधार्येति । उत्तरभागे च । कदाचिदसौ वैनस्याद्ध्यानालोकनादसर्पत्येव तद्गुणं पि पार्श्वे स्थापिता भवन्तु भवन्त इति । तथा कदाचिदस्य वृत्तान्तस्याभिज्ञा मद्दाक्षेपापि भवत्येव ननु मां तु तावत् पश्यामि इत्यादि । अप्रकृतार्थं नां शकुन्तलाभिलाषम् । अन्तःपुरिकाभ्यो मद्विधीभ्यः । विवार्योऽह भवत्विति । एवं वक्ष्यमाणम् ॥

(१३७) विदूषकस्येति । प्रकाशं सुस्पष्टम् । ऋषिगौरवात् ऋषीणां सम्मानात् । तापसकन्यायां शकुन्तलायाम् । तदभिलाषस्यासम्भाव्यतां दर्शयति पश्येति ॥

(१३८) क्वेति । क्व वयं सकलकलाभिज्ञनागरपुरुषा इति भाव । क्व परोक्षोऽनाश्रितो मन्मथः कामो यस्य स तथोक्तः मृगशावैः कुरङ्गशिशुभिः सह वर्द्धितः परिपालितो जनः शकुन्तलारूपः । न कदाचिदप्यनयोः परस्परप्रणयाभिलाषसम्भव इति भाव । परोक्ष इति । अक्ष्णामिन्द्रियाणां पर अविषयः परोक्ष । पर शब्दस्य राजदन्तादित्वात् पूर्वनिपात । सखे परिहासेन विकल्पितमभिचिताभिहितं वचस्तापसकन्याभिलाषसार· परमार्थेन याथार्थ्येन न गृह्यतां न मन्यताम् । वृत्तमेतत् सुन्दरी नाम । तल्लक्षणम् । अयुजो यदि सौ जगौ युजे सभरा लौ यदि सुन्दरी तदेति ॥

(१३९) विदू इति । एवमेव एवमिदम् ॥

(१४०) राजेति । स्वनियोगमात्मानं प्रत्याज्ञां अनुतिष्ठ पालय ॥

(१४१) इतीति । इति समाप्तौ वाक्याम् । अङ्कः परिच्छेद ॥

इति श्रीअभयनाथशर्मकृतायामभिज्ञानशकुन्तलटीकायां
प्रबोधिकाख्यायां द्वितीयाङ्कविवरणम् ॥

# तृतीयोऽङ्कः ।

ततः प्रविशति कुशानादाय यजमानशिष्यः । (१)

शिष्यः ॥ विचिन्त्य सविस्मयम् ॥ अहो महाप्रभावो राजा दुष्मन्तः येन प्रविष्टमात्र एवाश्रमं तत्रभवति सारथिद्वितीये राजनि निरुपप्लवानि नः कर्म्माणि संवृत्तानि । (२)

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।
हुङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति ॥ (३)

यावदेतान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपाहरामि । (४)

परिक्रम्यावलोक्य च ॥ आकाशे ॥ प्रियंवदे कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीदलानि नीयन्ते । (५)

---

(१) तत इति । आदाय गृहीत्वा । यजमानशिष्यः यागादेष्टा आरब्धयाग इति यावत् कश्चित् कण्वशिष्यः । आदेष्टा त्वध्वरे व्रती । यष्टा च यजमानश्चेत्यमरः ॥

(२) शिष्य इति । अहो विस्मये । महान् प्रभावो दण्डज तेजो यस्य स महाप्रभावः । स प्रतापः प्रभावश्च यत् तेजः कोषदण्डजमित्यमरः । येन हेतुना । प्रविष्टमात्र एव अचिरप्रविष्ट एव । निरुपप्लवानि निरुपद्रवाणि । कर्म्माणि इष्टिरूपाणि ॥

(३) केति । बाणसन्धाने बाणस्य धनुष्यारोपणे का कथा तत्कथापि नास्तीत्यर्थः । स हि राजा हुङ्कारेण हुमितिध्वनिनेव । वर्णात् कारप्रत्ययो वक्तव्यः । दूरतो दूरात् धनुषो ज्याशब्देन मौर्व्याः शब्देनैव विघ्नान् विघ्नभूतान् राक्षसान् व्यपोहति निवर्त्तयति ॥—

(४) यावदिति । एतान् दर्भान् कुशान् वेद्याः यागार्थं निर्म्मितपरिष्कृतभूमेः संस्तरणार्थमास्तरणार्थम् । वेदिः परिष्कृता भूमिरित्यमरः । ऋत्विग्भ्यो वस्त्रालङ्कारादिभिः परितोष्य वृतेभ्यो याजकेभ्यः । अग्निध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च त इत्यमरः । उपाहरामि ददामि ॥

(५) परीति । आकाशे शून्ये अदृष्टप्रियंवदायामपि रङ्गभूमौ प्रियंवदा दृष्टेवेत्यर्थः । कस्येति सम्बन्धविवक्षया षष्ठी । उशीरानुलेपनं पिष्टवीरणमूलम् । स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियामित्यमरः । नीयन्ते प्राप्यन्ते त्वयेति शेषः ॥

श्रुतिमभिनीय ॥ किं कथयसि आतपलङ्घनाद् बलवदस्वस्थशरीरा शकुन्तला तस्याः शरीरनिर्व्वापणायेति । प्रियंवदे यत्नादुपचर्य्यतां सा हि तत्रभवतः कुलपतेर्द्वितीयमुच्छ्वसितम् । अहमपि तावद् वैतानिकं शान्त्युदकमस्या एव गौतमीहस्ते विसर्ज्जयामि ॥ इति निष्क्रान्ता । (६)

विष्कम्भकः । (७)

॥ ततः प्रविशति समदनावस्थो राजा । (८)

राजा ॥ सचिन्तं निश्वस्य । (९)

---

(६) श्रुतिमिति । श्रुतिं श्रवणमभिनीय रूपयित्वा श्रवणायेव कर्णं दत्त्वेति यावत् । आतपलङ्घनाद् रविकराभिभवात् । बलेति । बलवदत्यर्थमस्वस्थमप्रकृतिस्थं शरीरं यस्याः सा सन्नशरीरेत्यर्थः । शरीरनिर्व्वापणाय देहस्य तापोपशमनाय । इति किं कथयसीत्यन्वयः । अत्र चरकः । फलिनीलोध्रसेव्याम्बुहेमपत्रं कुटन्नटम् । कालीयकरसोपेतं दाहे शस्तं प्रलेपनमिति । सेव्यमुशीरं । अम्बु तथ । शीतं विधानमत ऊर्द्ध्वमतः प्रवक्ष्ये दाहप्रशान्तिकरमद्भिमता नराणाम् । तत्रादितो मलयजेन हिमप्रदेहश्चन्द्रांशुहारतुहिनोदकशीतलेन । शीताम्बुशीतलतरैश्च शयानमेनं हारैर्मृणालवलयैरबला स्पृशेयुः । भिन्नोत्पलोज्ज्वलहिमे शयने शयीत पत्रेषु वा सजलबिन्दुषु पद्मिनीनामिति । तथा । दाहाभिभूतमथवा परिषेचयेत्तु शीतैरुशीरजलचन्दनवारिभिश्चामिति च । प्रियंवदाया प्रवेशवाक्प्रयोगयोरनभिनयादुशीरनलिनीदलाहरणस्य रहस्यरक्षाव्यग्रतया गुह्यापथेन गमनमनुसृत्यैरुत्तरदानमाक्षिप्य मदायास्तदानीमभवदिति सूचयति । यत्नात् प्रयासात् । उपचर्य्यतां परिचर्य्यताम् । हि यतः । सा शकुन्तला । द्वितीयमुच्छ्वसितं बहिश्चरप्राणभूता । वैतानिकं यज्ञियम् । क्रतुविस्तारयोरस्त्री वितानमित्यमरः । शान्त्युदकं शान्तिकुम्भस्थमुदकम् । अस्यै शकुन्तलार्थं । गौतमीहस्ते विसर्ज्जयामि गौतमीहस्ते दापयामि कर्त्तृभिरिति शेषः ॥

(७) विष्कम्भक इति । तदाख्य अङ्गविशेषः । वृत्तानामनर्पितानामपि शकुन्तलातापतदर्थं प्रियंवदाकृतोशीरानुलेपनादिवहनानां वर्त्तिष्यमाणानाञ्चोपचर्य्यं ज्ञापनशकुन्तलाप्रवेशादीनां निदर्शकत्वात् । स च मध्यमपात्रेण प्रयोजितत्वेन शुद्धः । तदुक्तम् । वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः । मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः इति ॥

(८) तत इति । समदनावस्थः स्मरदशापन्नः ॥

(९) राजेति । सचिन्तं शकुन्तलाकृतिमङ्कितम् । आधिना व्यतिराध्यानमित्यमरः ॥

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम् ॥ (१०)

भगवन् मन्मथ कुतस्ते कुसुमायुधस्य सत तैक्ष्ण्यमेतत । (११)

स्मृत्वा॥ आ ज्ञातम् । (१२)

अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।
त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः ॥ (१३)

अपि च । त्वया चन्द्रमसा चातिविश्वसनीयाभ्यामभिसन्धीयते कामिसार्थः । कुतः । (१४)

---

(१०) जाने इति । तपसो वीर्यं प्रभावमहं जाने अनुभवामि । वीर्यं बले प्रभावे चेत्यमरः । एतेन स्वेच्छाक्रमोऽस्याः परिम्यक्त खण्डित । एव सा बाला शकुन्तला परवती परायत्ता इति मे विदितमनुभूयमानं भवति । एतेन तदिच्छयापि समागममसम्भावितं दर्शयति । एवं मम मनश्च निम्नात् सलिलं तोयमिव ततः शकुन्तलातो न निवर्त्तते पराङ्मुखं भवति । तदत्र किं करणीयमिति भावः । श्लेषोपमालङ्कारः । इयमार्या ॥

(११) भगवन्निति । भगवन् माहात्म्यवन् । भग श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्त्तिष्वित्यमरः । मन्मथ मदन ते तव कुसुमानि पुष्पाण्येवायुधानि प्रहरणानि यस्य स तथोक्तस्य सतः कुतः कस्मादेतत् तैक्ष्ण्यं तीक्ष्णभावः ॥

(१२) स्मृत्वेति । स्मृत्वा स्मृतिं रूपयित्वा । चिन्तया तीक्ष्णताबीजनिश्चयादाह आमिति । आ स्मरणे निश्चयस्मृत्योरिति मेदिनी । ज्ञातं निश्चितम् ॥

(१३) मनसावधारितं तीक्ष्णताबीजं वचसा प्रकाशयति अद्यापीति । हे मन्मथ हरस्य शम्भोः कोपवह्निः क्रोधोद्भूतकपालनेत्रानलः अम्बुराशौ समुद्रे । वारिराशिरब्धाविति शब्दाब्धिः । और्वो वाड़वानल इव । और्वस्तु वाडवो वडवानल इत्यमरः । नूनं निश्चितमद्यापि त्वयि ज्वलति न निर्व्वाणतां गत इत्यर्थः । अन्यथा तस्य निर्व्वाणे भस्मैवावशेषो यस्य स तथोक्तस्त्वं मम विधा प्रकारो येषां ते तथाभूतानां ईप्सितप्रियासमागमानामिति यावत् मन्मथ कथमेवमित्यमुष्णः । विधा विधौ प्रकारे चेत्यमरः । अत्रोष्णतया वह्निमत्त्वसाधना न्मन्मथे हरकोपानलज्वलनसम्भावानुभवरूपवैचित्र्यसाधनादनुमानमलङ्कारः । यदुक्तं दर्पणे । अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनादिति । विच्छित्तिरलङ्कारान्तरसत्त्वे वैचित्र्यम् । वृत्तमिदमुपजातिर्नाम ॥

(१४) अधुना चासत्यसत्तितां दर्शयितुमाह अपिचेति । त्वया मन्मथेन चन्द्रमसा इन्दुना च अतिविश्वसनीयाभ्यामतिशयविश्वसनीयाभ्यां द्वाभ्यां कामिना प्रियाभिलाषिणां सार्थ

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ (१५)

अथवा । (१६)

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ (१७)

भगवन्नेवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः । (१८)

---

सङ्घ । छन्दभेदा समे वर्गे सङ्घसार्थौ तु जन्तुभिरित्यमरः । अभिसन्धीयते प्रतार्यते । वञ्चनञ्चाभिसन्धानं व्यलीकञ्च प्रतारणमिति हेमचन्द्रः ॥ ५

(१५) तवेति । तव मन्मथस्य कुसुमशरत्वं कुसुमशरवत्त्वं तथा इन्दोश्चन्द्रस्य शीतरश्मित्वं शीतरश्मिनामधेयत्वं इदं द्वयं मद्विधेषु कामिजनेषु अयथार्थं मर्यादामतिक्रान्तं दृश्यते तथाहि इन्दुश्चन्द्रमा हिमानि तुषारा गर्भे अभ्यन्तरे येषां ते तथोक्तैः मयूखैः रश्मिभिरग्निं विसृजति विकिरति । तथाच शीताः शीतला रश्मयः किरणा यस्य स शीतरश्मिरित्यर्थो न सम्भवतीति भावः । तथा त्वं मन्मथोऽपि कुसुमबाणान् पुष्पतया दृश्यमानान् शरान् वज्रादपि सारो बलं येषां ते वज्रसाराः । सारो बले स्थिरांशे चेत्यमरः । अवज्रसारान् वज्रसारान् करोषि । च्वि अभूततद्भावे इति च्विः । ईकारश्च पूर्वाकारस्य । एवञ्च कुसुमानि शरा यस्य स इत्यर्थो न युज्यते वज्रशरत्वस्यैव युक्तत्वादिति भावः । अत्रापह्नुतिरलङ्कारः । यदुक्तं साहित्यदर्पणे । अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् । न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति । चन्द्रिका चन्दनं मन्दो गन्धवाहश्च दक्षिणः । सेयमग्निमयी सृष्टिः शीता किल परान् प्रति । शैत्यमभ्युपेत्यैव परेष्वात्मनि कामिनाम् । औष्ण्यप्रदर्शनात् तस्य सेयं विषयनिह्नुतिरिति । इदं मालिनी नाम वृत्तम् ॥

(१६) निन्दितामपि स्मरक्रियां कथञ्चिदभिनन्दयन्नाह अथवेति ॥

(१७) अनिशमिति । मकरकेतुः कामो मदिरे मत्तखञ्जनाविव आयते दीर्घे नयने यस्याः सा तथोक्ताम् । मदिरा मत्तखञ्जन इति शब्दरत्नावली । तां शकुन्तलामधिकृत्य लक्ष्यीकृत्य यदि प्रहरति इति एवं स्यात् तदा अनिशं सततं मनसो रुजं पीडामावहन् जनयन् अपि मे अभिमतः सम्मतः स्यादिति शेषः । अभिमत इति ज्ञानार्थत्वाद् वर्त्तमाने क्तः ॥

(१८) भगवन्निति । उपालब्धस्य दुरुक्तस्य । दुर्वाद स्यादुपालम्भस्तत्र च स्तुतिपूर्वकः । सोल्लुण्ठनं सनिन्दस्तु यत्तत् परिभाषणमिति जटाधरः । अनुक्रोशो दया । कृपा दयानुकम्पा स्यादनुक्रोशोऽपीत्यमरः ॥

इथैव सङ्कल्पशतैरजस्रमनङ्ग नीतोऽसि मयातिवृद्धिम् ।
आकृष्य चाप श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्ष ॥(१९)

सखेदं ॥ परिक्रम्य ॥ क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञात, खिन्न मात्मानं विनोदयामि न च प्रियादर्शनादृते शरणमन्यत् यावदनामन्विष्यामि । (२०)

ऊर्द्ध्वमवलोक्य ॥ इमामुग्रतपा वेला प्रायेण लतावलयवत्सु मालिनी तीरेषु ससखीजना तत्रभवती शकुन्तला गमयति भवतु तत्रैव तावद् गच्छामि । (२१)

परिक्रम्यावलोक्य च ॥ अनया बालपादपवीथ्या सुतनुरचिर गतेति तर्कयामि। कुत । (२२)

---

(१९) इथैवेति। हे अनङ्ग सङ्कल्पशतै प्रियामधिकृत्य मानसकर्मशतै करणै । सङ्कल्प कर्म्म मानसमित्यमर । अजस्रमनिश इथैव निरर्थकमेव मया त्वमतिवृद्धिमति विपुलता नीतो गमितोऽसि श्रवणोपकण्ठे कर्णान्तिके । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययमित्यमर । चाप धनुराकृष्य मय्येव तव बाणमोक्ष शरविक्षेपो युक्त उचित । अत्र दाक्षपरिवर्द्धितस्य तदुपकृतिरेवोचिता क्रिया तत्र बाणमोक्षस्त्वपकारकत्वेन विसदृशो भवतीति विषमाख्योऽलङ्कार । यदुक्त चन्द्रालोके । विरूपकार्य्यस्योत्पत्तिरपर विषम मतमिति । वृत्तमुपजाति नाम ॥

(२०) सखेदमिति । सोपतापमित्यर्थ । अतएव खिन्दश्चौ दैन्यके इति कविकल्पद्रुमव्याख्याने दैन्यकत्तुपतप्तीभाव इति धातुदीपिका । नु वितर्के । खलु जिज्ञासायाम । निरस्ता निवारिता विघ्ना येषा ते तथोक्तैस्तपस्विभिरनुज्ञातोऽनुमतोऽह क्व कस्मिन् प्रदेशे खिन्नमुपतप्तमात्मान विनोदयामि आनन्दयामि । प्रियादर्शनादृते शकुन्तलादर्शनमन्तरेण । पृथग विनान्तरेणर्त्ते इत्यमर । अन्यारादिति ऋतेयोगे पञ्चमी । अन्यत शरण रक्षिता न मास्तीत्यर्थ ॥

(२१) ऊर्द्ध्वमिति । ऊर्द्ध्वमवलोक्य उन्मुखीभूय । उग्रमुत्कट तपतीत्युग्रतपा ता माध्यन्दिनीमिति यावत् । प्रायेण बाहुल्येन कादाचित्कबाधेनेति भाव । लतावलयवत्सु लतामण्डपवत्सु । मालिन्या सरितस्तीरेषु तटभूमिषु वसन्तीति शेष । गमयति यापयति वेलामित्यनेन सम्बन्ध ॥

(२२) परीति । बालपादपानामल्पाल्पतरूणा या वीथ्या श्रेण्या । वीथ्यालिरावलि

सम्मीलन्ति न तावद् बन्धनकोषास्तयावचितपुष्पा ।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः ॥ (२३)

स्पर्शं रूपयित्वा ॥ अहो प्रवातसुभगोऽयं वनोद्देशः । (२४)

शक्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः ॥ (२५)

विलोक्य ॥ हन्तास्मिन् वेतसलतामण्डपे सन्निहितया शकुन्तलया भवितव्यम् । तथाहि । (२६)

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ (२७)

---

पङ्क्तिः श्रेणी लेखास्तु राजयः इत्यमरः । मदनुगतमार्गेति यावत् । सा तु शकुन्तला । अचिरमविलम्बम् । अचिरप्रयाणे हेतुमुत्थापयति वृत इति ॥

(२३) सम्मीलि । तया शकुन्तलया अवचितानि उद्धृतानि कुसुमानि पुष्पाणि येभ्यस्ते तथोक्ता बन्धनकोषाः पुष्पमूलबन्धनजनकाः कोषास्तावन्न सम्मीलन्ति मुद्रां यान्ति चिरप्रयाणे तु ते सम्मीलिष्यन्त्येवेति भावः । तथा अमी किसलयानां पल्लवानां छेदाः खण्डानि च । छेदः खण्डोऽस्त्रियामिति त्रिकाण्डशेषः । क्षीरेण प्रसवभङ्गप्रवृत्तनिर्यासेन स्निग्धा मसृणा दृश्यन्ते । इयमार्या ॥

(२४) स्पर्शमिति । रूपयित्वा तथा कृत्वा । प्रवातेति । प्रकृष्टेन शैत्यसौगन्ध्यमान्द्यात्मकगुणत्रयशालिना वातेन सुभगः सुन्दरः । सुन्दरेऽधिकभाग्ये च दुर्दिनेतरवासरे । तुरीयांशे श्रीमति च सुभग इति शब्दार्णवः । वनोद्देशो वनप्रदेशः ॥

(२५) वातस्य शैत्यादिगुणान् दर्शयति शक्य इति । अरविन्दैरम्भोरुहैः सुरभिः सुगन्धिः । सुगन्धौ च मनोज्ञे च वाच्यवत् सुरभिः स्मृत इति विश्वः । एतेन सौगन्ध्यं दर्शितम् । तथा मालिन्यास्तरङ्गाणामूर्मीणां कणानम्बूनि वहतीति कणवाही । लवलेशकणाणवः इत्यमरः । एतेन शैत्यं दर्शितम् । पवनो वायुः अनङ्गतप्तैर्मदनदाहवद्भिरङ्गैरवयवैः निर्दयं गाढमालिङ्गितुं शक्यः । अत्र निर्दयमित्यनेन मान्द्यं ख्यापयति । इयमार्या ॥

(२६) विलोक्येति । हन्तकारो हर्षं द्योतयति । शकुन्तलया अस्मिन् वेतसलताभिर्वाणीरतरुगताभिर्लताभिर्मण्डपे गृहभूते सन्निहितया अवस्थितया भवितव्यम् । भावे तव्यः । उक्तं प्रमापयितुमाह तथाहीति ॥

(२७) अभ्युन्नतेति । पुरस्तादग्रतोऽभ्युन्नता उन्नता तथा जघनयोः कटिदेशपुरो

यावद् विटपान्तरेणावलोकयामि । (२८)

तथा कृत्वा सहर्षम् ॥ अये लब्धं नेत्रनिर्व्वाणम् । एषा मनोरथप्रिया मे सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते । भवतु लतान्तव्यवहितः शृणोमि विस्रम्भकथितान्यासाम् ॥ इति विलोकयन् स्थितः । (२९)

॥ ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ॥ (३०)

सख्यौ ॥ उपवीज्य ॥ हला सउन्तले अवि सुहाअदि दे णलिणीवत्तवादो । (३१)

शकु ॥ सखेदम् ॥ किं वीजअन्ति मं पिअसहीओ । (३२)

सख्यौ ॥ सविषादं परस्परमवलोकयतः । (३३)

राजा ॥ बलवदस्वस्थशरीरा तत्रभवती दृश्यते । (३४)

---

भागयोः गौरवात् भारात् । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः । पश्चात् गुल्फनिपातभूमौ अवगाढा निम्ना अभिनवा अचिरभूता पदपङ्क्तिः पादचिह्नावली । पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोरिति मेदिनी । अस्य वेतसलतागृहस्य पाण्डुः पाण्डुरवर्णा सिकता बालुका यस्मिन् तत् तथोक्ते द्वारे दृश्यते । इत्यमार्य्या ॥

(२८) यावदिति । विटपान्तरेण विटपानां पल्लवानामन्तरेण अवकाशेन ॥

(२९) तथेति । अये सम्भ्रमे । नेत्रनिर्व्वाणं नयनयोस्तापशान्तिः । मनोरथस्य अभिलाषस्य प्रिया प्रीतिकरी । यस्यामभिलाषोऽविरतं रमत इति भावः । सकुसुमास्तरणं कुसुमशय्यासहितम् । शिलापट्टं पाषाणफलकम् । अथ पट्टः स्यात् फलके न्टपशासने इति त्रिकाण्डशेषः । अधिशीङ्स्थासेत्यादिनाधिकरणस्य कर्म्म । उपास्यते शुश्रूष्यते । आसां शकुन्तलायास्तत्सख्योश्चेत्यर्थः ॥

(३०) तत इति । यथोक्तव्यापारा कुसुमशय्याधिशायिनी सखीशुश्रूष्यमाणा च ॥

(३१) सख्याविति । उपवीज्य अन्तिके वीजयित्वा । हलेत्यादि । अयि शकुन्तले अपि सुखयति ते नलिनीपत्रवातः । अपि प्रश्ने । सुखयति सुखं करोति । ते इति सम्बन्धमात्रविवक्षायां षष्ठी ॥

(३२) शकु इति । सखेदं सोपतापम् । किमित्यादि । किं वीजयतो मां प्रियसख्यौ ॥

(३३) सख्याविति । सविषादं जाड्येन सहितम् ॥

(३४) राजेति । बलवत् अतीव । बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरे इत्यमरः । ४

सवितर्कम्॥ तत् किमयमातपदोषः स्यात् उत यथा मे मनसि वर्त्तते। (३५)

साभिलाषं निर्वर्ण्य॥ अथवा कृतं सन्देहेन। (३६)

> स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
> प्रियायाः साबाधं तदपि कमनीयं वपुरिदम्।
> समस्तापः कामं मनसिजनिदाघप्रसरयो-
> र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु॥ (३७)

---

अस्वस्थशरीरा सन्तप्तशरीरा। अत्र दाहप्रशान्तिकरयोः कुसुमास्तरणनलिनीपत्रवातयोः सद्भावात् तापानुमानं तस्य च गौरववृद्धिः स्पर्शसुखाननुभवव्यक्तेः। कुसुमास्तरणादीनां दाहप्रशान्तिकरत्वमाह सुश्रुतः। शीतं विधानमत ऊर्द्ध्वं प्रवक्ष्ये दाहप्रशान्तिकरमृद्धिमतां नराणामित्युपक्रम्य—आसादयन् पवनमाहृतमिष्टगन्धकह्लारपद्मदलशैवलसञ्चयेभ्यः। शीतैर्वितानपवनैः परिरभ्यमाणः शीतश्चरेत् भवनकाननदीर्घिकासु इति। तथा। मांसीतमालघनकुङ्कुमपद्मपत्रजालप्रवालप्रियककेशरपुण्डरीके। पुन्नागनागकरवीरलतोपकारे तस्मिन् गृहे कमलरेणुरुणे शयीतेति च॥

(३५) सवितर्कमिति। किमेवमुतैवमिति तत्त्वानुसन्धानं वितर्कः। तत् तावत्। अयं सन्तापः। आतपदोषः आतपोपजनितविकारसमूहः। उतो विकल्पे अथवेत्यर्थः। उताप्यर्थविकल्पयोरित्यमरः। मनसि यथा वर्त्तते यथानुभवामि स एवेत्यर्थः। स्मरसन्ताप इति भावः॥

(३६) साभिलाषमिति। निर्वर्ण्य स्थिरमवलोक्य। निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणमित्यमरः। कृतं अलम्। कृतं युगेऽलमर्थे चेति मेदिनी। सन्देहेनेति वारणार्थेन योगे तृतीया॥

(३७) स्तनेति। प्रियायाः शकुन्तलाया इदं वपुः शरीरं स्तनयोर्न्यस्तं दत्तमुशीरं वीरणमूलानुलेपनं यस्य तत् तथोक्तम् तथा प्रशिथिलं श्लथभूतं मृणालस्य एकवलयं यस्य तत् तथोक्तम्। शिथिलं प्रश्लथः श्लथ इति शब्दरत्नावली। अतएव साबाधं आबाधया सम्यक्पीडया सह वर्त्तमानं तदपि तथापि कमनीयं मनोज्ञम्। मनसिजस्य कामस्य निदाघस्य ग्रीष्मस्य च प्रसरयोर्वेगयोस्तापो दाहः समः। तथाच गरुडपुराणम्। कामाद् भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीष्टतिक्षय इति। कामं स्यादस्तु। अकामानुमतौ काममित्यमरः। किन्तु युवतिषु यौवनवतीषु विषयेषु ग्रीष्मस्य अपराद्धं सन्तापदानापराध एवं सुभगमित्थं सचारु वपुःकमनीयताकरमिति यावत्। न भवतीत्यर्थः। अतो मनसिजदाह एवायमिति भावः। इदं शिखरिणी नाम वृत्तम्॥

प्रिय ॥ जनान्तिकम् ॥ अणसूए तस्स राएसिणो पढमदंसणादो आरम्भिअ पज्जुस्सुअमणा सउन्तला ण क्खु से अण्णणिमित्तो आतङ्को भवे । (३८)

अन ॥ सहि मम वि एआरिसी आसङ्का हिअअस्स भोदु पुच्छिस्सं दाव णं । (३९)

प्रकाशम् ॥ सहि पुच्छिदव्वासि किम्पि बलीओ क्खु दे अङ्गाणं सन्दावो । (४०)

राजा ॥ वक्तव्यमेव । (४१)

अभिकरविषदान्यस्यास्तथाहि दुःसहनिदाघशंसीनि ।
भिन्नानि श्यामिकया मृणालनिर्माणवलयानि ॥ (४२)

शकु ॥ पूर्व्वार्द्धेन शयनादुत्थाय ॥ हला भण जं वत्तुकामासि । (४३)

---

(३८) प्रियमिति । जनान्तिकमप्रकाशम् । तत्प्रकारस्तु पूर्व्वं दर्शित । अणे त्यादि । अनसूये तस्य राजर्षे प्रथमदर्शनादारभ्य पर्य्युत्सुकमना शकुन्तला, न खल्वस्या अन्यनिमित्त आतङ्को भवेत् । प्रथमदर्शनादित्यत्र अन्यारभ्यार्थेति पञ्चमी । पर्य्युत्सुकमना उत्कण्ठितमना । अन्यन्निमित्तं हेतु र्यस्य सोऽन्यनिमित्त । आतङ्कस्ताप । रुक्तापशङ्का स्वातङ्क इत्यमर ॥

(३९) अनेति । सहीत्यादि । सखि ममाप्येतादृशी आशङ्का हृदयस्य, भवतु प्रक्ष्यामि तावदेनाम् । आशङ्का स शयारोप । एनां शकुन्तलाम ॥

(४०) प्रकाशमिति । सहीत्यादि । सखि प्रष्टव्यासि किमपि बलीयान् खलु ते अङ्गानां सन्ताप । अतिशयेन बलवानिति बलीयान् । तुष्ठ्वद्विनामितीयसौ सतो लोप । अङ्ग् अवयव ॥

(४१) राजेति । वक्तव्य वचनार्हम् । बलीयानित्यादीति शेष ॥

(४२) अङ्गसन्तापबलीयस्त्वं वचनार्हतां साधयति शशीति । तथाहि शशिन-श्चन्द्रस्य करा अंशव इव विशदानि शुभ्राणि अस्या शकुन्तलाया मृणालनिर्म्माणवलयानि मृणालनिर्म्मितवलयानि । कर्म्मधारयः । श्यामिकया तापोपजनितकालिम्ना भिन्नानि विदि-तानि सन्ति दुःसह असह्यम् निदाघमुष्माणं शंसन्ति कथयन्तीति दुःसहनिदाघ-शंसीनि भवन्तीति शेष । भेदो द्वैधे विशेषे च उपजापे विदारणे इति विश्व । इत्यार्य्या ॥

(४३) शकु इति । पूर्व्वार्द्धेन शरीरार्द्धभागेन । शयनात् शय्यात । शय्यायां

अन ॥ हला सउन्तले अलब्भन्तरा अह्मे दे मणोगदस्स वुत्तन्तस्स किन्तु जादिसी इदिहासकथाणुबन्धेसु कामिअणाणं अवत्था सुणीअदि तादिसी तुह त्ति तक्केमि ता कधेहि किं णिमित्तं दे अअं आआसं त्ति विआरं परमत्थदो अआणिअ अणारम्भो किल पडीआरस्स (४४)

राजा ॥ अनसूयामपि मदीयस्तर्कोऽवगतः। (४५)

शकु ॥ बलीओ मे आआसो ण सक्कणोमि सहसा णिवेदिदुं। (४६)

प्रिय ॥ सुट्ठु, क्खु एसा भणादि किं एदं अत्तणो उवद्दवं णिगूहसि अणुदिअसं क्खु परिहीअसि, अङ्गेसु लावण्णमई छाया केवलं तुमं ण मुञ्चदि। (४७)

---

गयनीयत्र्। शयनमित्यमरः। हलेत्यादि। अयि सखि यद् वक्तुकामासि। सख वद। वक्तुकामोऽभिलाषो यस्याः सा वक्तुकामा ॥

(४४) अनेति। हलेत्यादि। अयि शकुन्तले अलब्धान्तरा वयं ते मनोगतस्य वृत्तान्तस्य किन्तु यादृशी इतिहासकथानुबन्धेषु कामिजनानामवस्था श्रूयते तादृशी तवेति तर्कयामि। तत कथय किं निमित्तं ते अयमायास इति। विकारं परमार्थतोऽज्ञात्वा अनारम्भः किल प्रतीकारस्य। अलब्धान्तरा अनवगतविशेषा। इतीति। इतिहासकथाना पुरावृत्तकथानामनुबन्धेषु अभिवर्त्तनेषु प्रवृत्तिष्विति यावत्। दोषोत्पादेऽनुबन्ध आसु प्रकृत्यादिषु नश्वरे। मुख्यानुयायिनि शिशौ प्रकृतस्यानिवर्त्तने इत्यमरः। कामिजनानामनङ्गदशापन्नजनानाम्। अवस्था कालिको विशेषः। विशेष कालिकोऽवस्था इत्यमरः। किं निमित्तं किमर्थम्। त्वादयोऽर्थैकत्वे सेसु सर्वा इति प्रथमा। निमित्तशब्दोऽत्र प्रयोजनपरः। आयास श्रमः। विकार रोगम्। विकारो विकृतौ रोगेऽपीति विश्वः। परमार्थ तत्त्वतः। प्रतीकारस्य चिकित्सायाः। अनारम्भः किल आरम्भो न स्यादेव। किलशब्दो निश्चये ॥

(४५) राजेति। मदीयस्तर्कः अयं वा कारणनाम इत्येवरूप ॥

(४६) शकु इति। बलीत्यादि। बलीयान् मे आयास न शक्नोमि सहसा निवेदयितुम्। आयास श्रम। सहसा अतर्कितम्। अतर्किते तु सहसेत्यमरः ॥

(४७) प्रियमिति। सुष्ठु इत्यादि। सुष्ठु खल्वेषा भणति किमेतमात्मन उपद्रवं निगूहसि अनुदिवस खलु परिहीयसे। अङ्गेषु लावण्यमयी छाया केवलं त्वां न मुञ्चति। सखा अनसूया। किं कथम्। उपद्रव विकारम्। निगूहसि प्रच्छादयसि। अनुदिवसमन्वहम्। परिहीयसे रसादिभि धातुभि संक्षयसे। लावण्यमयी सकान्तिकेषु छायाया-

राजा ॥ अवितथमाह प्रियंवदा । तथाहि । (४८)

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते
पत्त्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ (४९)

शकु ॥ (निश्वस्य) ॥ कस्स वा अण्णस्स कधइस्सं किन्तु आआसइत्तुआ वो भविस्सं । (५०)

---

सारत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इत्युज्ज्वलनीलमणिदर्शितलक्षणा । छाया कान्तिः । छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातप इत्यमरः । मुग्धति जहाति ॥

(४८) राजेति । अवितथं सत्यम् । आह यत्तुदिवसं परिहीयसे इतीति शेषः । एतादिशोषं दर्शयितुमाह तथाहीति ॥

(४९) क्षामेति । आननं मुखं अस्या इत्यादिः । क्षामक्षामावतिक्षीणौ कपोलौ गण्डौ यत्र तत् तथोक्तम् । तथा उरो वक्षः काठिन्येन कठिनभावेन मुक्तौ परित्यक्तौ स्तनौ यत्र तत् तथोक्तम् । एतद्द्वितयेन धातुक्षयारम्भो दर्श्यते । तथा मध्यो मध्यावयवः क्लान्ततरोऽतिदुर्बल । तथा अंसौ भुजौ प्रकामविनतौ अतीवनम्रौ । आभ्यां सकलाङ्गग्लानिः । तथा छविर्द्युतिश्च पाण्डुरा पाण्डुवर्णा अतएव पत्राणां शोषणेन शोषकेन पाण्डुरीकारकेणेति यावत् । नभ्यादित्वात्त्सनः । मरुता दक्षिणानिलेन स्पृष्टा माधवीलतेव शोच्या शोचनीया तथा प्रियं प्रीतिकरं दर्शनं यस्या सा तथोक्ता च इयं शकुन्तला मदनग्लाना कामविकला आलक्ष्यते निश्चीयते । ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुरित्यमर । एतेन शोकयोषितां गतेति सुस्पष्टं दर्शितम् । यथाह सुश्रुतः । व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः । पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः । प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः । विना शुक्रक्षयकृतैर्विकारैरुपलक्षित इति । उत्तरश्लोकस्य भावप्रकाशाभिमतः व्याख्याभिधीयते प्रध्यानशीलः यत्नाभावेन शोको जनितस्तद्ध्यानपरः । स्रस्ताङ्गं शिथिलाङ्गं । तादृक् पूर्वोक्तव्यवायशोषिसदृशः । तेन पाण्डुदेहः सर्वधातुक्षययुक्तो भवति परं शुक्रक्षयकृतैर्विकारैर्मेढ्रवृषणवेदनादिभिर्वर्जितो भवति व्याधिस्तथापीति ॥

(५०) शकु इति । निश्वस्य दीर्घमिति शेषः । कस्सेत्यादि । कस्य वा अन्यस्य कथयिष्यामि । किन्तु आयासहेतुका वो भविष्यामि । अन्यथेत्यत्र सम्बन्धविवक्षायां षष्ठी । युष्मभ्यमेव कथयितव्यमिति भावः । आयासहेतुका दुःखहेतुः ॥

उभे ॥ सहि अदो ज्जेव णिव्वन्धो सिणिद्धजणसंविभत्तं क्खु दुक्खं सज्झवेअणं भोदि। (५१)

राजा ॥ पृष्टा जनेन समदुःखसुखेन बाला

नेयं न वक्ष्यति मनोगतमाधिहेतुम्।

दृष्टो विवृत्य बहुशोऽप्यनया सतृष्णम्

मत्रोत्तरश्रवणकातरतां गतोऽस्मि ॥ (५२)

शकु॥ जदो पहुदि तवोवणरक्खिदा सो राएसी मम दसणपधं गदो। इत्यर्द्धोक्तेन लज्जां नाटयति। (५३)

उभे॥ कधेदु कधेदु पिअसही। (५४)

शकु॥ तदो पहुदि तग्गदेन अहिलासेन एआवत्थह्मि संवुत्ता।(५५)

---

(५१) उभे इति। सहीत्यादि। सखि अतएव निर्व्बन्ध स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति। निर्व्बन्धः स्निग्धनिश्चयः स्निग्धेति। स्निग्धजनेन वयस्यजनेन संविभक्तं विभज्य प्रतिपादितम्। वयस्यः स्निग्धः सवया इत्यमरः। दुःखं सह्या सहनीया वेदना स वेदोऽनुभव इति यावत् यस्य तत् तथोक्तं भवति। लघु तयेवेति भावः। संवेदो वेदना न नेत्यमरः॥

(५२) राजेति। किं वक्ष्यतीत्यौत्सुक्यादाह पृष्टेति। समे स्वगताभ्यामन्यूने दुःखसुखे यस्य स तेन जनेन सखीजनेनेति यावत् पृष्टा कृतप्रश्ना इयं बाला किशोरी मनोगतं मनसि वर्त्तमानं आधेः मनःपीडायाः हेतुम्। पुंस्याधि र्मानसी व्यथेत्यमरः। न वक्ष्यति न श्रावयिष्यति न एवं न वक्ष्यत्येवेत्यर्थः। अनया बालया विवृत्य परिवृत्य बहुशो ऽनकधा सतृष्णं सस्पृहम्। तृष्णे स्पृहापिपासे द्वे इत्यमरः। दृष्टोऽपि येन स्पष्टमेवानुरागो निवेदितः स्यादिति भावः। अहं अत्र वचनोन्मुखदशायां उत्तरस्य प्रतिवचनस्य श्रवणे विषये कातरतां किमेषा वक्ष्यतीत्यधीरतां गतः प्राप्तोऽस्मि। अधीरे कातर इत्यमरः। यतो मम्येयमातपबाधैवति प्रत्युक्तौ विफलोऽयं मनोरथाडम्बरः स्यादिति भावः। इदं वसन्ततिलकं नाम वृत्तम्॥

(५३) शकु इति। जदो इत्यादि। यतः प्रभृति तपोवनरक्षिता स राजर्षिः मम दर्शनपथं गतः। यतः प्रभृति यत्कालमारभ्य। अन्यारभ्येति पञ्चमी। अर्द्धोक्तेन ततः प्रभृतीत्यादिमतीकान्तशङ्खार्द्धेन। नाटयति रूपयति॥

(५४) उभे इति। कधेदु इत्यादि। कथयतु कथयतु प्रियसखी। सुगमम्॥

(५५) शकु इति। तदो इत्यादि। ततः प्रभृति तद्गतेनाभिलाषेण एतावदव

उभे ॥ दिट्ठिआ दे अणुरूए वरे अहिलासो, अधवा साअरं उज्झिअ कहिं महाणईए पविसिदव्वं । (५६)

राजा ॥ सहर्षम ॥ श्रुत यच्छ्रोतव्यम् । (५७)

स्मर एव तापहेतु निर्व्वापयिता स एव मे जात ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ (५८)

शकु ॥ ता जइ वो अणुमदं तदो तधा पवत्तिदव्व जधा तस्स राएसिणो अणुकम्पणीआ होमि त्ति अण्णधा सुमरेध म । (५९)

राजा ॥ अहो विमर्शच्छेदि वचनम् एतदेव कामफलं यन्नफलमन्यत । एतावदवस्थापि मा सुखयति । (६०)

---

स्यामि स हन्ता । त राजर्षि गत प्राप्तस्तद्गतस्तेनाभिलाषेण मम स्पृहया हेतुना एतावती दूयती अवस्था दशा यस्या सा तथाभूता सञ्जातास्मि ॥

(५६) उभे इति । दिट्ठिआ इत्यादि । दिष्ट्या ते अनुरूपे वरेऽभिलाष । अथवा सागरमुज्झित्वा कुत्र महानद्या प्रवेष्टव्यम । दिष्ट्येत्यानन्दसूचकम । दिष्ट्या समुपजोष मित्यानन्द इत्यमर । यद्वा दिष्ट्या भाग्यात् ते तव अनुरूपे तुल्यरूपे वरे वरणीये पात्रे अभिलाषो जात इति शेष । न चेत् महान् प्रमादोऽभविष्यदिति भाव । दिष्ट्या हर्षे शुभे भाग्ये इति शब्दाब्धि । विचार्य्याह अथवेति । महानद्या गङ्गया । तथापि सर्व्व एव स्वयोग्यमभिलषतीति भाव ॥

(५७) राजेति । यत् श्रोतव्य श्रवणीयमतीवश्रुतिसुभगमिति यावत् तत् श्रुतम ॥

(५८) स्मर इति । स्मर काम एव मे तापहेतु दीर्हहेतु । उक्त हि गरुडपुराणे । कामाद्भ्रमोऽरुचि दाहो ह्रीनिद्राधीधृतिक्षय इति । स एव स्मर एव मे निर्व्वापयिता तापोपशमयिता जात । प्रियाचेतसि गत सञ्जिति शेष । यथा तापहेतु दिवस एव तपात्यये निदाघावसाने । निदाघ उष्णोपगम उष्ण उष्मागमस्तप इत्यमर । अभ्रै मेघै श्यामोऽसित सन् जीवानां जीवता लोकस्य भुवनस्य भुव इति यावत निर्व्वापयिता जायते तथेत्यन्वय । इत्यार्य्या ॥

(५९) शकु इति । तेत्यादि । तद् यदि वोऽनुमत ततस्तथा प्रवर्त्तितव्य यथा तस्य राजर्षेरनुकम्पनीया भवामीति । अन्यथा स्मरत माम । तत् तस्मात् । तथा प्रवर्त्तितव्य तथा यतितव्यम् । किमित्याह यथेत्यादीत्यन्तम । अन्यथा तदकरणे । मा स्मरत यूय स्मृतिमात्रे पात्रभवत । अह जीवलोक हास्यामीति भाव ॥

(६०) राजेति । विमर्शच्छेदि निश्चितवितर्कविच्छेदि तथापि किमिव निरपेक्षा

प्रिय॥ जनान्तिकम्॥ अणसूए दूरगदो से मणोरहो अक्खमा इअं कालहरणस्स। (६१)

अन॥ पिअम्वदे को णु उवाओ भवे जेण अविलम्बिदं णिहुदञ्च सहीए मणोरहं सम्पादेह्म। (६२)

प्रिय॥ णिहुदं त्ति चिन्तणीअं सिग्घं त्ति ण दुक्करं। (६३)

अन॥ कथं विअ। (६४)

प्रिय॥ णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिआ सूइदाहिलासो इमेसुं दिअएसुं पजाअरकिसो विअ लक्खीअदि। (६५)

---

भविष्यति उत सानुरागापि गुरुजनानुमतिमपेक्षिष्यते इत्येव वितर्कस्यापि नावसर इति भावः। वितर्कः स्यादूहनम् परामर्शो विमर्शनम्। अध्याहारस्तर्क ऊह इति हेमचन्द्रः। एतदेव एतत्पर्यन्तं कामफलं कामसाध्यं नत्वितोऽन्यत् परिणयनादिकं कामेन साध्यते इत्यर्थः। तदा तत् किंसाध्यमित्यत आह यत्नेति। अन्यत् परिणयनादिकं यत्नफलं यत्नसाध्यम्। तथाच येन येन विना यत्नाय प्रवृत्तिर्नोभेन कामेन तन्निष्पादितमधुनास्माभिः समागमाय यतितव्यमिति भावः। एतावद्वयस्यापि शोकशोषायस्यापि। मा शङ्कयति अनुरागोद्गारादिति भावः॥

(६१) प्रियमिति। जनान्तिकमप्रकाशम्। त्रिपताककरेण व्यवधायेति यावत्। अणेत्यादि। अनसूये दूरगतोऽस्या मनोरथ, अक्षमेयं कालहरणस्य। अस्याः सख्याः मनोरथोऽभिलाषो दूरमनासन्नं राजानमिति यावत् गतो विषयीचकार। अत इयं कालहरणस्य कालक्षेपणस्य अक्षमा अनर्हा। अत एव तदासादनाय कालहरणसम्भवः अलमन्येनेच्छितेनेति भावः॥

(६२) अनेति। पिअम्वदे इत्यादि। प्रियंवदे को नु उपायो भवेत् येनाविलम्बितं निभृतञ्च सख्या मनोरथं सम्पादयाम। नुः प्रश्ने। भवेदिति प्रश्ने लिङ्। येन उपायेन। अविलम्बितं शीघ्रम्। निभृतं निःशब्दम्। सम्पादयामः सफलीकुर्मः॥

(६३) प्रियमिति। णिहुदमित्यादि। निभृतमिति चिन्तनीयं शीघ्रमिति न दुष्करम्। निभृतमिति। निभृतं सम्पादनं चिन्तनीयं विचारणीयम्। शीघ्रमिति। शीघ्रं सम्पादनं न दुष्करमनायाससाध्यम्॥

(६४) अनेति। कथं विअ कथमिव। कीदृगित्यर्थः॥

(६५) प्रियमिति। णमित्यादि। ननु सोऽपि राजर्षिरस्मिन् जने स्निग्धदृष्ट्या सूचिताभिलाष एषु दिवसेषु प्रजागरकृश इव लक्ष्यते। ननुरनुपदे। अस्मिन् जने

अन॥ सहि रोअदि मे सुउमारो एसो पओओ किं वा सउन्तला भणादि। (६८)

शकु॥ सहीणिओओ वि विकप्पीअदि। (७०)

प्रियं॥ तेण हि अत्तणो उवण्णासाणुरूअं चिन्तेहि ललिदपदावलिबन्धं गीदिअं। (७१)

शकु॥ चिन्तेमि किन्तु अवहीरणाभीरुअं वेबदि मे हिअअं।(७२)

राजा॥ विहस्य॥ (७३)

अयं स ते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरु यतोऽवधीरणाम्।
लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो भवेत्॥(७४)

---

स्त्रियः सुमनसः पुष्पमित्यमर। देवताशेषापदेशेन आभिः सुमनोभिरर्चनीयदेवोऽभ्यर्च्यतामिति छलेन॥

(६९) अनेति। सहीत्यादि। सखि रोचते मे सुकुमार एष प्रयोग किं वा शकुन्तला भणति। रोचते प्रीतिमुत्पादयति। मे मह्यम्। यस्मै रुचिरित्युपादानाञ्चतुर्थी। सुकुमारो मृदु अनतिप्रगल्भ इति यावत्। प्रयोगः प्रयुक्ति। शकुन्तलासम्मत्यर्थमाह शकुन्तलेत्यादि॥

(७०) शकु इति। सहीत्यादि। सखीनियोगोऽपि विकल्प्यते। अपि प्रश्ने। तथाच सखीनियोग सख्याः प्रयोग किं विकल्प्यते द्वैधीक्रियते अपि तु नेत्यर्थः॥

(७१) प्रियमिति। तेणेत्यादि। तेन हि आत्मन उपन्यासानुरूपा चिन्तय ललितपदावलिबन्धा गीतिकाम्। उपन्यासानुरूपा प्रथमकथनोपयुक्ताम्। उपन्यासस्तु वाङ्मुखमित्यमर। ललितेति। ललिताभि मनोज्ञाभि पदावलिभि पदपङ्क्तिभि बन्धो रचना यस्या सा ताम्॥

(७२) शकु इति। चिन्तेमीत्यादि। चिन्तयामि किन्तु अवधीरणाभीरुक वेपते मे हृदयम्। अवधीरणा राज्ञोऽवज्ञा। अवधीरत्वकवज्ञायामिति कविकल्पद्रुम। वेपते कम्पते॥

(७३) राजेति। विहस्य मध्यम हसित्वा॥

(७४) अयमिति। हे भीरु भयशीले। भीरुकौ भिय इति भिय क्रु। ऊतोऽयुङ्रज्ज्वादेरिति स्त्रियामूङ्। अम्बार्थनद्योर्ह्रस्व इति सम्बोधने ह्रस्व। त्व यत पुरुषादवधीरणामवज्ञा विशङ्कसे आकलयसि सोऽयं पुरुषस्ते तव सङ्गमे सयोगे उत्सुक उद्युक्त सन् तिष्ठति तथाहि प्रार्थयिता श्रियोऽभिलाषी जन श्रियं लक्ष्मीं लभेत वा न लभेत वा तस्यानैयत्यमिति भाव। ईप्सित आप्तुमिष्टो जन कथ श्रिया लक्ष्म्या दुरापो

अपि च । (७५)

अयं स यस्मात् प्रणयावधीरणामशङ्कनीयां करभोरु शङ्कसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो न रत्नमन्विष्यति मृग्यते हि तत् ॥(७६)

सख्यौ ॥ अइ अत्तगुणावमाणिणि को णाम सन्दावणिव्वावहेतुअं सारदीअं ज्जोसं आदवत्तेण णिवारेदि । (७७)

शकु ॥ सस्मितम् ॥ णिओइदाह्मि ॥ इत्युपविष्टा चिन्तयति । (७८)

राजा ॥ स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः । (७९)

---

दुरासदो भवेत् कथमपि नेतव्यं । खनयं मज्जनात् म्रियेति न पक्षो । अत्र सुसदृशवस्तुन प्रतिबिम्बनाद् दृष्टान्तोऽलङ्कार । वंशस्थविलम्बितम् । उत्तरत्रापि ॥

(७५) दृष्टान्तान्तरप्रदर्शनाय पुनर्वक्तुमाह अपि चेति ॥

(७६) अयमिति । करभस्य करिशिशोरूरू इव ऊरू यस्याः सा करभोरूः । वाम-लक्षणेतूपमानात् स्त्रियामूङ् । उपमानपदलोप । करभ करिशावक इत्यमरः । हे करभोरु अशङ्कनीयामसम्भावनीयां प्रणयस्य भवत्कृतप्रार्थनस्य अवधीरणामवज्ञाम् । प्रणयः प्रेमा । विश्रम्भयाच्ञाप्रेमाणः इत्यमरः । यस्मात् जनात् शङ्कसे सोऽयं जनः प्रणयोत्सुकः प्रार्थनोद्युक्तः सन् त्वामुपस्थितस्त्वत्समीपमागतः । तथाहि रत्नं महार्घो मणिः नान्विष्यति स्वामीकर्त्तुं लोकान् न मार्गयति तद् रत्नं मृग्यते स्वीकर्त्तुं लोकैरन्विष्यते । अत्रापि दृष्टान्तोऽलङ्कारः ॥

(७७) सख्याविति । अइ इत्यादि । अयि आत्मगुणावमानिनि को नाम सन्ताप-निर्वापणहेतुकां शारदीं ज्योत्स्नामातपत्रेण निवारयति । अयि सम्बोधने । अयि प्रश्नानुनययोः क्वापि सम्बोधनेऽपि चेति मेदिनी । आत्मनो गुणान् रूपादीन् यावमन्यतेऽवजानाति सात्म-गुणावमानिनी । रूपादिगुणसम्पन्नाया अपि राज्ञोऽवधीरणाभीरुत्वादिति भाव । आत-पत्रेण छत्रेण । छत्रन्त्वातपत्रमित्यमरः ॥

(७८) शकु इति । सस्मितं समन्दहासम् । णिओ इत्यादि । नियोजितास्मि । नियोजिता प्रवर्त्तिता ॥

(७९) राजेति । स्थाने युक्तम् । युक्ते द्वे साम्प्रतं स्थाने इत्यमरः । विस्मृतो निमेषो यत्र तत् तेन निर्निमेषेणेति यावत् चक्षुषा यदालोकयामि तद् युक्तमित्यर्थः । निमेष निस्पन्दोऽक्षि दर्शयितुमाह यत इति ॥

18 उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥ (८०)

शकु॥ हला चिन्तिदा मए गोदिआ असण्णिहिदाणि उण लेहन-साहणाणि। (८१)

प्रिय॥ ण इमस्सिं सुओदरसुउमारे णलिणीवत्ते णहेहिं आलिहीअदु। पदच्छेदभत्तीए (८२)

शकु॥ यथोक्तं रूपयित्वा। हला सुणध दाव सङ्गदत्था ण व त्ति। (८३)

उभे॥ अवहिदह्म। (८४)

शकु॥ वाचयति। (८५)

19 तुज्झ ण आणे हिअअं मम उण मअणो दिवा वि रत्तिं पि।
णिक्किव दावइ वलिअं तुहहुत्तमणोरहाइं अङ्गाइं। (८६)

---

(८०) ०उन्नमीति। पदानि रचयन्त्या योजयन्त्या अस्याः शकुन्तलाया उन्नमिता उदञ्चिता एका भ्रूलता यत्र तत आननं वदनं कर्तृ, पुलकाञ्चितेन रोमाञ्चवता कपोलेन गण्डेन द्वारेण मयि मद्विषये अनुरागं कथयति व्यनक्ति। इयमार्य्या ॥

(८१) शकु इति। हलेत्यादि। अयि चिन्तिता मया गीतिका असन्निहितानि पुनर्लेखनसाधनानि। चिन्तिता चेतसा रचिता। असन्निहितानि अनुपस्थितानि। लेखन साधनानि लेखनोपकरणानि। पुनस्त्वर्थे ॥

(८२) प्रियमिति। णमित्यादि। नन्वस्मिन् शुकोदरसुकुमारे नलिनीपत्रे पदच्छेदभक्त्या नखैरालिख्यताम्। नतुरस्थाने। मन्त्रावधारणात्तत्रानुनयामन्त्रणे ननु। तन्त्रमर। शुकेति। शुकस्य पक्षिण उदरं क्रोडमिव सुकुमारं कोमलं तस्मिन्। पदच्छेदभक्त्या पदविच्छेदाय यावान् विभाग आवश्यकस्तावता विभागेन अनतिविभागेनेति यावत् ॥

(८३) शकु इति। यथोक्तं प्रियंवदोपदिष्टानुरूपम्। हलेत्यादि। अयि शृणुत तावत् सङ्गतार्था न वेति। सङ्गतः सलग्नो अर्थो यस्याः सा सङ्गतार्था गीतिकेति शेषः। इति शृणुतमितान्वयः ॥

(८४) उभे इति। अवहिदह्म अवहिते स्वः। अवहिते कृतमनोऽभिनिवेशे ॥

(८५) शकु इति। वाचयति पठति। वचक् सन्देश इति कविकल्पद्रुमः। सन्देश पाठः अतएव वाचयताऽखिला लिपिमिति हलायुध उदाजहार ॥

(८६) तुज्झेति। तव न जाने हृदयं मम पुनः मदनो दिवापि रात्रिमपि। निष्कृप

राजा ॥ अनन्तरः सत्वयमात्मानं दर्शयितुम् । (८७)

सहसोपसृत्य । (८८)

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ (८९)

सख्यौ ॥ विलोक्य सहर्षमुत्थाय ॥ साअदं अधासमीहिदफलस्स अविलम्बिणो मणोरहस्स । (९०)

शकु ॥ अभ्युत्थातुमिच्छति । (९१)

---

तापयति बलीयस्तव च त्वन्मनोरथानि अङ्गानि । हे निष्कृप निर्दय तव हृदय न जाने साभिलाषं निरभिलाषं वेति भावः । मम पुनर्मम तु तव कृते मनोरथोऽभिलाषो येषां तानि अङ्गानि मदनो दिवापि रात्रिमपि व्याप्य बलीयोऽतिशयेन तापयति वितपति । तपक् दाहे इति कविकल्पद्रुमः । सदाध्वादिव्याप्ताविति दिवारात्र्यो कर्मता । इयमुद्गाथा । यथोक्तं पिङ्गलेन । पुव्वद्धे उत्तद्धे मत्ता तीसत्ति सुभअ स भणिआ । सो उग्गाहो वुत्तो पिङ्गलकइ दिट्ठ सङ्ठिमत्तङ्गो । संस्कृतभाषायामियं गीतिरुच्यते । यदाह । आर्य्या पूर्व्वार्द्धसमं यस्या अपरार्द्धमपि च सङ्गते । छन्दोविदस्तदानीं गीतिंताममृतवाणि भाषन्ते इति । आर्य्यालक्षणन्तु प्रागनुसन्धेयम् । उद्गाथायामपि गाथावद् गणनियमो द्रष्टव्यः । विशेषस्तु परार्द्धे षष्ठगणो लघुवर्णात्मको न स्यात् । पूर्व्वार्द्धे तु मध्यगुरुः सर्व्वलघुचतुष्टयात्मको वा स्यादिति । गाथालक्षणं वक्ष्यते ॥

(८७) राजेति । अवसरोऽवकाशः ॥

(८८) सहसेति । अतर्कितमित्यर्थः । उपसृत्य शकुन्तलामुपगम्य ॥

(८९) तपतीति । हे तनुगात्रि कृशाङ्गि । गात्रान्तस्य शोणाद्युत्तरभावादीप् । मदनस्त्वामनिशं सततं तपति उत्तप्तीकरोति मां पुनरिमं जनं तु दहत्येव भस्मीकरोत्येव । ननूभयत्र समोऽयं रिपुः कथं द्वयोरन्यतरस्मिन् जने पक्षपातं वहतीति दृष्टान्तयति । ग्लपयतीति । तथाहि दिवसो यथा शशाङ्कं चन्द्रमसं ग्लपयति ग्लानिं नयति तथा कुमुद्वतीं कुमुदिनीं न तथा न ग्लपयतीत्यर्थः । अत्र दृष्टान्तोऽलङ्कारः । आर्य्येयं जातिः ॥

(९०) सख्याविति । साअदमित्यादि । स्वागतं यथासमीहितफलस्य अविलम्बिनो मनोरथस्य । मनोरथस्याभिलाषस्य अविलम्बि अविलम्बेनोत्पन्नं यत् यथा समीहितफलं समीहितमभिक्रान्तफलं वाञ्छितानितरफलमिति यावत् तद्रूपस्य भवत स्वागतं सुखेनागतम् । स्वभावोक्तेति भावक्तान्तेन कर्त्तरि षष्ठी ॥

(९१) शकु इति । अभ्युत्थातुं शयनादिति शेषः ॥

राजा ॥ अलमलमायासेन। (९२)

९) सन्दष्टकुसुमशयनान्याशुविमर्दितमृणालवलयानि।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ (९३)

शकु ॥ ससाध्वसमात्मगतम् ॥ हिअअ तथा उत्तम्मिअ दाणिं ण किम्पि पडिवज्जसि। (९४)

अन ॥ इदो सिलादलेक्कदेसं अणुगेह्णदु महाभाओ। (९५)

शकु ॥ किञ्चिदपसरति। (९६)

राजा ॥ उपविश्य ॥ कच्चित् सखी वो नातिबाधते शरीरताप. ।(९७)

प्रिय ॥ सस्मितम् ॥ दाणिं लद्धोसधो उवसमं गमिस्सदि। (९८)

शकु ॥ सलज्जा तिष्ठति। (९९)

प्रिय ॥ महाभाअ दोसुम्पि वो अस्सोस्साणुराओ पच्चक्खो सहीसिणेहो उण मं पुनरुत्तवादिणी करेदि। (१००)

---

(९२) राजेति। वीप्साऽतिनिषेधार्था। आयासेन श्रमेण।

(९३) सन्दष्टेति। सन्दष्टमाच्छादित कुसुमशयनं यैस्तानि तथा आशु शीघ्र अधुनैव विमर्दितानि लुण्ठनोत्कुण्ठनादिभि र्दूषितानि मृणालाना वलयानि यैस्तानि अतएव गुरुर्महान् परितापो येषु तानि तथोक्तानि। गुरु र्महति भान्यपदिति विश्व। ते तव गात्राणि अङ्गानि उपचार सत्कार नार्हन्ति कर्त्तुं मुचितानि न भवन्तीत्यर्थः। गात्रमङ्गे कलेवरे इति विश्व। इयमार्य्या जाति ॥

(९४) शकु इति। ससाध्वस सभयम। हिअअ इत्यादि। हृदय तथा उत्तप्य इदानीं न किमपि प्रतिपद्यसे। उत्तप्य उत्कण्ठित भूत्वा। प्रतिपद्यसे बुध्यसे ॥

(९५) अनेति। इदो इत्यादि। इत शिलातलैकदेशमनुगृह्णातु महाभाग। अनुगृह्णातु उपवेशनेनानुग्रहभाजनीकरु ॥

(९६) शकु इति। सुगमम ॥

(९७) राजेति। शरीरतापो वो युष्माक सखी नातिबाधते नातिपीडयति अर्थान्मन्दता गत कच्चित किमित्यर्थः। कच्चित् कामप्रवेदन इत्यमर। कामप्रवेदन मनोरथाभिव्यक्तिप्रश्न ॥

(९८) प्रियमिति। दाणिमित्यादि। इदानीं लब्धौषध उपशम गमिष्यति। लब्धमौषध यस्य स शरीरताप इति शेष। तथाचान्न तदर्थं व्याकुलभावेनेति भाव ॥

(९९) शकु इति। सुगमम् ॥

(१००) प्रियमिति। महेत्यादि। महाभाग द्वयोरपि युवयोरन्योन्यानुराग प्रत्यक्ष

राजा ॥ भद्रे नैतत् परिहार्यं विरचितं स्तुतमनुतापं जनयति । (१०१)

प्रिय ॥ तेण हि सुणादु अज्जो । (१०२)

राजा ॥ अवहितोऽस्मि । (१०३)

प्रिय ॥ अस्समवासिणो जणस्स रग्णा अत्तिहरेण होदव्वं त्ति णं एसो धम्मो । (१०४)

राजा ॥ अस्मात्पर किन्तत । (१०५)

प्रिय ॥ तेण हि इमं णो पिअसही तुमं ज्जेव उद्दिसिअ भअवदा मअणेण इमं अवत्थन्तरं पाविदा ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बइदुं । (१०६)

---

अयोऽन्ते च पुन मां पुनरुक्तवादिनी करोति। अन्योन्यानुराग परस्परानुराग । परस्परार्थे चान्योन्यमिति शब्दाब्धि । मया च स्पष्टमनुभूयमान । पुनरुक्तवादिनीमधिकवादिनीम । पुनरुक्तशब्दोऽधिकार्थे प्रयुक्त कादम्बर्यामपि यथा यत्र त्वं पितृशशधररोचिषि स्फाटिकशिलातले भुक्त यत्र सङ्क्रान्तचन्दनरसलाञ्छने शुक्लशैलशिलापट्टे सुप्तमसि परि ...न पुनरुक्तं निवेद्यमाना देवस्यैव स्थानचिह्नानि पश्यन्ती क्षपितवती दिवसमिति तथा ...पुण्यमायाम पुनरुक्त निशश्वासेत्यादि। शिशुपालवधेऽपि। नीहारजालमलिन पुनरुक्तसान्द्रा कुर्वन् वधूजनविलोचनपक्ष्ममाला इति ॥

(१०१) राजेति। परिहार्यं निवार्यं म । किं यत्नात् विरचितं वस्तु मिष्टसतुमपाभिहित मनु अनुताप पश्चात्ताप जनयति ॥

(१०२) प्रियमिति। तेण हीत्यादि। तेन हि शृणोत्वार्य्य ॥

(१०३) राजेति। अवहित॰ कृतमनोऽभिनिवेश ॥

(१०४) प्रियमिति । अस्समेत्यादि। आश्रमवासिनो जनस्य राज्ञा आर्त्तिहरेण भवितव्यमिति। नन्वेष धर्म्म । आर्त्तिहरेण पीडाहारिणा। आर्त्ति पीडा धनुष्कोट्योरित्यमर । इति जणोत्तिरस्थय । धर्म्म राज्ञामिति शेष ॥

(१०५) राजेति। ननु अस्मादाश्रमवासिनोऽर्त्तिहरणौचित्यम् । अस्मात्परमस्मद्गोचर किं किमर्थं साध्यत इत्यर्थं ॥

(१०६) प्रियमिति। तेण्णेत्यादि। तेन हि इय न प्रियसखी त्वामेवोद्दिश्य भगवता मदनेन इदमवस्थान्तर प्राविता तदर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बयितुम । तेन राज्ञोऽभिलाषगोचरत्वेन हेतुना अर्हसीत्यन्वय । उद्दिश्य लक्षणीय स्वामिलाभाभिमन्त्राय । अवस्थान्तर नैसर्गिकीतरामवस्थां शोच्यामवस्थां दशामिति यावत् । अभ्युप-

राजा॥ भद्रे साधारणोऽयं प्रणयः सर्व्वथानुगृहीतोऽस्मि। (१०७)

शकु॥ अनसूयामवलोक्य॥ हला णम वो अन्तेउरविरहपज्जुस्सुएण राएसिणा अवरुद्धेण। (१०८)

राजा॥ इदमनन्यपरायणमन्यथा हृदयसन्निहिते हृदयं मम।
यदि समर्थयसे मदिरेक्षणे मदनबाणहतोऽपि हतः पुनः॥(१०९)

अन॥ बहुवल्लहा क्खु राआणो सुणीअन्ति ता जधा इअं णो पिअसही बन्धुअणसोअणीआ ण होदि तधा करिस्सदि। (११०)

राजा॥ भद्रे किं बहुना। (१११)

---

पत्त्रा अनुग्रहेण। अभ्युपपत्तिरनुग्रह इत्यमरः। जीवितमवलम्बयितुं जीवनं संस्थापयितुम्। अन्यथा अचिरेणैवानन्दशासम्भव इति भावः। तथाच स्त्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेति वात्स्यायनः॥

(१०७) राजेति। साधारणः अस्या मम चोभयोः समानः। साधारणः समान इत्यमरः। प्रणयः प्रार्थनम्। सर्व्वथाङ्गीकारे॥

(१०८) शकु इति। हलेत्यादि। अयि अत्र वोऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन। अन्तःपुराणामन्तःपुरिकाणां विरहेण पर्य्युत्सुकेन उत्कण्ठितेन राजर्षिणा उपरुद्धेन ज्ञानोपरोधेन वो युष्माकमत्र मति विशेष्ये बाधे विशेषणमुपसङ्क्रामतीति न्यायादुपरोधो वारणीय इत्यर्थः। अन्तःपुरादिशब्दानां तात्स्थ्यात् तद्दारेष्वपि प्रयोगो बहुधा द्रष्टव्यः॥

(१०९) राजाह इदमिति। हे हृदयसन्निहिते चेतोऽवस्थिते अन्यस्याः परायणमन्यपरायणम्। पुंवत् कर्म्मधारयेति पुंवद्भावः। न तदित्यनन्यपरायणं अनन्याश्रयम्। परायणमभीष्टे स्यात् तत्पराश्रययोरपीति मेदिनी। मम हृदयं यदि अन्यथा अन्यपरायणतया समर्थयसे निश्चिनोषि हे मदिरेक्षणे मदिरे मत्तखञ्जनाविव ईक्षणे नेत्रे यस्याः सा हे तथोक्ते तदा मदनस्य बाणेन हतोऽपि अहं पुनर्हत आगाहत। इदं द्रुतविलम्बितं नाम वृत्तम्॥

(११०) अनेति। बहु इत्यादि। बहुवल्लभाः खलु राजानः श्रूयन्ते तद् यथा इयं नः प्रियसखी बन्धुजनशोचनीया न भवति तथा करिष्यति। बहुवल्लभा बह्व्यो वल्लभाः प्रियाः येषां ते। प्रेयसी दयिता कान्ता प्राणेशा वल्लभा प्रिया। हृदयेशा प्राणसमा प्रेष्ठा प्रणयिनी च सेति हेमचन्द्रः। श्रूयन्ते न कदाचित् दृष्टा इति भावः। बन्धुजनस्य शोचनीया दुःखहेतुर्न भवति सुभगा भवतीत्यर्थः। करिष्यति महाराज इति शेषः॥

(१११) राजेति। बहुना व्याहृतेनेति शेषः॥

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्ररसना चोर्वी सखी च युवयोरियम् ॥ (११२)

उभे ॥ णिव्वुदह्म । (११३)

शकु ॥ हर्षं सूचयति । (११४)

प्रिय ॥ जनान्तिकम् ॥ अणसूए पेक्ख पेक्ख मेहवादाहद विअ गिह्मे मोरी क्खणे क्खणे पच्चाअदजीविद पिअसही । (११५)

शकु ॥ हला मरिसावेध लोअपालं जं अह्मेहिं विस्सद्धपलाविणीहिं उवआरादिक्कमेण भणिदं । (११६)

सख्यौ ॥ सस्मितम् ॥ जेण तं मन्तिदं सो ज्जेव मरिसावेदु अण्णस्स को अच्चओ । (११७)

---

(११२) परीति । परिग्रहाणां पत्नीनां बहुत्वेऽपि अनल्पत्वेऽपि । पत्नीपरिजनादानमूलशापाः परिग्रहा इत्यमरः । समुद्रा एव रसना मेखला यस्याः सा उर्वी पृथ्वी च इयं युवयोः सखी च द्वे नोऽस्माकं कुलस्य प्रतिष्ठे गौरवभूते । स्त्रीकट्यां मेखला काञ्ची सप्तकी रसनापि चेत्यमरः । प्रतिष्ठा गौरवे स्थिताविति मेदिनी ॥

(११३) उभे इति । णिव्वुदह्म निर्वृते स्वः । निर्वृते सुस्थिते । सुस्थितत्वे च निर्वृतिरिति त्रिकाण्डशेषः ॥

(११४) शकु इति । सूचयति ज्ञापयति ॥

(११५) प्रियमिति । अणेत्यादि । अनसूये पश्य पश्य मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्यागतजीवितां प्रियसखीम् । ग्रीष्मे निदाघर्तौ मेघवातो मेघागमानिलस्तेनाहतां हर्षमग्नां मयूरीमिव । एतेन सुरतसुखागमो दर्शितः । क्षणे क्षणे क्रमशः प्रत्यागतजीवितामवलम्बितजीवनां प्रियसखीं शकुन्तलां पश्य पश्य ॥

(११६) शकु इति । हलेत्यादि । सखि मर्षयत लोकपालं यदस्माभिर्विस्रब्धप्रलापिनीभिरुपचारातिक्रमेण भणितम् । विस्रब्धं विश्वासयुक्तं यथा स्यात् तथा प्रलापिनीभिरिति यावत् प्रलापिनीभिः वादिनीभिरस्माभिरुपचारातिक्रमेण सभ्यतालङ्कारेण यदभिहितमुक्तं लोकपालं राजानं तन्मर्षयत क्षमयतम् ॥

(११७) सख्याविति । जेणेत्यादि । येन तन्मन्त्रितं स एव तन्मर्षयतु अन्यस्य कोऽत्ययः । मन्त्रितमुक्तम् । स जनः । अत्ययो दोषः । अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽपीत्यमरः ॥

शकु॥ अरिहदि क्खु महाराओ इमं विसोढुं परोक्खं वा ण कि को मन्तेदि। (११८)

राजा॥ सस्मितम्। (११९)

अपराधमिमं ततः सहिष्ये यदि रम्भोरु तवाङ्गसङ्गसृष्टे।

कुसुमास्तरणे क्लमापहेऽत्र स्वजनत्वादनुमन्यसेऽवकाशम्॥ (१२०)

प्रिय॥ सोपहासम्॥ णं एत्तिकेण दाव तुट्ठो भविस्सदि। (१२१)

शकु॥ सरोषमिव॥ विरम विरम दुव्विणीदे एदावत्थं गदाए मए कीलसि। (१२२)

अन॥ बहिर्दृष्टिक्षेपम्॥ पिअम्वदे एस तवस्सिमिअपोदओ

---

(११८) शकु इति। अरीत्यादि। अर्हति खलु महाराज इदं विसोढुं परोक्षं वा न किं को मन्त्रयति। खलु इत्यनये। निषेधवाक्यालङ्कारजिज्ञासानुनये खल्वित्यमरः। को वा जनः परोक्षममन्त्रं किं न मन्त्रयति व्याहरति॥

(११९) राजेति। सुगमम्॥

(१२०) अपरेति। रम्भे इव ऊरू यस्याः सा रम्भोरूः। वामनमते तु प्रथमासाहस्रियामूपः। हे रम्भोरु यदि तव अङ्गाना सङ्गेन सम्पर्केण सृष्टे युक्ते क्लमापहे तापापहारिणि अत्र कुसुमास्तरणे कुसुमशयने स्वजनत्वात् आत्मीयत्वादवकाशमवस्थानो चितस्थानमनुमन्यसे अनुजानासि ततोऽपराधमिमं सहिष्ये क्षमिष्ये। वृत्तमेतदुपवृत्तं नाम। तदुक्तम्। उपवृत्तमिदं तदाऽपरार्द्धेन् गुरुवर्णं खलु सुन्दरीपदान्ते इति। सुन्दरीलक्षणमुक्तम्। उपवृत्तमौपच्छन्दसिकम्। अतएव सुन्दरीं वैतालीयेष्वन्तर्भावयता पिङ्गलाचार्येण न औपच्छन्दसिकमिति वैतालीयप्रकरणे सूत्रित व्याख्यातञ्च तत्वृत्तिकृता छन्दोबोधेन यस्मिन् वैतालीये छन्दसि अन्ते गकारश्चेदधिको भवति तदौपच्छन्दसिकं नाम छन्द इति। गकारो गुरुवर्णः॥

(१२१) प्रियमिति। सोपहास सपरिहासम्। णमिति। नन्वेतावन्मात्रेण पुनस्तुष्टो भविष्यति। ननु प्रश्ने। एतावन्मात्रेण शय्यायामवकाशदानमात्रेण। भविष्यति भवानिति शेषः॥

(१२२) शकु इति। सरोषमिव कृतकनकरोषम्। विरमेति। विरम विरम दुर्विनीते एतावदवस्थां गतया मया क्रीडसि। विरम अपसर। व्याङ्परिभ्य रम इत्युपपादानात् परस्मैपदम्। दुर्विनीते दुःशिक्षिते। एतावदवस्था एतावन्तं कालव्यापिनं विषमं दौर्बल्यमिति यावत्। विषमं कामिकोऽवस्थेत्यमरः॥

इदोगदो दिग्घदिट्टी णूणं मादरं पब्भट्टं अण्णेसदि ता संजोजेमि णं। (१२३)

प्रिय॥ हला चवलो क्खु एसो ण णं संजोजइदुं एआइणी पारेसि ता अहम्मि सहाअत्तणं करिस्सं॥ इत्युभे प्रस्थिते। (१२४)

शकु॥ हला इदो गमिदो ण वो गन्तुं अणुमणे जदो असहाइणी ह्मि। (१२५)

उभे॥ सस्मितम्॥ तुमं दाव असहाइणी जाए पुहवीणाहो समीवे वट्टदि॥ इति निष्क्रान्ते। (१२६)

शकु॥ कधं गदाओ ज्जेव पिअसहीओ। (१२७)

राजा॥ सुन्दरि, अलमावेगेन नन्वयमाराधयिता जनस्ते सखीभूमौ वर्तते। तदुच्यताम्। (१२८)

---

(१२३) अनतेति। यष्टि सदृशिर्च्चेप यष्टि ईषिपातसहितम्। पिअमिति। प्रियवदे एष तपस्विमृगपोतक इतस्ततो दत्तदृष्टि नूनं मातरं प्रभ्रष्टामन्विष्यति तत् संयोजयाम्येनम्। तपस्वी अनुकम्पार्हश्चासौ मृगपोतको मृगशिशुश्चेति तपस्विमृगपोतकः। तपस्वी तापसे चानुकम्पार्हे चेति, पोतः शिशौ वहित्रे चेति च विश्वः। प्रभ्रष्टां दिगन्तरगताम्। संयोजयामि मात्रेति शेषः। अत्र पर्यायोक्तमलङ्कारः। यदुक्तं शोदाहरणं दण्डिना। अर्थमिष्टमनाख्याय साक्षात् तस्यैव सिद्धये। यत् प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते। दशत्यसौ परभृतः सहकारस्य मञ्जरीम्। तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम्। सङ्गमय्य सखीं यूना सङ्केतं तद्गतोत्सवम्। निर्वर्त्तयितुमिच्छन्त्या कयाप्यपसृतं तत इति॥

(१२४) प्रियमिति। हलेत्यादि। अयि चपलः खल्वेष नैनं संयोजयितुमेकाकिनी पारयसि तदहमपि सहायत्वं करिष्यामि। चपलश्चञ्चलः। एष मृगपोतकः। पारयसि शक्नोषि। प्रस्थिते चलिते गते॥

(१२५) शकु इति। हलेत्यादि। अयि इतो न वोऽन्यतो गन्तुमनुमन्ये यतोऽसहायिन्यस्मि। अनुमन्ये अनुजानामि। सहायो यस्या अस्तीति सहायिनी न सा इत्यसहायिनी एकाकिनीति यावत्॥

(१२६) उभे इति। तुममित्यादि। त्वं तावदसहायिनी यस्याः पृथिवीनाथः समीपे वर्त्तते। पृथिवीनाथ इत्यनेन महासहायता दर्शिता॥

(१२७) शकु इति। कधमित्यादि। कथं गते एव प्रियसख्यौ। सुगमम्॥

(१२८) राजेति। आवेगेन त्वरया। आवेगो वेगे त्वरायां चेति शब्दार्णवे।

किं शीकरैः क्लमविमर्दिभिरार्द्रवातं सञ्चालयामि नलिनीदलतालवृन्तम्।
अङ्के निधाय चरणावुत पद्मताम्रौ संवाहयामि करभोरु यथासुखं ते॥ (१२८)

शकु॥ ण माणणीएसुं जणेसुं अत्ताणं अवराहइस्सं॥ इति अवस्था सदृशमुत्थाय प्रस्थातुमिच्छति। (१३०)

राजा॥ अवष्टभ्य॥ सुन्दरि अपरिनिर्व्वाणो दिवस इयञ्च ते शरीरावस्था। (१३१)

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम्।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः॥ (१३२)

इति बलान्निवारयति। (१३३)

---

आराधयिता तोषयिता। आराधनं साधने स्यादवाप्तौ तोषणेऽपि चेत्यमरः। सखीभूमौ सखीपदे॥

(१२८) किमिति। हे करभोरु क्लमं शरीरग्लानिं तापमिति यावत् विमर्दयितुं विहन्तुं शीलं येषां ते तैः शीकरैरम्बुकणैरार्द्रं शीतलो वातो यस्य तत् तथोक्तं नलिन्याः पद्मलतायाः दलं पत्रमेव तालवृन्तं व्यजनं किं सञ्चालयामि दोलयामि। व्यजनं तालवृन्तकमित्यमरः। उत अथवा। उताप्यर्थविकल्पयोरित्यमरः। पद्मे इव ताम्रौ अरुणौ। ताम्रं शुल्वेऽरुणेऽपि चेति त्रिकाण्डशेषः। ते तव चरणौ अङ्के उत्सङ्गे। उत्सङ्गचिह्नयोरङ्क इत्यमरः। निधाय निवेश्य यथासुखं सुखमनतिक्रम्य येन सुखं स्यात् तथेति भावः। संवाहयामि मर्द्दयामि। इत्येवमुच्यतामिति पूर्वेणान्वयः। संवाहनं वाहने स्यात् भारादेरङ्गमर्दने इति विश्वः। वसन्ततिलकं नाम वृत्तम्॥

(१३०) शकु इति। णेत्यादि। न माननीयेषु जनेष्वात्मानमपराधयिष्यामि। माननीयेषु पूज्येषु। अपराधयिष्यामि सेवनादेशादिति भावः। अवस्थासदृशं दौर्ब्बल्यात् कृच्छ्रं कष्टम्ऽन्तीति भावः॥

(१३१) राजेति। अवष्टभ्य अभिरुध्य। अवात् स्तम्भेराश्रयनिकटयोरिति वक्तव्यात् षत्वम्। अपरिनिर्व्वाणः सर्व्वतोभावेन न निवृत्ततापः। शरीरावस्था देहस्य दाहाभिभूतता॥

(१३२) उत्सृज्येति। नलिनीदलेन पद्मिनीपत्रेण कल्पितं रचितं स्तनयोरावरणं सिचयो यस्याः सा त्वं कुसुमशयनं पुष्पमयीं शय्यामुत्सृज्य विमुच्य परिबाधया पीडया चैतन्येनेति यावत्। कोमलैः मार्द्दवं गतैः अङ्गैः करणैः कथमातपे गमिष्यसि। इयमार्य्या॥

-- (१३३) इतीति। इति एवमुक्त्वा। निवारयति शकुन्तलामिति शेषः॥

शकु॥ मुञ्च मुञ्च मं ण क्खु अत्तणो पहवामि अधवा सहीमेत्त-सरणा किं दाणिं एत्थ करिस्सं । (१३४)

राजा॥ धिग् व्रीडितोऽस्मि । (१३५)

शकु॥ ण क्खु अहं महाराअं भणामि देव्वं उवालहामि (१३६)

राजा॥ अनुकूलकारि दैवं कथमुपालभ्यते । (१३७)

शकु॥ कधं दाणिं ण उवालहिस्सं जं मं अत्तणो अणीसं कदुअ परगुणेहिं लोहावेदि । (१३८)

राजा॥ स्वगतम्॥ (१३९)

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः
काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने ।
आबाधन्ते न खलु मदनेनैव लब्धान्तरत्वा-
दाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः ॥ (१४०)

---

(१३४) शकु इति । मुञ्चेत्यादि । मुञ्च मुञ्च मां न खल्वात्मनः प्रभवामि अथवा सखीमात्रशरणा किमिदानीमत्र करिष्यामि । आत्मनः प्रभवामि प्रभुर्भवामि । ङे च पीतप्रभौ कर्मणि षष्ठी । साक्षेपमाह अथवेति । इदानीं सखीमात्रं शरणं रक्षितृ यस्याः साहं अत्र भवतो बलात्कारे विषये किं करिष्यामि । नान्य कोऽपि शरणभूतोऽस्ति यत समाक्रन्दामीति भाव ॥

(१३५) राजेति । धिगित्यात्मनिन्दायाम् । व्रीडितो लज्जायानस्मि । यतोऽनया कन्याहरणदोषेणोपालभ्ये इति भाव । व्रीडङ्जि त्विषि लज्जे इति कविकल्पद्रुम । व्रीडात् वर्त्तमाने क्त ॥

(१३६) शकु इति । णेत्यादि । न खल्वहं महाराज भणामि दैवमुपालभे । खलु त्वनुनये । उपालभे निन्दामि । तथा च एव योजयिष्यता दैवेन कथमहं परतन्त्री कृतेति पूर्वाभिप्राय ॥

(१३७) राजेति । अनुकूलकारि अभिमतार्थसाधि ॥

(१३८) शकु इति । कधमित्यादि । कथमिदानीं नोपालप्स्ये यन्मामात्मनोऽनीशां कृत्वा परगुणैः लोभयति । उपालप्स्ये दैवमिति शेष । यत् दैव । आत्मनोऽनीशाम-स्वतन्त्राम् । लोभयति प्रलोभयति ॥

(१३९) राजेति । स्वगतमनतिस्पष्टम् ॥

(१४०) अपीति । महति प्रवर्त्तति औत्सुक्ये इत्यादौ योगेऽपि । इत्यादौऽप्यत

शकु॥ गच्छत्येव। (१४१)



राजा॥ न कथमात्मनः प्रियं करिष्ये॥ उपसृत्य पटान्तमवलम्बते। (१४२)

शकु॥ पोरव रक्ख रक्ख विणअं, इदोतदो इसिओ सञ्चरन्ति।(१४३)

राजा॥ सुन्दरि अलं गुरुजनाद् भयेन न ते विदितधर्मा तत्रभवान् कण्वः खेदमुपयास्यति। यतः। (१४४)

गान्धर्व्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः॥ (१४५)

---

त्सुक इत्यमरः। दयितस्य प्रियस्य। दयितं वल्लभं प्रियमित्यमरः। मार्थनास्तु क्रिया-विशेषणमिति भावः। प्रतीपा पराङ्मुख्यः। प्रतीपोऽन्यः पराङ्मुखे इति शब्दाब्धिः। तथा व्यतिकरेण व्यतिषङ्गेण अन्योन्यसंयोगेनेति यावत्। यत्र सुखं तत् काङ्क्षन्त्योऽभिलषन्त्योऽपि। व्यतिकरः समाख्यातो व्यसनव्यतिषङ्गयोरिति विश्वः। स्वाङ्गदाने निजावयवार्पणे कातरा भयाकुलाः। अधीरे कातर इत्यमरः। कुमार्य्योऽपरिणीताः सम्पर्कालब्धान्तरत्वात् लब्धावसरत्वात् न खलु न केवलं मदनेनैव व्याबाध्यन्ते पीड्यन्ते चिरं समुपस्थितोऽपि परित्यक्तः कालो मदनस्य कृतार्थतासमयो याभिस्तास्तयोक्ताः अत्यो मनसि जायत इति मनसिजः। विभक्तेरलुक्। तं मदनमपि व्याबाधन्ते पीडयन्ति। अत्र पराङ्गे उभयोः परस्परं प्रति बाधनरूपैकक्रियाकारणत्वादन्योन्यालङ्कारः। यदुक्तं दर्पणे। अन्योन्यमुभयोरेकक्रियायाः कारणं मिथ इति। इदं मन्दाक्रान्ता नाम वृत्तम्॥

(१४१) शकु इति। एवकारेण गतेरबाधितत्वं प्रत्येतव्यम्॥

(१४२) राजेति। सुखं मे भूयात् दुःखं मे मा भूदिति स्वार्थिके द्वयोरेव क्रियारम्भकत्वादाह कथमिति। प्रियं कर्म्मेति शेषः। पटान्तं वस्त्राञ्चलम्। पटश्चित्र-पटे वस्त्रे इति मेदिनी। अवलम्बते स्पृशति॥

(१४३) शकु इति। पोरवेत्यादि। पौरव रक्ष रक्ष विनयं, इतस्ततः ऋषयः सञ्चरन्ति। विनयं सौजन्यम्। सञ्चरन्ति भ्रमन्ति। समस्तृतीया इति तृतीयानिर्देशादात्मनेपदम्। यदि कोऽपि पश्येत्तत्प्रत्यक्षो गुरवे निवेदयेदिति भावः॥

(१४४) राजेति। गुरुजनात् पितुः। ते तव पितृत्वसम्बन्धी कण्व इत्यन्वयः। विदिता ज्ञायमाना धर्म्मा आचारा येन स विदितधर्म्मा आचारज्ञ इत्यर्थः। धर्म्मा पुण्यसमन्यायस्वभावाचारसोमपा इत्यमरः। धर्म्मादनिच्केवलात्। खेदमुपतापम्। ननु कथमयमसदाचारोऽपि चालव्यो गुरुणेत्यत आचारस्य साधिष्ठता साधयितुमाह यत इति॥

(१४५) गान्धर्व्वेणेति। बह्व्योऽनेकाः मुनिकन्यकास्तापसकुमार्य्यो गान्धर्व्वेण अन्योन्यसमयपूर्व्वकेण विवाहेन। गान्धर्व्वः समयान्मिथ इति याज्ञवल्क्यः परिणीता

दिशोऽवलोक्य ॥ कथं प्रकाशं निर्गतोऽस्मि ॥ शकुन्तला छित्वा पुनस्तत्रैव पदे निवर्त्तते । (१४६)

शकु ॥ पदान्तरे प्रतिनिवृत्य साङ्गभङ्गम् ॥ पोरव अणिच्छापूरओवि सम्भा-सणमेत्तपरिचिदो अअं जणो ण विसुमरिदव्वो । (१४७)

राजा ॥ सुन्दरि । (१४८)

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिवावसाने छायेव पुरो मूलं वनस्पतेः ॥ (१४९)

शकु ॥ स्तोकमन्तरं गत्वा आत्मगतम् ॥ हद्धी हद्धी इमं सुणिअ ण मे चलणा पुरोमुहा पसरन्ति भोदु इमेहिं पज्जन्तकुरुवएहिं ओवारिद-सरीरा भविअ पेक्खिस्सं दाव से भावाणुबन्धं ॥ तथा कृत्वा स्थिता । (१५०)

---

ऊढा । अथानन्तरं ता पितृभि र्गुरुजनैरनुमोदिता अभिनन्दिताश्च भूयन्त इतिहास-कथासुश्रूयन्त इति शेषः ॥

(१४६) दिश इति । दिशोऽवलोक्य इतस्ततो दृष्ट्वा । प्रकाशं लतागृहाद् बहिः-प्रदेशम् । अनधिकारभयोऽयम् । छित्वा त्यक्त्वा । छाको छिरिति छि । पदे पदन्यासे । निवर्त्तते लतागृहं निविशते ॥

(१४७) शकु इति । पदान्तरे अन्यस्मिन् चरणन्यासे ततुसमय इति यावत् । प्रतिनिवृत्य परिहृत्य निवृत्य । साङ्गभङ्गमङ्गानां कौटिल्येन सहितम् । पोरवेति । पौरव अनिच्छापूरकोऽपि सम्भाषणमात्रपरिचितोऽयं जनो न विस्मर्त्तव्यः । अनिच्छापूरकोऽपि अभीप्सितमनोरथोऽपि । सम्भाषणेति । सम्भाषणमात्रे णालापमात्रेण परिचितो विदित । न विस्मर्त्तव्य स्मर्त्तव्य ॥

(१४८) राजेति । सुन्दरीति सम्बोधनं श्लोकोक्तवाक्यान्वितम् ॥

(१४९) त्वमिति । दिवावसाने अपराह्णे पुरोऽग्रतो दूरमपि गच्छन्ती वनस्पते र्वटादिवृक्षस्य छाया मूलं मूलप्रदेशमिव पुरो दूरमपि गच्छन्ती त्वं मे मम हृदयं मनो न जहासि त्यजसि । मनसि स्थिरतयैव वससीति भाव । उपमालङ्कार ॥

(१५०) शकु इति । स्तोकमल्पम् । स्तोकाल्पक्षुल्लका इत्यमर । अन्तरमवधि । अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये इत्यमर । हद्धीत्यादि । हा धिक् हा धिक् इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरत । भवतु एभि पर्य्यन्तकुरुवकैरपवारितशरीरा भूत्वा प्रेक्षिष्ये तावदस्य भावानुबन्धम् । पुरोमुखौ अग्राभिमुखौ । पर्य्यन्तकुरुवकैः प्रान्तस्थै कुरबकैः अपवारितशरीरा अन्तर्हितशरीरा । अन्तर्द्धिरपवारणमित्यमरः ।

राजा॥ कथमेवं प्रिये अनुरागैकरसं मामुत्सृज्यात्र निरपेक्षैव गतासि। (१५१)

२९ अनिर्द्दयोपभोगस्य रूपस्य मृदुनः कथम्।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम्॥ (१५२)

शकु॥ एदं सुणिअ ण मे अत्थि विहवो गच्छिदुं। (१५३)

राजा॥ सम्प्रति प्रियाशून्ये किमस्मिन् लतामण्डपे करोमि। (१५४)

अपतोऽवलोक्य॥ हन्त व्याहतं मे गमनम्। (१५५)

३० मणिबन्धाद् गलितमिदं सक्रान्तोशीरपरिमलं तस्याः।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः॥ (१५६)

---

भावानुबन्धः भावस्याभिप्रायस्य अनुबन्धमविच्छिन्नप्रवृत्तिमिति यावत्। भाव सत्तास्वभावाभि-प्रायचेष्टात्मजन्मस्विति दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादिम् नश्वरे। तस्यानुयायिनि शिशौ मुख्यानुवर्त्तने इति चामरः॥

(१५१) राजेति। अनुरागैकरसं अनुरागो रतिरेव एकः केवलो रसो रसता गतो यस्य तम्। शृङ्गारमात्ररसाविष्टमिति यावत्। तदुक्तं। विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा। रसतामेति रत्यादिः स्थायी भावः सचेतसामिति। तथा। पुंसः स्त्रियां स्त्रियाः पुंसि संयोगं प्रति या स्पृहा। स शृङ्गार इति ख्यातो रतिक्रीडादिकारणमिति। उत्सृज्य त्यक्त्वा। निरपेक्षा निःस्पृहा। अपपूर्व्वस्य ईक्षतेराकाङ्क्षार्थत्वात्॥

(१५२) अनिर्द्दयेति। अनिर्द्दयोपभोगस्य अजातगाढालिङ्गनादिव्यापारस्य अतएव मृदुनः कोमलस्य ते तव रूपस्य आकारस्य। रूपं स्वभावे सौन्दर्य्ये नाणके पशुशब्दयोः। ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपीति विश्वः। चेतः खलु केवलं हृदयं मृदुनः शिरीषस्य ततपुष्पस्य बन्धनं वृन्तमिव कठिनम्। अत्रोपमालङ्कारः॥

(१५३) शकु इति। एदमित्यादि। इदं श्रुत्वा न मेऽस्ति विभवो गन्तुम्। विभवः शक्तिः॥

(१५४) राजेति। सम्प्रति इदानीम्। एतर्हि सम्प्रतीदानीमित्यमरः। लता-मण्डपे लतागृहे॥

(१५५) अपत इति। मृणालवलयमवलोक्य हर्षादाह हन्तेति। व्याहतं प्रतिबद्धम्॥

(१५६) गमनव्याघातकं दर्शयति मणीति। मणिबन्धात् पाणिप्रकोष्ठयोः सन्धि-स्थानात् गलितं परिभ्रष्टम् इदं दृश्यमानं सक्रान्तं सम्पर्कवशात् सङ्गतं उशीरस्य

राजा ॥ दृष्ट्वा सहर्षम् ॥ अये जीवितेश्वरी मे प्राप्ता परिदेवनानन्तरं प्रसादेनोपकर्त्तव्योऽस्मि खलु दैवस्य । (१६२)

पिपासाक्षामकण्ठेन याचितञ्चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥ (१६३)

शकु ॥ राज्ञः सम्मुखे स्थित्वा ॥ अज्ज अद्धपधे सुमरिअ एदस्स हत्थब्भंसिणो मिणालवलअस्स कदे पडिणिवुत्तह्मि कधिदं मे हिअएण तए गहिदं त्ति ता णिक्खिव एदं मा मं अत्ताणञ्च मुणिअणेसु पआसइस्सादि । (१६४)

---

(१६२) राजेति । अये सम्भ्रमे । जीवितेश्वरी प्रेयसी । परिदेवनानन्तरं सत्वरं विलापावसाने । विलापः परिदेवनमित्यमरः । दैवस्य विधेः । दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिरित्यमरः । प्रसादेन प्रसन्नतया उपकर्त्तव्य उपकाराहोऽस्मि । खलु- जिज्ञासायां किमित्यर्थे । अनधिकारप्रश्नोऽयम् । शकुन्तलागम एव दैवस्य प्रसाद इति भङ्ग्या प्रकटितम् ॥

(१६३) पिपासेति । पिपासया क्षामो दुर्बलः उच्चैःशब्दाक्षम इति यावत् कण्ठो यस्य स तथोक्तस्तेन पक्षिणा चातकेन च अम्बु तोयं याचितं नवमेघेन उज्झिता सृष्टा धारा आसारश्च अस्य पक्षिणो मुखे निपतिता । द्वौ चकारौ क्रिययोरव्यवहितपौर्वापर्यं बोधयतः । अत्र कातरस्वरचातकरुतानन्तरमेव नवमेघोज्झितधारापातेनाप्रस्तुतसुसदृशेनार्थेन विलापानन्तरमेव शकुन्तलागमरूपप्रस्तुतसमानार्थस्य गम्यत्वादप्रस्तुतप्रशंसाख्योऽलङ्कारः । यदुक्तं दर्पणे । क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः । कार्य्यान्निमित्तं कार्य्यं च हेतोरथ समात्समम् । अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः । अप्रस्तुतप्रशंसा स्यादिति ॥

(१६४) शकु इति । स्थित्वा गत्वा व्यवस्थिता । अज्जेत्यादि । आर्य्य अर्द्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते प्रतिनिवृत्तास्मि, कथितं मे हृदयेन त्वया गृहीतमिति, तन्निक्षिपेदं , मा मामात्मानञ्च मुनिजनेषु प्रकाशयिष्यसि । अर्द्धं पन्था इत्यर्द्धं पथस्तस्मिन् अर्द्धपथे । पच्यमर से ह्रस्वमत्र । स्मृत्वा गताग्रहे मृणालवलयभ्रंशमिति शेषः । कृते अर्थे । अर्थे कृतेऽव्ययं तादर्थ्ये वर्त्तते इत्यमिति कोषसार । प्रतिनिवृत्ता प्रत्यागता । प्रथमं निक्षिपेत्युक्तौ केनाभिहितासि यदहमेवापहृतोऽस्मीति राज्ञ प्रश्नसम्भावनामवधार्य्याह कथितमिति । तत् तस्मात् । इदं मृणालवलयम् । मामात्मानञ्च मुनिजनेषु मा प्रकाशयिष्यसि । तथाच विलम्बादेन मुनिजनेषु विदितवृत्तान्ताऽहं प्रकाशं स्यादिति भावः ॥

राजा ॥ सहर्षमात्मगतम् ॥ इदानीमस्मि विश्वसितः भर्त्तुराभाषणपदमेतत्। (१७३)

प्रकाशम् ॥ सुन्दरि नातिश्लिष्टः सन्धिरस्य मृणालवलयस्य यदि तेऽभिमतं तदन्यथा घटयिष्यामि। (१७४)

शकु ॥ स्मितं कृत्वा ॥ जधा दे रोअदि। (१७५)

राजा ॥ सव्याजं विलम्ब्य प्रतिमोच्य ॥ सुन्दरि दृश्यताम्। (१७६)

अयं स ते श्यामलतामनोहरं विशेषशोभार्थमिवोज्झिताम्बरः।
मृणालरूपेण नवो निशाकरः करं समेत्योभयकोटिमाश्रितः॥(१७७)

शकु ॥ ण दाव णं पेक्खामि पवणकम्पिदकण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठी। (१७८)

---

(१७३) राजेति। आत्मगतमनतिप्रकाशम्। विश्वसितो जातविश्वासः। एतत् आर्य्यपुत्त्रेति। भर्त्तुराभाषणपदं भर्त्तरि प्रयोगार्हपदम्। तदाह भरतः। आर्य्यपुत्त्रेति सम्बोध्यः पतिः पत्नीजनेन चेति॥

(१७४) प्रकाशमिति। विस्पष्टमित्यर्थः। नातिश्लिष्टः न सम्यक् श्लेषं गतः न सुष्ठु मिलित इति यावत्। सन्धिरुभयकोटियोगः। अभिमतं सम्मतम्। तत् तदा। अन्यथा घटयिष्यामि पृथग्विधं सन्धास्यामि॥

(१७५) शकु इति। जधेत्यादि। यथा ते रोचते। यथा यत्प्रकारं ते तुभ्यं रोचते प्रीतिमुत्पादयति। तथा क्रियतामिति शेषः॥

(१७६) राजेति। सव्याजं अन्यथासन्धानकपटेन सहितं विलम्ब्य कालं गमयित्वा। प्रतिमोच्य परिधाप्य। वलयमिति शेषः। दृश्यतामित्यस्य श्लोकोक्तेनान्वयः॥

(१७७) अयमिति। अयं स प्रसिद्धो नवः कलामात्रो निशाकरश्चन्द्रमा उज्झिताम्बरो मुक्ताकाशवासः सन्। एतेन मुक्तवस्त्रत्वमपि ध्वन्यते। अम्बरं व्योम्नि वाससीत्यमरः। विशेषशोभार्थं शोभातिरेकार्थमिव श्यामलतया नीलिम्ना मनोहरं चित्तोन्मादकम्। एतेन गगणसादृश्यमपि दर्शितम्। तव करं मृणालरूपेण समेत्य समागत्य उभयकोटिं अग्रद्वयमाश्रितः। कुण्डलीभूय दृढं धृतवानिति भावः। कोटिरस्त्री प्रकर्षे चेति धरणिः। चन्द्रस्याशक्यत्वेनमपि कुण्डलीभूतकलामात्रमिन्दुं सुधाम्नः मौढ्यात् सम्भाव्य तदात्मतया उपमेयस्य मृणालवलयस्य सम्भावनादुत्प्रेक्षालङ्कारः। यदुक्तं दर्पणे। भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति। वंशस्थविलं वृत्तम्॥

(१७८) शकु इति। णेत्यादि। न तावदेनं प्रेक्षे पवनकम्पितकर्णोत्पलरेणुना।

राजा ॥ सस्मितम् ॥ यद्यनुमन्यसे तदहमेनां वदनमारुतेन विशदां करवाणि । (१७९)

शकु ॥ तदो अणुकम्पिदा भवेअं किन्तु उण अहं ण दे वीससेमि । (१८०)

राजा ॥ मा मैवं नवो हि परिजनः सेव्यानामादेशात् परं न वर्त्तते । (१८१)

शकु ॥ अअं ज्जेव अच्चाआरो अविस्सासजणओ । (१८२)

राजा ॥ स्वगतम् ॥ नाहमेवं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये ॥ मुखमुन्नमयितुं प्रवृत्तः । (१८३)

शकु ॥ प्रतिषेधं रूपयन्ती विरमति । (१८४)

---

कलुषीकृता मे दृष्टिः । एत कुवलयादिनिशाकरम् । न प्रेक्षे न पश्यामि । कुत इत्यत आह पवनेनेति । पवनेन कम्पितयोः स्पन्दितयोः कर्णोत्पलयोरवतंसभूतयोः कमलयोः रेणुना रजसा दृष्टिः लोचनं कलुषीकृता अप्रसादीकृता ॥

(१७९) राजेति । अनुमन्यसे अनुजानासि । तत् तस्मात् । एनां दृष्टिम् । वदनमारुतेन फूत्कारेण । विशदां निर्मलाम् । विशदो धवले पुमान् । तद्युक्ते त्रिषु वाच्यवदिति शब्दाब्धिः । यद्वा विशदां व्यक्ताम् । विशदः पाण्डुरे व्यक्ते इति मेदिनी-लिकाण्डशेषौ । करवाणीति प्रार्थनायां लोट् ॥

(१८०) शकु इति । तदो इत्यादि । तदानुकम्पिता भवेयम् । किन्तु पुनरहं न ते विश्वसिमि । अनुकम्पिता करुणया लालिता । भवेयमिति भव्ये सा॰ कल्हेतोरिति कर-क्रियायां णी । ते इति सम्बन्धमात्रविवक्षायां षष्ठी ॥

(१८१) राजेति । मा मैवं एवं मा वद मा वदेत्यर्थः । हि यस्मात् नवोऽचिरोप-गतः परिजनः परिचारको जनः सेव्यानामुपासनीयानाम् आदेशात् परम् आदेशातिरिक्तं व्यापारं न वर्त्तते न तत्र रमते । परमिति भावप्रधानं देशाध्वकालभावविधि कर्मत्वम् ॥

(१८२) शकु इति । अअमित्यादि । अयमेवात्यादरो अविश्वासजनकः । अत्याचारः आदरातिशयः ॥

(१८३) राजेति । रमणीयं दुर्लभम् । आत्मनः सेवावसरं सेवायै अवकाशो-ऽवकाशम् । शिथिलयिष्ये उपेक्षिष्ये । उन्नमयितुमुत्तोलयितुम् ॥

(१८४) शकु इति । प्रतिषेधं निषेधं रूपयन्ती क्रियया दर्शयन्ती विरमति निवर्त्तते ॥

राजा॥ अयि मदिरेक्षणे अलमलङ्घ्यविनयाशङ्कया। (१८५)

शकु॥ किञ्चिद्‌ दृष्ट्वा व्रीडावनतमुखी तिष्ठति। (१८६)

राजा॥ अङ्गुलिभ्यां मुखमुन्नमय्य आत्मगतम्। (१८७)

चारुणा स्फुरितेनायमपरिक्षतकोमल।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः॥ (१८८)

शकु॥ परिम्लाणमन्थरो विअ अज्जउत्तो। (१८९)

राजा॥ कर्णोत्पलसन्निकर्षाद्रोचनमूढोऽस्मि॥ मुखमारुतेन चक्षु सेवते। (१९०)

शकु॥ भोदु पढुहिदसणम्हि संवुत्ता। लज्जेमि उण अणुव-आरिणो पिअआरिणो अज्जउत्तस्स। (१९१)

---

(१८५) राजेति। मदिरेक्षणे खञ्जनलोचने। अलम् व्यसत। पश्चभ्या वधु वचनान्त पदम्। अविनयस्य असभ्यतया आशङ्कया त्रासेन अलम्॥

(१८६) शकु इति। किञ्चिद्‌ दृष्ट्वा ईषत् प्रेक्ष्य। किञ्चिदीपल्लनामलो इत्यमर। व्रीडया लज्जया अवनत नम्र मुख यस्या सा तथोक्ता। स्वाङ्गचादीप्॥

(१८७) राजेति। अङ्गुलिभ्यां अङ्गुष्ठमध्यमाभ्याम्। उन्नमय्य उत्तोल्य। आत्मगतमिति स्वगतम्। अश्रोतव्य इति अरेय॥

(१८८) चारुणेति। अपरिक्षतेन दशनक्षताभावेन कोमल सुकुमार इत्यर्थ। प्रियाया अधर ओष्ठ चारुणा मनोहारिणा स्फुरितेन स्फुरणेन द्वारेण पिपासत पातुमिच्छत अधरमिति शेष। मम मह्यं अनुज्ञामनुमति ददातीव। भावे क्त। उत्प्रेक्षालङ्कार॥

(१८९) शकु इति। परीम्लाण। परिम्लानमन्थर इवार्य्यपुत्र। परिम्लान खलु प्रविष्टकर्णोत्पलरेणो सम्यगवोध तत मन्थरो मन्द अक्षम इति यावत। मन्थर कोषफलको बोधमन्थानयो पुमान्। कुसुमास्तरा न हयो मन्दे स्वच्छो वक्रेऽभिधेयवल्लिङ्गिति मेदिनी। कर्णोत्पलरेणुना नेत्रगतान् सम्यगनुभवितु नार्हतीति भाव॥

(१९०) राजेति। कर्णोत्पलस्य मालकर्णवत् मासीयात् ईक्षणमूढो दर्शनाक्षम। रेणु निरस्ताकरणादिति भाव। मुखमारुतेन फुत्कारेण॥

(१९१) शकु इति। भोदित्यादि। भवतु प्रकृतिस्थदर्शनास्मि संवृत्ता। लज्जे पुनरनुपकारिणी प्रियकारिण आर्य्यपुत्रस्य। भवतु अस्तु उत्तमन्थेन फुत्कारेणेति भाव। भवतिरत्यासतिसमानार्थ। प्रकृतिस्थदर्शना स्वाभाविकदर्शना। पुनरर्थ। हेम किन्तु प्रियकारिणोऽभिमतार्थसाधिन आर्य्यपुत्रस्य अनुपकारिणी अपि लज्जे लिज्जेमि। कस्मीषेक्षेत व्रीडे इति कविकल्पद्रुम। आपृच्छवोरिति पस्मै द। सुधुभिरिति द्स च॥

राजा ॥ सुन्दरि किमन्यत्। (१८२)

इदमपुरपकृतिपक्षे सुरभि मुखं ते यदाघ्रातम्।
ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण ॥ (१८३)

शकु ॥ सस्मितम् ॥ असन्तोसे उण किं करेदि। (१८४)

राजा ॥ इदम् ॥ इति व्यवसितः। (१८५)

शकु ॥ मुखं ढौकते। (१८६)

नेपथ्ये ॥ चक्कवाअवहु आमन्तेहि सहचरं। उवत्थिदा रअणी।(१८७)

शकु ॥ कर्णं दत्त्वा ससम्भ्रमम् ॥ अज्जउत्त एसा क्खु तादकस्सवस्स धम्म

---

(१८२) राजेति। अन्यत् उपकरणं किम्। अलमन्येनोपकारेणेति भावः ॥

(१८३) स्मितपक्षेन यथा यदन्येनाभिधीयते इत्यत आह इदमिति। तव सुरभि एव सुगन्धि वदनम्। सुगन्धौ च मनोज्ञे च वाच्यवत् सुरभि स्मृतम् इति विश्वः। यदाघ्रातमाघ्रायि मयेति शेषः। इदमपि उपकृतिपक्षे उपकारत्वेन गणनीय इति शेषः। ननु यतः कमलस्य गन्धमात्रेण आस्वादनं विनापीति भावः। मधुकरो भृङ्गः सन्तुष्यति सन्तोषमाप्नोति। अत्र दृष्टान्तोऽलङ्कारः। पूर्वार्द्धस्यापि द्वादशमात्रत्वादुपगीति र्नामार्य्या वृत्तम्। तदुक्तम्। आर्य्योत्तरार्द्धतुल्यं प्रथमार्द्धमपि प्रयुक्तं चेत्। कामिनि तामुपगीति प्रकाशयन्ते महाकवय इति ॥

(१८४) शकु इति। असन्तोषे इत्यादि। असन्तोषे पुनः किं करोति। मधुकर इति शेषः। मकरन्दविभ्रमात् भक्षणमित्यर्थः ॥

(१८५) राजेति। इदं एव करोतीत्युक्त्वा व्यवसितश्चुम्बितुं समाध्यवसाय चुम्बितुमुद्यतः इति यावत्। न तु वस्तुतश्चुम्बितवान् तदभिनयस्य प्रतिषेधात्। यथाह। शयनाधरपानादि नगराद्युपरोधनम्। स्नानानुलेपने चैभिर्वर्जितो नातिविस्तर इति। सुखमधुविमर्शे मल्लिनाथेन कथमप्युदितं न चुम्बितं तु शयनाभिधानेन विरोधात् ॥

(१८६) शकु इति। मुखं ढौकते आढौकयति। यद्यपि ढौकृ गत्यामिति कविकल्पद्रुमप्रकाशादि धातूनामनेकार्थत्वादत्रावरणार्थः। यदुक्तम्। क्रियावाचित्वमाख्यातु प्रसिद्धोऽर्थः प्रदर्शितः। प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातव इति ॥

(१८७) नेपथ्य इति। चक्रेत्यादि। चक्रवाकवधु आमन्त्रयस्व सहचरं समुपस्थिता रजनी। आमन्त्रयस्व आह्वय। सह चरतीति सहचरः प्रियः। उपेत्यादि शेषः। निशि चक्रवाकमिथुनं विरहदशां लभते प्रिया च प्रियमाक्रन्दतीति प्रसिद्धात् प्रथित कविसमयः ॥

कणीअसी मम वुत्तन्तोवलम्भणणिमित्तं अज्जा गोदमी आअच्छदि ता विडवान्तरिदो होहि। (१९८)

राजा॥ तथा॥ इत्येकान्ते स्थित (१९९)

॥ ततः प्रविशति पात्रहस्ता गोतमी। (२००)

गौत॥ जादे अच्चाहिदं सुणिअ आअदा, एदं सन्तिउदअं॥ (२०१)

इन्दा सहस्राप्य च॥ दृश्य देवदासहाइणी चिट्ठसि। (२०२)

शकु॥ दाणिज्जेव आअच्छआपिअसहीओ मालिणीं ओदी- णाओ। (२०३)

गौत॥ शान्त्युदकेन शकुन्तलामभ्युक्ष्य॥ जादे णिराबाधा मे चिरं जीव अवि दे लहुसन्दावाइं गत्ताइं॥ इति स्पृशति। (२०४)

---

(१९८) शकु इति। 'कर्णं दत्त्वा श्रोतं कर्णं नियुज्य। इदमूच' इत्यरम्। कणीअसीत्यादि। आर्य्य' पुत्र एषा खलु तातकण्वस्य भर्म्मकनीयसी मम हत्तान्तोपलम्भननिमित्त- मार्य्या गौतमी आगच्छति तद् विटपान्तरितो भव। धर्मकनीयसी धर्मभगिनी न वस्तुतो भगिनीत्यर्थः। मम हत्तान्तस्य वार्त्ताया उपलम्भननिमित्तं ज्ञानार्थम्। वार्त्ता प्रवृत्ति- र्वृत्तान्त इति, प्रद्योपलब्धिर्विद्विधत्प्रतिपत्तुग्निचेतना इति चामर। विटपान्तरित स्तम्बा- च्छादितशरीर॥

(१९९) राजेति। तथा तथैव क्रियत इत्युक्त्वा एकान्ते निर्ज्जने स्थितस्तिष्ठति। एकान्त औत्यत्यर्थं निर्ज्जने तद्युते तिष्ठिति शब्दाब्धि॥

(२००) तत इति। तत राज्ञ स्थानान्तरगमनानन्तरम्। पात्रहस्ता शान्त्युदक- पात्रहस्ता॥

(२०१) गौतेति। जादे इत्यादि। जाते अत्याहितं श्रुत्वा आगता, एतच्छान्त्यु- दकम्। जाते वत्से। अत्याहितं तापाद्‌तिभीतिम्। अत्याहितं महाभीति कर्म्मजीवान पेक्षि चेत्यमर। शान्त्युदकं दर्भ्यं विधुपाक एतदिति॥

(२०२) इन्देति। शकुन्तलामिति शेष। इन्दत्यादि। इन्द देवतासहायिनी तिष्ठसि। देवतासहायिनी एकाकिनी। देवताकोनमर्भीऽयं मन्त्र॥

(२०३) शकु इति। दाणिमिति। इदानीमेव आचमय्यापियसखे मालिनीमवतीर्णे। मालिनीं नदीम्। अवतीर्णे गते॥

(२०४) गौतेति। अभ्युक्ष्य शान्त्युदकेन अभिषिच्य। तद्प्रकारस्तु। उमानेमेव कर्मेण प्रोक्षणं समुदाहृतम्। त्युत्तानाभ्युक्षणं प्रोक्तं तिरश्चावोक्षण करतमिति कल्पतरु।

मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु (२१०)

क्व नु खलु सम्प्रति गच्छामि अथवा इहैव प्रियापरिभुक्ते लतामण्डपे मुहूर्तं तिष्ठामि। (२११)

सर्वतोऽवलोक्य। (२१२)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद् भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाद् शक्तोऽस्मि शून्यादपि॥ (२१३)

---

(२१०) मुहुरिति। पक्ष्म नेत्ररोमावली। पक्ष्माक्षिलोम्नोरित्यमरः। तदस्ति ययो-रिति रोमादिभ्य इत्यादिना चूडादित्वाल्लच्प्रत्ययात् पक्ष्मले पक्ष्मयुक्तिमतीत्यर्थः। यत्र समासार्थविशेषणेन विशेष्यस्य नेत्रस्याक्षिप्ति ज्ञायते तत्राक्ष्यर्थं प्रत्ययान्तरं तदुत्कर्षप्राश-स्त्यादिमत्त्वबोधकत्वस्वभावात्। विवृतमेतद् बालक्रीडाटीकायाम्। पक्ष्मले अक्षिणी दृशौ यस्याः सा तस्याः। सक्थ्यक्ष्णोः स्वाङ्गे इति षच्। षित्वाद्ङीष्। यस्येति चेति लोपः। अधरश्च ओष्ठश्च तयोः समाहारः अधरोष्ठम्। प्राणितूर्यसेनाङ्गानामैक्यं चेति द्वन्द्वादैक्यम्। ओत्वोष्ठयोः से इति ओष्ठे परे अकारलोपः। मुहुः पुनः पुनरङ्गुलिभिः संवृतमधरोष्ठं यत्र तत् तथोक्तम्। तथा प्रतिषेधाक्षरैः निषेधार्थोदीरितवर्णैः विक्लवं विह्वलम् अभिरामं मनो-ज्ञं च। अपर समुच्चयार्थयोरिति विश्वः। विक्लवो विह्वल इत्यमरः। अभिरामं रमणीयं रम्यं सौम्यं सुन्दरमिति धनञ्जयः। तथा अंसे स्कन्धे विवर्तते चुम्बनाद्भयाद् भ्रमतीति अंस-विवर्ति मुखं कथमपि कष्टेन उन्नमितमुद्धमितं न तु चुम्बितम्। भविष्यत्येव चुम्बने विघ्न-भूता गौतमी समायातेति भावः। इदमुपच्छन्दसिकं नाम वृत्तं लक्षणमनुक्तम्॥

(२११) क्वेति। नु वितर्के। खलु इच्छायाम्। प्रियया परिभुक्ते आश्रिते। भोग्यमात्यदनार्थाद्धेत्यधिकरणे क्तः। मुहूर्तं कतिचित् क्षणान्। क्षणको तु मुहूर्तो द्वादशांऽस्त्रियामित्यमरः॥

(२१२) सर्वेति। सर्वतो लतामण्डपस्य सर्वप्रान्तानि॥

(२१३) तस्या इति। शरीरेण लुलिता लुण्ठनेन मलिता विमर्दिता। लुल विमर्दने इति कौलधातुगणपाने कविकल्पद्रुमः। इयं शिलायां शिलोपरि तस्याः प्रियायाः पुष्प-मयी पुष्परचिता शय्या। तस्या इति सर्वत्रान्वयि। नलिन्याः पद्मिन्याः पत्रे नखैरर्पि-तोऽङ्कित एष कान्तो मनोहरो मन्मथलेखो मदनपत्रम्। कान्त इत्यत्र क्षान्त इति क्वचित् पाठः। क्षान्तो व्यामिमत इत्यर्थः। हस्ताद् भ्रष्टं परिगलितमिदं बिसाभरणं मृणालवलयम्।

विचिन्त्य ॥ अहो धिगसम्यक् चेष्टितं प्रियां समासाद्य कालहरणं कुर्वता मया। तदिदानीम्। (२१४)

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन-
र्न कालं हास्यामि प्रकृतिदुरवापा हि विषयाः।
इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥ (२१५)

नेपथ्ये ॥ भो भो राजन्! (२१६)

---

मृणालविसमित्यमरः। इति एवंरूपेण व्यावर्ज्यमाने दृष्टं प्रवृत्ते हृदयं चक्षुषी यस्य च तथोक्तोऽहं शून्यात् प्रियारहितादपि वेतसकुञ्जात् वानीरलतागहनगृहात् सहसा झटिति निर्गन्तुं न ईशः समर्थोऽस्मि। व्यावर्ज्यमानेति व्याङ्पूर्वस्य वृजधातोः वर्जने इत्यस्य रूपम्। आत्मनेपदित्वं तु आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदिति न्यायात्। व्यावर्ज्यमानेति पाठे इति एवं दर्शनव्यापारेण व्यावर्ज्यमाने सम्बध्यमाने ईक्षणे यस्य स तथोक्त इत्यर्थः। इदं शार्दूलविक्रीडितं नाम वृत्तम् ॥

(२१४) विचिन्त्येति विचार्येत्यर्थः। अहो विषादे। अहो धिगर्थे शोके च अत्यर्थे विषादयोरिति मेदिनी। धिगिति। प्रियां शकुन्तलां समासाद्य लब्ध्वा कालहरणं अभिमतार्थसाधने विलम्बं कुर्वता मया असम्यक् चेष्टितं तथा अनुचितं धिक्। तत् तस्मात् इदानीमधुना मूढहृदयं प्रियायाः प्रत्यक्षं गणयतीति श्लोकेनान्वयः ॥

(२१५) रह इति। सुष्ठु वदनं यस्याः सा सुवदना। अप्राप्तेऽपि अनाविर्भूतेऽपि बहुव्रीहिः इति वक्तव्यं प्रतिषेधाभावे न प्। शकुन्तला यदि पुनरन्यदा रहः प्रत्यासत्तिं विविक्तभूमौ सन्निकर्षम्। विविक्तविजनच्छन्ननिःशलाकास्तथा रहः इत्यमरः। यास्यति तदा कालं न हास्यामि त्यक्ष्यामि न चिरयिष्यामीति यावत्। तत्क्षणादेव यथाकर्त्तव्यं करिष्यामीति भाव। एतेनास्य वैवाहिककर्त्तव्यानपेक्षया विधिप्रवृत्तत्वं नाशङ्कनीयम्। गान्धर्वादीनामष्टानां वार्षिकाविरुद्धत्वे। यथा रत्नमालायाम्। प्राजापत्यमाह्वरैनार्षं च ब्राह्मं कालेऽपूर्वेण कार्या विवाहाः। गान्धर्वाख्यो राक्षसश्चासुरश्च पैशाचो वा सर्वकाले विधेया इति। हि यतो विषया इन्द्रियार्थाः। विषया अमी। गोचरा इन्द्रियार्थाश्चेत्यमरः। प्रकृत्या स्वभावेन दुरवापा दुर्लभाः। इति इत्थं विघ्नैः क्लिष्टं पीडितं मे मूढहृदयं इति उक्तप्रकारेण प्रियायाः प्रत्यक्षं साक्षात्कारं गणयति च तथा किमपि अनिर्वचनीयं कातरमधीरमिव भवति च। इदं वृत्तं शिखरिणी नाम ॥

(२१६) नेपथ्य इति। सुगमम् ॥

सायन्तने सवनकर्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः ।
छायाश्चरन्ति बहुधा भयमादधाना
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् ॥ (२१७)

राजा ॥ आकर्ण्य सावष्टम्भम् ॥ भो भोस्तपस्विनो मा भैष्ट मा भैष्ट अयमहमागत एव ॥ इति निष्क्रान्तः । (२१८)

तृतीयोऽङ्कः । (२१९)

---

(२१७) सायन्तने इति । सायन्तने सायङ्कालीने सवनकर्मणि यागकर्मणि । सवन यजने स्नाने सोमनिर्गमनेऽपि चेति विश्वः । अग्निहोत्र इति यावत् । तथाच श्रुतिः । याव ज्जीवमग्निहोत्रं जुहोति यदग्नये च प्रजापतये साय प्रातर्जुहोतीति । सम्प्रवृत्ते आरब्धे सति हुताशनवतीं ज्वलदनलां वेदिं परितो यज्ञभूमेः समन्ततः । समन्ततस्तु परितः सर्वतो विश्व गित्यपीत्यमरः । अभ्युभयपरिसर्वैत इत्युक्तेर्द्वितीया । प्रकीर्णा व्याप्ता अतएव भयं हृदि राक्षसेभ्य आदधाना उत्पादयन्त्य सन्ध्याया अभ्रकूटा मेघपुञ्जा इव कपिशा श्यावा कृष्ण पीतवर्णा इति यावत् । अभ्रं मेघ इति पुञ्जराशी तूत्करः कूटमस्त्रियामिति, श्यावः स्यात् कपिश इति चामरः । पिशितं मांसमश्नन्ति ये ते पिशिताशना । नन्द्यादित्वाद्ल्युः । पिशितं तरसं मांसमित्यमरः । तेषां बहुधा बहुप्रकाराश्छायाश्चरन्ति इतस्ततो भ्रमन्ति । तथाच मांसाशनादक्षसिद्धा अपि राक्षसा ज्वलदनलसन्निकर्षात् पतन्तीभिश्छायाभिरनुमीयन्त इति भावः । वसन्ततिलकं वृत्तम् ॥

(२१८) राजेति । सावष्टम्भं सप्रारम्भं सोद्यममिति यावत् । अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपीति विश्वः । भैष्टेति । माङ्योगात् मा टो भति टो । युष्मत्कर्तृत्वात् कर्तुर्बहु त्वाच्च तस्य स्तविभक्तिः । अमेतिकरणाद्यागमः । टग्ना सिरिति सिः । इवर्णान्तनिषेधाद्वेम । मजवदेति वृद्धिः । तत थत तस्य टश्च । इति एवमुक्त्वा निष्क्रान्तो रङ्गमेरपसृतः ॥

(२१९) तृतीति । अङ्कः परिच्छेदः ॥

इति श्रीकृष्णनाथशर्म्मकृतायामभिज्ञानशकुन्तलटीकायां
मनोभिरामाख्यायां तृतीयाङ्कविवरणम् ॥

---

# चतुर्थोऽङ्कः ।

ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ । (१)

अनसूया ॥ हला पिअंवदे जइ वि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्तिभाइणी संवुत्ता तह वि मे ण णिव्वुदं हिअअं । (२)

प्रियंवदा ॥ कधं विअ । (३)

अन ॥ अज्ज सो राएसी इट्ठिपरिसमत्तीए इसिहिं विसज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमागमादो इमं जणं सुमरेदि वा ण वत्ति । (४)

---

(१) ततइति । कुसुमावचयं वृक्षेभ्यः पुष्पसञ्चयम् । अभिनयन्त्यौ रूपयन्त्यौ । सख्यौ शकुन्तलाया इति शेषः ॥

(२) अनसूयेति । हलेत्यादि । अयि प्रियंवदे यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता तथापि मे न निर्वृतं हृदयम् । गान्धर्वेणान्योन्यसमयपूर्वकेण । विवाहविधिना विवाहकर्मणा । निर्वृत्तकल्याणा निष्पन्नमङ्गला । अनुरूपं स्वरूपेण सदृशं भर्तारं भक्तुं शीलं यस्याः इत्यनुरूपभर्तृभागिनी । [illegible] इति सूत्रात् [illegible] । निर्वृतं सुस्थीभूतं सुखितं वा । निर्वृतिः सुस्थितास्तगमने च सुखे स्त्रियामिति मेदिनी ॥

(३) प्रियंवदेति । कधं विअ कथमिव ॥

(४) अनेति । अज्जेत्यादि । अद्य स राजर्षिरिष्टिपरिसमाप्त्या ऋषिभिर्विसर्जितः आत्मनो नगरं प्रविश्य अन्तःपुरसमागमादिमं जनं स्मरति न वेति । इष्टिपरिसमाप्त्या यागसमापनेन । इष्टि यागेच्छयोरित्यमरः । विसर्जितो नगरगमनायानुज्ञातः । अन्तःपुरसमागमात्स्त्रीसम्भोगात् । इमं जनं प्रियसखीम् । स्मरति यद्वा न स्मरति इति यन्न विचिन्त्य न निर्वृतं हृदयमित्यन्वयः ॥

प्रियं ॥ एत्थ दाव वीसत्था होहि ण हि तादिसा आकिदिविसेसा गुणविरहिणो होन्ति। एत्तिनं उण चिन्तणीअं तादो तीत्थजात्तादो पडिणिउत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति। (५)

अन ॥ जधा मं पुच्छसि तधा अभिमदं तादस्स। (६)

प्रिय ॥ कधं विअ। (७)

अन ॥ अणुरूवस्स वरस्स हत्थे कण्णआ पडिवादणीअ त्ति अअं दाव पढमो कप्पो। तं जइ देव्वं सम्पादेदि णं कअत्थो गुरुअणो। (८).

---

(५) प्रियमिति। एत्थेत्यादि। अत्र तावद् विश्वस्ता भव न हि तादृशा आकृति विशेषा गुणविरहिणो भवन्ति, एतावत् पुनश्चिन्तनीयं तातस्तीर्थयात्रात प्रतिनिवृत्त इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति। अत्र राज सङ्गतौ। विश्वस्ता स्थिरनिश्चया। हि यस्मात तादृशास्तद्वत् आकृतिविशेषा विशिष्टा आकृतय। गुणमजडमयत्वादिक विहरयन्ति त्यजन्तीति गुणविरहिणो न भवन्ति। अतएवाह आकारसदृशप्रज्ञ प्रज्ञया सदृशागम इति। रहक तु त्याग इति कविकल्पद्रुम। एतावत् पुनरिदन्तु चिन्तनीयं विचारणीय किमित्याकाङ्क्षायामित्यन्तम्। किं प्रतितत्स्यते किं मंस्यते॥

(६) अनेति जधेत्यादि। यथा मा पृच्छसि तथाभिमतं तातस्य। यथा यत्र विषये प्रियसख्या पौरवराजसङ्गम इति यावत। मा पृच्छसि श्रुत्वा किं प्रतिपत्स्यत इति जिज्ञाससे तथा ना तातस्य अभिमत सम्मतम्। अभिमतमिति ज्ञानार्थत्वाद् वर्त्तमाने क्त। तद्योगात काश्यकसङ्गाशं क्तेनेति कर्त्तरि षष्ठी। जह अहं पेक्खामि तहं तस्स अणुमद भवे इति क्वचित पठ्यते यथाह मेक्षे तथा तस्यानुमत भवेदित्यर्थं॥

(७) प्रियमिति। कध विअ कथमिव॥

(८) अनेति। अणित्यादि। अनुरूपस्य वरस्य हस्ते कन्या प्रतिपादनीयेत्ययं प्रथम कल्प। त यदि दैव सम्पादयति ननु कृतार्थो गुरुजन। वरस्य जामात। वरो जामातरि वृते देवतादेरभीप्सित इति मेदिनी। प्रतिपादनीया दानीया इत्यय प्रथम कल्प प्रथमो विधि। कल्पे विधिक्रमौ। मुख्य स्यात् प्रथम कल्पोऽनुकल्पस्तु ततोऽधम इत्य मर। त मुख्यकल्पम् दैव नियतिरेव दैवे पुरुषकारे च कर्मसिद्धि र्व्यवस्थितेत्युक्तगुरुजन पुरुषकार विनेत्यर्थं। सम्पादयति निष्पादयति। णमिति वाक्यालङ्कारे। कृतार्थ कृतप्रयोजन॥

प्रियं ॥ एवं णेदं । (९)

पुष्पभाजनं विलोक्य ॥ सहि अवचिदाइं क्खु बलिकम्मपज्जत्ताइं कुसुमाइं । (१०)

अन ॥ णं सउन्तलाए वि सोहग्गदेवदाओ अच्चिदव्वाओ ता अवराइं पि अवचिणुह्म (११)

प्रिय ॥ जुज्जदि ॥ इति तदेव कर्माभिनयतः । (१२)

नेपथ्ये ॥ अयमहं भोः । (१३)

अन ॥ कर्णं दत्त्वा ॥ सहि अदिधिणा विअ णिवेदिदं । (१४)

प्रिय ॥ णं उडए सण्णिहिदा सउन्तला । (१५)

---

(९) प्रियमिति । एवणेदं एवमिदम् । इदमेवमेवेत्यर्थः ।

(१०) पुष्पेति । पुष्पभाजनमुद्गृहीतपुष्पपात्रम् । सहीत्यादि । सखि अवचितानि खलु बलिकर्मपर्याप्तानि कुसुमानि । अवचितानि उद्धृतानि । खलु केवलम् । बलीति । बलिकर्मसु पूजोपहारकर्मसु पर्याप्तानि यथेष्टानि । बलिर्दायकरदण्डे च जरया श्लथ चर्मणि । उपहारवर्ते देवे करपूजोपहारयोरिति विश्वः । काम प्रकाम पर्याप्त निकामेष्ट यथेप्सितमित्यमरः ॥

(११) अनेति । णमित्यादि । ननु शकुन्तलाया अपि सौभाग्यदेवता अर्चयितव्या तदपराण्यपि अवचिनुवः । अपि दैवतापदान्ते योज्य ।- सौभाग्यदेवता भर्तृसुभगता-धायिन्यो देवता मङ्गलचण्डिकाद्य । तदर्चनमसौ सौहार्दिकमङ्गलानन्तर मारीचर्य समाचार ॥

(१२) प्रियमिति । जुज्जदि युज्यते । अभिनयत रूपयत । द्वे एवेति शेषः ॥

(१३) नेपथ्य इति । अय भवद्गृहागतभ्तुत, इत्यर्थः । भिक्षाभ्यर्थनानिवेदन-मिदम् ॥

(१४) अनेति । कर्णं दत्त्वा श्रुतिमभिनीय । सहीत्यादि । सखि अतिथिनेव निवेदितम् । यथातिथिरेव निवेदयतीत्यर्थः ॥

(१५) प्रियमिति । णमित्यादि । ननूटजे सन्निहिता शकुन्तला । सन्निहिता उपस्थिता ॥

अन ॥ अं अज्ज उण असणिहिदा हिअएण तेण हि मोदु एत्तिकेहिं कुसुमेहिं पओअणं ॥ इति प्रस्थिते । (१६)

पुनर्नेपथ्ये ॥ आः कथमिति मां परिभवसि । (१७)

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥ (१८)

उभे ॥ श्रुत्वा विषण्णे । (१९)

प्रियं ॥ हद्धी हद्धी तं ज्जेव संवुत्तं जं मए चिन्तिदं कस्सिं पि पूआरिहे अवरद्धा सुणहिअआ पिअसही सउन्दला । (२०)

---

(१६) अनेति । अमित्यादि । अं अद्य पुनरसन्निहिता हृदयेन, तेन हि भवतु एतावद्भिरेव कुसुमैः प्रयोजनम् । अं स्मरणे । अं ज्ञाने निश्चयस्मृत्योरिति मेदिनी । हृदयेन असन्निहिता असम्बद्धा भर्तृगतहृदयेति भावः । तेन हि तेनैव हेतुना । एतावद्भिरियद्भिरेव कुसुमैः प्रयोजनं बलिकर्म सौभाग्यदेवताभ्यर्च्चनरूपं भवतु । प्रस्थिते गच्छतः ॥

(१७) पुनरिति । आः कोपे । आस्तु स्यात् कोपपीडयोरित्यमरः । परिभवसि उपेक्षितवचनत्वादाद्रियसे । अनादरः परिभव इत्यमरः ॥

(१८) विचिन्तयन्तीति । यं पुरुषं विचिन्तयन्ती स्मरन्ती सती अनन्यमानसा नान्यस्मिन् विषये मानसं मनो यस्याः सा तथोक्ता त्वम् । विप्रलम्भशान्तानां सुखानामेव प्रकृष्टत्वात् ध्यानादपि मानसगम्यत्वाच्चेप् । उपस्थितं गृहागतं तपांसि ब्रह्मचर्यादीनि धर्मा वा निधीयन्ते धार्यन्ते अस्मिन्निति तपोनिधिः । डाङ्कि इति कर्मोपपदाद् धाञोऽधिकरणे किः । तथाभूतं मां न वेत्सि नानुभवसि स तच्चिन्ताविषयभूतो जनो बोधितोऽपि स्मृतिहेतुभूतक्रियया स्मरणाय प्रेरितोऽपि सन् प्रथमं कथारम्भसमये प्रमत्तोऽकृतावधानः पुमान् । प्रमादोऽनवधानतेत्यमरः । पश्चात् बोधितोऽपि सन् कृतामुपन्यस्तां कथां वाक्प्रबन्धमिव त्वां न स्मरिष्यति कृतसम्पर्कं तया नानुभविष्यति । अत्रोपमालङ्कारः । वंशस्थविलं वृत्तम् ॥

(१९) उभे इति । विषण्णे जातविषादे ॥

(२०) प्रियमिति । हद्धीत्यादि । हा धिक् हा धिक् तदेव संवृत्तं यन्मया चिन्तितं कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया प्रियसखी शकुन्तला । यन्मया चिन्तितं कल्पितं

अन॥ पुरोऽवलोक्य॥ ण क्खु जस्सिं कस्सिं पि एसो दुव्वासा सुलहकोवो महेसी तधा सविअ अविरलपादतुवराए गदीए पडिणिउत्तो। (२१)

प्रिय॥ को अण्णो हुदवहादो पहवदि दहिदुं ता गच्छ पाएसु पडिअ णिवत्तावेहि जाव से अहं पि अग्घोदअं उवकप्पेमि। (२२)

अन॥ तह॥ इति निष्क्रान्ता। (२३)

प्रिय॥ पदान्तरे स्खलितं रूपयन्ती॥ अम्मो आवेअक्खलिदाए गदीए परिब्भट्टं मे अग्गहत्थादो पुप्फभाअणं॥ इति पुष्पावचयं रूपयति। (२४)

---

तदेव सहस्तं सम्भूतम्। तदेव विद्धयोति कश्चिन्मित्यादि पूजार्हं सत्कार्य्यं। अपराद्धा कृतापराधा। शून्यहृदया राजगतहृदया॥

(२१) अनेति। पुरोऽग्रतः। स्यात् पुरः पुरतोऽग्रत इत्यमरः। णेत्यादि। न खलु यस्मिन् कस्मिन्नपि एष दुर्व्वासाः सुलभकोपो महर्षिः। तथा शप्त्वा अविरलपादत्वरया गत्या प्रतिनिवृत्तः। न खलु अपराद्धेति पूर्व्वेण सम्बन्धः। यस्मिन् कस्मिन् सामान्यजने इत्यर्थः। सुलभः सहजः कोपो रोषो यस्य स सुलभकोपः। तथा शप्त्वा विचिन्तयन्तीत्यादिना शप्त्वा। अविरलेति। अविरला घनविन्यस्ताः पादा यस्यां सा तथाभूता त्वरा यत्र सा तया। प्रतिनिवृत्तः पराङ्मुखीभूतः॥

(२२) प्रियमिति। को इत्यादि। कोऽन्यो हुतवहात् प्रभवति दग्धुं तद् गच्छ पादयोः पतित्वा निवर्त्तय। यावदस्याहमपि अर्घोदकमुपकल्पयामि। हुतवहाद् वह्नेरन्यः कः पदार्थो दग्धुं प्रभवति प्रभुर्भवति। दुर्व्वाससं विना क एवं प्रभुर्भवतीति भावः। गच्छ दुर्व्वाससः समीपमिति शेषः। निवर्त्तय आश्रमं नय। यावत् आ निवर्त्तनात्। यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमरः। अस्य महर्षेः तत्सम्प्रदेयमित्यर्थः। अर्घोदकमर्घार्थं जलम्। उपकल्पयामि पुष्पफलादिभिः सुसज्जीकरोमि॥

(२३) अनेति। तह तथा॥

(२४) प्रियमिति। पदान्तरे अन्यस्मिन् पदविक्षेपे स्खलितं गतिवैलक्षण्यम्। अम्मो इत्यादि। अहो आवेगस्खलितया गत्या परिभ्रष्टं मे अग्रहस्तात् पुष्पभाजनम्। आवेगेन त्वरया स्खलितया अन्यथाभूतया। परिभ्रष्टं पतितम्। अग्रहस्तात् हस्ताग्रात् अग्रपदस्य राजदन्तादित्वात् पूर्व्वनिपातः। पुष्पभाजनं पुष्पपात्रम्। पुष्पावचयं विकीर्णपुष्पसंग्रहम्। पुष्पान्तरसंग्रहं वा॥

अन॥ प्रविश्य॥ सहि सरीरी विअ कोवो कस्स अणुणअं सो गेह्णदि। किंच उण सो अणुकम्पिदो मए। (२५)

प्रिय॥ एदं ज्जेव तस्सिं बहुदर ता कधेहि कधं तए पसादिदो। (२६)

अन॥ जदो णिउत्तिदुं ण इच्छदि तदो पाएसुं पडिअ विण्णविदो मए भअव पढमं त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदिजणस्स आअं अवराहो भअवदा मरिसिदव्वो त्ति। (२७)

प्रियं॥ तदो तदो। (२८)

अन॥ तदो तेन भणिदं ण मे वअणं अण्णधाभविदुं अरिहदि किन्तु आहरणाहिण्णाणदंसणेण से सावो णिउत्तिस्सदित्ति मन्तअन्त ज्जेव अन्तरिदो। (२९)

---

(२५) अनेति। प्रविश्य रङ्गभूमिमिति शेष। सहीत्यादि। सखि शरीरीव कोप कस्यानुनयं स गृह्णाति। किञ्च पुन सोऽनुकम्पितो मया। शरीरी मूर्त्तिमान् कोप क्रोध इव स महर्षि कस्यानुनय प्रसादन गृह्णाति गृहीष्यति कस्यापि नेत्यर्थ। अनुनयस्य सुनिप्राह्यतया लिप्सितत्वात् गृह्णातीति किञ्चि निपातमिति भव्ये की। मया पुन स महर्षि किञ्च किञ्चित् अनुकम्पितोऽनुकम्पा कारित॥

(२६) प्रियमिति। एदमित्यादि। एतदेव तस्मिन् बहुतर तत् कथय कथ त्वया प्रसादित। एतदेव किञ्चिदनुकम्पनमेव तस्मिन् दुर्व्वासमि बहुतर समधिकतया मन्तव्य किञ्चिदनुकम्पनस्यैव तस्मिन् दु शकत्वादिति भाव। प्रसादित प्रसन्नीकृत॥

(२७) अनेति। जदो इत्यादि। यदा निवर्त्तितु नेच्छति तदा पादयो पतित्वा विज्ञापितो मया भगवन् प्रथममिति प्रेक्ष्य अविज्ञाततप प्रभावस्य दुहितृजनस्यायमपराधो भवता मर्षयितव्य इति। निवर्त्तितुमाश्रम प्रत्यागन्तुम्। विज्ञापितो निवेदित किमित्या काङ्क्षाया भगवन्नित्यादि। भगवन् माहात्म्यवन्। प्रथम प्रथममपराद्धमिति प्रेक्ष्य विविच्य अविज्ञातो अपरिचितस्तप प्रभावो भवत्तपसस्तेज शक्ति वा येन स तथाभूतस्य। प्रभाव शक्तितेजसोरिति विश्व। दुहितृजनस्य निजदुहितृनिर्विशेषस्य जनस्य। अयमपराध अवैधाचरणजनितो दोषो भवता मर्षयितव्य क्षन्तव्य॥

(२८) प्रियमिति। तदो तदो ततस्तत॥

(२९) अनेति। तदो इत्यादि। ततस्तेन भणित न मे वचनमन्यथाभवितुमर्हति

प्रिय ॥ सहि दाणिं आसङ्किदुं णत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामाङ्किदं अङ्गुलीअअं सुमरणीअं त्ति सउन्तलाए हत्थे सअं ज्जेव परिधाविदं एस ज्जेव तस्सिं साहीणो उवाओ भविस्सदि । (२०)

अन ॥ सहि एहि देवकज्जं दाव से णिव्वत्तेम्ह ॥ इति परिक्रामति । (२१)

प्रिय ॥ अवलोक्य ॥ अणसूए पेक्ख दाव वामहत्थविणिहिदवअणा आलिहिदा विअ पिअसही तग्गदाए चिन्ताए अत्ताणम्पि ण विभावेदि किं उण आगन्तुअं । (२२)

---

किन्त्वाभरणाभिज्ञानदर्शनेनास्याः शापो निवर्तिष्यत इति मन्त्रयमाणा एवान्तरितः । तेन दुर्वाससा । अन्यथाभवितुं अन्यथाभवितुम् । अभिज्ञायते ज्ञायते सर्वतया निश्चीयते अनेनेत्यभिज्ञानम् । आभरणरूपं यदभिज्ञानं तद्दर्शनेन परिचयोत्पादकदर्शनेन हेतुना अस्याः शापो भर्तुः स्मृतिव्यवधायको निवर्तिष्यते अपगमिष्यति इति भणितमित्यन्वयः । मन्त्रयमाणोऽनुच्चैर्व्याहरन् इतीयनेनात्तुपन्न । अन्तरित अन्तर्हितः ॥

(२०) प्रियमिति । सखीत्यादि । सख्यमिदानीमाशङ्कितुं अस्ति तेन राजर्षिणा सम्प्रस्थितेन आत्मनो नामाङ्कितमङ्गुरीयकं स्मरणीयमिति शकुन्तलाहस्ते स्वयमेव परिधापितं एष तस्मिन् स्वाधीन उपायो भविष्यति । इदानीं शापान्तस्मरणे सतीत्यर्थः । सखीत्याश्वासित सम्यगाश्वासमाप्नुम । शक्यमस्माभिरिति शेषः । भावे यप् । आश्वासबीजं दर्शयति सखीत्यादि । सम्प्रस्थितेन गच्छता । स्मरणीयं स्मरणाय हितम् । इति उक्त्वेति शेषः । शकुन्तलाहस्ते तस्या अङ्गुल्याम् । परिधापितं समर्पितम् । एष अङ्गुरीयकरूप उपाय इत्यन्वयः । [illegible] । तस्मिन् शापोपशमने । स्वाधीनो न पराधीनः ॥

(२१) अन्विति । सखीत्यादि । सखि एहि देवकार्यं तावदस्या निर्वर्तयाव । देवकार्यं सौभाग्यदेवताभ्यर्चनम् । निर्वर्तयाव सम्पादयाव ॥

(२२) प्रियेति । अवलोक्य शकुन्तलामिति शेषः । अनसूये इत्यादि । अनसूये पश्य तावद्वामहस्तविनिहितवदना आलिखितेव प्रियसखी तद्गतया चिन्तया आत्मानमपि न विभावयति किं पुनरागन्तुकम् । वामेति । वामहस्ते सव्यपाणौ विनिहितं स्थापितं वदनं मुखं यया सा । आलिखिता चित्रितेव निष्पन्दत्वादिति भावः । स तस्मिन् गता प्राप्ता

अन॥ हला दोसं ज्जेव णो हिअए एसो वुत्तन्तो चिट्ठदु रक्खणीआ क्खु पइदिपेलवा पिअसही। (३३)

प्रियं॥ को दाव उण्होदएण णोमालिअं सिञ्चदि। इत्युभे निष्क्रान्ते। (३४)

विष्कम्भकः। (३५)

॥ ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः। (३६)

शिष्यः॥ वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासात् प्रतिनिवृत्तेन काश्यपेन तत् प्रकाशं निर्गत्यावलोकयामि कियदवशिष्टं रजन्या इति। (३७)

---

राज्ञता तया राजविषयेति यावत्। विभावयति परिचिनोति। विभावः स्यात् परिचितौ कामस्योद्दीपनेऽपि चेति विश्वः। आगन्तुकमतिथिम्। अभ्यागन्तुरतिथि नौ अट्टागत इत्यमरः॥

(३३) अनेनेति। हलेत्यादि। सखि द्वयोरेवावयो र्हृदये एष वृत्तान्तस्तिष्ठतु रक्षणीया खलु प्रकृतिपेलवा प्रियसखी। एष वृत्तान्तः शापवृत्तान्तः। रक्षणीया न प्रकाशनार्हा। खलु केवलम्। प्रकृतिपेलवा स्वभावकोमला। पेलवं कोमलमिति त्रिकाण्डशेषः॥

(३४) प्रियमिति। को इत्यादि। कस्तावदुष्णोदकेन नवमालिकां सिञ्चति। अप्रस्तुतेन तेन प्रियसखी सम्बन्धेऽप्येतद्वृत्तान्तप्रकाशनमतीव दारुणमिति प्रस्तुतार्थस्य गम्यत्वादप्रस्तुतप्रशंसाख्योऽलङ्कारोऽयम्। इति चातःपरम्॥

(३५) विष्कम्भक इति। तदाख्योऽङ्गविशेष इत्यर्थः। अकृताभिनयस्यापि वृत्तस्य दुर्वाससोऽनुनयान्तवृत्तान्तस्य वर्त्तिष्यमाणस्य च शापस्याङ्गुरीयकदर्शनावसानत्वस्य निदर्शकत्वात् मध्यमपात्राभ्यां सम्प्रयोजितत्वेन शुद्धोऽयम्। यदुक्तम्। वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः। मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पित इति। अत्र च विवाहो भोजनं शापोत्सर्गो मृत्युरत्र तथेत्यादिना शापाभिनयस्याङ्कमध्ये निषेधात् शपतो दुर्वाससः प्रवेशो बाधितः सुतरामनन्तरं तदनुनयनादिकथांशोऽपि रूपणेन न दर्शित किन्तु विष्कम्भकेनेत्यनुभाव्यम्॥

(३६) तत इति। सुप्तोत्थितः सुप्तस्सन् उत्थितः। कण्वशिष्यः कण्वाध्यायः॥

(३७) शिष्य इति। प्रवासात् प्रदेशान्तरात् सोमतीर्थादिति यावत्। प्रतिनिवृत्तेनागतेन

परिक्रम्यावलोक्य च ॥ हन्त प्रभातप्राया रजनी । तथाहि । (३८)

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतोऽरुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ॥ (३९)

---

तत्र भवता कण्वेन वेलाया कालस्य प्रातर्होमीयस्येति यावत् उपलक्षणाय अवधारणार्थम् । अब्धयम्बु विकृतौ वेला कालमर्यादयोरपीत्यमरः । आदिष्टोऽस्मि आज्ञप्तोऽस्मि । तत् तस्मात् प्रकाशं गृहाद् बहिर्भागं निर्गत्य रजन्या रात्रेः कियदवशिष्टमित्यवलोकयामि ॥

(३८) परीति । परिक्रम्य कतिपयैः पदैः सञ्चर्य । हन्तकारो हर्षे । हन्त हर्षेऽनुकम्पायामित्यमरः । प्रभातप्राया उषःकालसदृशी । तस्मात् किञ्चिदूनेत्यर्थः । उषः प्रत्यूषसी अपि प्रभातञ्चेत्यमरः । प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपीति विश्वः । प्रभातवर्णनया तदुपपादयितुमाह तथाहीति ॥

(३९) यातीति । एकतः एकस्या दिशि ओषधीनां पतिश्चन्द्रमाः । 'सोम ओषधीनामधिपतिरि'ति श्रुतेः । अस्तस्य चरमाचलस्य शिखरमग्रभागं याति । अस्तस्तु चरमक्ष्माभृदित्यमरः । शिखरं शैलवृक्षाग्रकक्षापुलककोटिष्विति विश्वः । एकतोऽन्यस्यां दिशि । एके मुख्यान्यकेवला इत्यमरः । अरुणः सूतः सारथिः पुरःसरोऽग्रगामी यस्य स तथोक्तोऽर्को दिवाकरः । सूरसूतोऽरुणोऽनूरुरित्यमरः । आविष्कृतः प्रकाशं कर्तुमारब्धवान् । प्राकाश्ये प्रादुराविः स्यादित्यमरः । घे चादिर्ढे क्तः इत्यादिकर्मणि कर्त्तरि क्तः । तेजोद्वयस्य चन्द्रार्कतेजसो युगपदेकदा । युगपत्त्वेकदेत्यमरः । व्यसनोदयाभ्यां विपदभ्युदयाभ्याम् । व्यसनं विपदि भ्रंशे इत्यमरः । एष लोको भूलोकः दशान्तरेषु सुखदुःखात्मकावस्थाविशेषेषु । दशावस्थादीपवर्त्त्योर्वस्त्रान्ते भूम्नि योषितीति मेदिनी । नियम्यते सुखप्रयुक्तादौ इत्यादौ दुःखप्रयुक्तासु वैकल्यं शिक्षत इव । चान्द्रमसतेजोव्यसनमात्रदर्शनया सम्पदामस्थायित्वमनुभाव्य सुखिनमौद्धत्याद्विरमयति अर्कतेजोऽभ्युदयमात्रदर्शनया विपदामनित्यत्वमवगमय्य दुःखिनं वैक्लव्याद्विवर्त्तयतीवेति भावः । अत एवाह । चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि चेति । महाभारतेऽपि । सुखं च दुःखं च यदि वापि जन्तुर्दैवाधीनं विन्दते नात्मशक्त्या । तस्माद् दैवं बलवन्मन्यमानो न संज्वरेन्नापि हृष्येत् कदाचिदिति । अत्रोत्प्रेक्षालङ्कारः । यदुक्तं दण्डिना । मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ इति । वृत्तं वसन्ततिलकं नाम ॥

अपि च। (४०)

अन्तर्हिते शशिनि सैव कुमुद्वतीय
दृष्टिं न नन्दयति संस्मरणीयशोभा।
इष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्रदुरुद्वहानि॥ (४१)

अपि च। (४२)

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः।
वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः॥ (४३)

---

(४०) अपिचेति। अन्यच्चेत्यर्थः॥

(४१) अन्तर्हित इति। शशिनि कुमुदिनीनायके अन्तर्हिते व्यवधानं गते सति संस्मरणीया संस्मरणार्हा नेदानीं दर्शनार्हेति यावत् शोभा यस्याः सा तथोक्ता सैव या तादृग् विकसितासीदिति भावः। इयं कुमुद्वती कुमुदिनी दृष्टिं नेत्रं न नन्दयति न सुखयति म्लानभावादिति भावः। अतो नूनं निश्चितं इष्टस्य प्रियस्य प्रवासेन देशान्तरगत्या जनितानि दुःखानि अबलाजनेन स्त्रीजनेन अतिमात्रदुरुद्वहानि अत्यन्तासह्यानि। नूनमितिशब्देन एतद् दृष्टान्तमेव निश्चिनोमि न त्वनालोकितदाम्पत्यव्यवहारतया कदाचित् साक्षादवगतवानस्मीति गम्यते। इदमपि वसन्ततिलकं वृत्तम्॥

(४२) अपिचेति। अन्यच्चेत्यर्थः॥

(४३) कर्कन्धूनामिति। अग्रसन्ध्या प्रातःसन्ध्या कर्कन्धूनां पक्वबदराणामुपरि। कर्कन्धुर्बदरी कोलिरित्यमरः। तुहिनं तुषारं रञ्जयति रागं लम्भयति। तुषारस्तुहिनं हिममित्यमरः। रागप्रियासौ सन्ध्या तुहिनमपि लोहितभूतानां कर्कन्धूनामुपरि निधाय लोहितीकरोतीत्युत्प्रेक्षा सा चोत्प्रेक्षाव्यञ्जकेवादिपदविरहात् प्रतीयमाना। यदुक्तम्। वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता। वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनरिति। तथा वीता विगता निद्रा यस्य स तथोक्तो मयूरो दार्भं दर्भैः कुशैः रचितं उटजस्य पर्णशालायाः पटलं छदिर्गृहाच्छादनमिति यावत्। छदिर्नेत्रजो क्लीवं समूहे पटलं न भेदमरः। मुञ्चति जहाति भूमिमवरोहतीति यावत्। तथा खुरैः विलिखितादल्पखनितात् वेदि

अपिच। (४४)

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखै-
रत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा॥ (४५)

---

-क्रान्तात् पादपमूलोपरचितचतुष्कैकपार्श्वात् उत्थित एव हरिणश्च सद्यस्तत्क्षणे स्वाङ्गं निजावयवमायच्छमानः प्रसारयन् सन्। व्याङ्गदाङ्भ्यो यम इत्यात्मनेपदित्वात् शानः। उत्पादनन्तरसुश्च भवति। पराङ्गे स्वभावोक्तिरलङ्कारः। यदुक्तं दण्डिना। नानावस्थं पदार्थानां रूपं साक्षाद् विवृण्वती। स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिरिति। मन्दाक्रान्ता नाम वृत्तम्॥

(४४) अन्यदपि वर्णयितुमाह अपिचेति॥

(४५) पादन्यासेति। क्षपितानि क्षिप्तानि दूरं निराकृतानीति यावत्। तमांसि तिमिराणि येन स तथोक्तेन क्षपक स्यात् क्षेप इति कविकल्पद्रुमः। अत्र क्षयितेत्यपि पठन्ति तत्र क्षयोऽस्य जात इति क्षयितः। इतोऽस्य जात इति इतः। क्षयितानि क्षयं प्राप्तानि तमांसि यस्मात् स तेनेत्यर्थः। येन चन्द्रेण क्षितिधरेषु पर्वतेषु मध्ये गुरोः श्रेष्ठस्य। गुरुस्तु गीष्पतौ श्रेष्ठे गुरुः पितरि दुर्भरे इति शब्दार्णवः। तथाच नरसिंहपुराणम्। मध्ये पृथिव्यामद्रीन्द्रो भास्वान् मेरुर्हिरण्मय इति। गुरुशब्देन पूज्यता च ध्वन्यते। सुमेरोर्मूर्ध्नि शृङ्गे अपक्षे शिरसि पादन्यासं किरणनिक्षेपं पक्षे तु चरणविन्यासं कृत्वा। पादा रश्म्यङ्घ्रितुर्यांशा इत्यमरः। विष्णोस्त्रिविक्रमस्य मध्यमं धाम मध्यमविक्रमाक्रान्तं व्योमेति यावत् क्रान्तमाक्रान्तम्। तदुक्तं वामनपुराणे। कृत्वा तु रूपं दितिजांश्च हत्वा प्रणम्य पर्वीन् प्रथमक्रमेण। महीं महीध्रैः सहितां सहार्णवां जहार रत्नाकरपत्तनैर्युताम्। ततः स नाकं त्रिदशाधिवासं सोमार्कऋक्षैरभिमण्डितं नभः। देवो द्वितीयेन जगाम वेगात् क्रमेण देवप्रियलोकमीश्वरः। क्रमस्तृतीयो न यदास पूरितः कृदातिकोपाद् दनुपुङ्गवस्य। पपात पृष्ठे भगवांस्त्रिविक्रमो मेरुप्रमाणेन तु विश्वरूपेणेति। सोऽयं चन्द्रोऽल्पशेषैः किञ्चिन्मात्रावशिष्टैः मयूखैः रश्मिभिर्विशिष्टः सन्। विशेषणे तृतीया। गगनादम्बरतलात् पतति। महतां प्रधानभूतानामपि जनानामत्यारूढिः दूरारोहणं अपभ्रंशः पतनमेव निष्ठा अन्तदशा यस्याः सा तथोक्ता भवति। निष्ठा निष्पत्तिनाशान्ता इत्यमरः। यथोक्तमुच्चैः पतनाय चेति। अत्रार्थान्तरन्यासः श्लेषश्चेत्यलङ्कारद्वयम्। मन्दाक्रान्ता वृत्तम्॥

अनसूया॥ पटीयमेव प्रविश्य॥ एव्वं णाम विसअपरम्मुहस्स जणस्स ण णिवडिदं जधा तेण रणा सउन्तलाए अणज्जं आचरिदं त्ति। (४६)

शिष्य॥ यावदुपस्थिता होमवेलां गुरवे निवेदयामि। इति निष्क्रान्तः। (४७)

अन॥ णं पहादा रअणी ता सिग्घं सअण परिच्चआमि अधवा लहु लहु उत्थिदावि किं करिस्सं ण मे उइदेसुं पहादकरणीएसुं हत्थपाआ पसरन्ति कामो दाणिं सकामो भोदु जेण असच्चसन्धे जणे पिअसही सुद्धहिअआ पद कारिदा। (४८)

सखा॥ अधवा ण तस्स राएसिणो अवराहो दुव्वासासावो क्खु

---

(४६) अनेति। अस्य पट सुचेलक पटी अल्पत्वविवक्षाया स्त्रीत्वम। स्त्री स्यात् काचिन्मृणाल्यादि विवक्षापचये यहील्यमर। नारीसखीत्यादिनिपातनादीप। सुचेलक पटोऽस्त्री स्यादित्यमर। पटी स्त्री पटभेदे स्यादिति मेदिनी। तस्या घर्षेण तदाच्छादनेन। एव्वमित्यादि। एव नाम विषयपराङ्मुखस्य जनस्य न निर्मतिः यथा तेन राज्ञा शकुन्तलाया मनार्यमाचरितमिति। नाम कुत्सने। नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने इत्यमर। विषयेषु इन्द्रियसुखेषु पराङ्मुखस्य अप्रवृत्तिमतो जनस्य सम्बन्धे एवमसदाचरण न निपतितमुपस्थितम। किमित्याह यथेत्यादि अनार्यं गर्हितम। आचरित व्यवहृतम्। अहत सवादस्यादिति भावः॥

(४७) शिष्य इति। यावदवधारणे। यावत तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमर। उपस्थिता प्रभूतामित्यर्थ॥

(४८) अनेति। णमित्यादि। ननु प्रभाता रजनी तच्छीघ्र शयन परित्यजामि अथवा लघु लघूत्थितापि कि करिष्यामि न मे उचितेषु प्रभातकरणीयेषु हस्तपाद प्रसरति काम इदानीं सकामो भवतु येनासत्यसन्धे जने प्रियसखी शुद्धहृदया मद कारिता। नन्विव धारणद्योतक। प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वित्यमर। प्रकृष्ट भात प्रकाशो यस्या सा प्रभाता अल्पावशेषा इति यावत्। लघु लघु शीघ्र शीघ्रम्। उचितेषु अभ्यस्तेषु। अभ्यस्तेऽप्युचित न्याय्यमिति यादव। प्रभातकरणीयेषु प्रात कृत्येषु। काम कन्दर्प। सकाम पूर्णकाम। येन हेतुना कामेन वा। असत्यसन्धे असत्यप्रतिज्ञे। सन्धा प्रतिज्ञा मर्यादेत्यमर। पद व्यवसायम्। पद व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमर। एष एव कामस्य मनोरथ आसीदिति भाव॥

अन॥ सविस्मयम॥ सहि कधं विअ। (५२)

प्रिय॥ सुणाहि दाणिं ज्जेव सुहसुत्तिआपुच्छणणिमित्तं सउन्दलाए सआसं गदह्मि। (५३)

अन॥ तदो तदो। (५४)

प्रिय॥ तदो ण लज्जावणदमुही परिस्सइअ सउन्दलं तादकस्सेण एव्वं अहिणन्दिदं वच्छे दिट्ठिआ धूमोवरुद्धदिट्ठिणोवि जजमाणस्स पावअस्स ज्जेव मुहे आहुदी णिवडिदा सुसिस्सपरिदिण्णा विअ विज्जा असोअणीआसि मे संवुत्ता अज्ज ज्जेव तुमं इसिपरिरक्खिदं करिअ भत्तुणो सआसं विसज्जेमि त्ति। (५५)

---

कौतूहलं निर्वर्त्तयितुम। प्रस्थाने भर्तृभवनयात्रायां यत कौतूहलम अभिलाषस्तन्निर्वर्त्तयितुं समापयितुम्॥

(५२) अनेति। सविस्मयं कथमेव स वृत्तमिति विस्मयेनेत्यर्थः। सहीत्यादि। सखि कथमिव॥

(५३) प्रियमिति। सुणेत्यादि। शृणु इदानीमेव सुखसुप्तिकाप्रच्छननिमित्तं शकुन्तलायाः सकाशं गतास्मि। सुखसुप्तिका सुखेन निद्रा तस्याः प्रच्छननिमित्तं जिज्ञासार्थं। सकाशं समीपम्॥

(५४) अनेति। तदो तदो ततस्ततः॥

(५५) प्रियमिति। तदो इत्यादि। ततः एना लज्जावनतमुखीं परिष्वज्य स्वयं तातकण्वेनैवमभिनन्दितं वत्से दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता सुशिष्यपरिदत्तेव विद्या अशोचनीयासि मे संवृत्ता। अद्यैव त्वामृषिपरिरक्षितां कृत्वा भर्तुः सकाशं विसर्जयामि। एना शकुन्तलाम। परिष्वज्य आलिङ्ग्य। आलिङ्गनं परिष्वङ्गः संश्लेष उपगूहनम्। अङ्कपालिः परीरम्भः क्रोडीकृतिरिति हेमचन्द्रः। एवमभिनन्दितमित्यभानन्दितम्। तत्प्रकारस्तु वत्से इत्यादि इतीत्यन्तम। वत्से पुत्रि। वत्सस्तर्णकपुत्रादिर्वर्षे वत्सन्तु वक्षसीति विश्वः। दिष्ट्या आनन्दे। दिष्ट्या समुपजोषमित्यानन्दे इत्यमरः। धूमेति। धूमेन उपरुद्धा आवृता दृष्टिर्दर्शनं यस्य स तस्य। यजमानस्य होतुः। अत्र पावकपातोचितायाः आहुतेरनन्यत्रपातात् योग्यकर्मणोपमा प्रदर्शितेन समालङ्कारः। यदुक्तं दर्पणे। सम स्यादानुरूप्येण श्लाघायोग्यस्य वस्तुन इति

अन ॥ सहि केण उण आचक्खिदो तादकस्सवस्स अअं वुत्तन्तो । (५६)

प्रियं ॥ अग्गिसरणं पविट्ठस्स किल सरीरं विणा छन्दोमईए वाआए । (५७)

अन ॥ सविस्मयम् ॥ कधं विअ । (५८)

प्रियं ॥ सुणाहि । (५९)

संस्कृतमाश्रित्य ॥ (६०)

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ (६१)

अन ॥ प्रियंवदामाश्लिष्य ॥ सहि पिअं मे पिअं किन्तु अज्ज

---

सुशिष्येण सत्पात्रेण परिगृहीता अधिगता विद्येव त्वं मे अशोचनीया न दुःखहेतुः संवृत्तासि । अत उक्तम् । कुशिष्यमध्यापयतः कुतो यश इति । विसर्ज्जयामि प्रेरयामि । इति अभिनन्दितमित्यन्वितम् ॥

(५६) अनेति । सहीत्यादि । सखि केन पुनराख्यातस्तातकण्वस्यायं वृत्तान्तः । आख्यात उक्तः ॥

(५७) प्रियमिति । अग्गीत्यादि । अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोमय्या वाचा । अग्निशरणमाहिताग्नीनां गृहम् । शरणं गृहरक्षित्रोरित्यमरः । किलेति श्रुतवार्त्तायाम् । वार्त्तासम्भाव्ययोः किलेत्यमरः । शरीरादेव वाक् प्रत्यक्षीभवति अत्र तु न तथेत्याह शरीरं विनेति । अदृश्यशरीरयेत्यर्थः दैव्येति यावत् । छन्दोमय्या पद्यात्मिकया । छन्दः पद्येऽभिलाषे चेत्यमरः । वाचा आख्यात इत्यनुषङ्गः ॥

(५८) अनेति । कधं विअ कथमिव ॥

(५९) प्रियमिति । सुणाहि शृणु ॥

(६०) संस्कृतेति । संस्कृतं वचनमिति शेषः ॥

(६१) दुष्यन्तेनेति । हे ब्रह्मन् विप्र । ब्रह्मा विप्रः प्रजापतिरित्यमरः । दुष्यन्तेन राज्ञा आहितं कृताधानमर्पितमिति यावत् । तेजः उपमाने सौसादृश्याय श्लेषाद् दीप्तिं वस्तुतः शुक्रम् । तेजः प्रभावे दीप्तौ च बले शुक्रेऽपीत्यमरः । भुवो भूमेः भूतये सम्पत्त्यै । भूतिर्भस्मनि सम्पत्तौ हस्तिशृङ्गारयोः स्त्रियामिति मेदिनी । दधानां बिभ्रतीं तनयाम् अग्निं गर्भे अभ्यन्तरे यस्याः सा तथोक्तां शमीं तरुविशेषमिव अवेहि अवगच्छ । यज्ञिरक्षणेषु शमीमामन्तःप्रविष्टो ज्वलतीति प्रसिद्धिः । अत्रोपमालङ्कारः ॥

ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं परिदोसं अणु-भवेमि। (६२)

प्रिय॥ सहि अह्मे कधं पि उक्कण्ठं विणोदइस्सामो सा दाणिं तवस्सिणी णिव्वुदा होदु। (६३)

अन॥ तेण हि एदस्सिं चूअसाहावलम्बिदे णारिएलसमुग्गए एद-णिमित्तं ज्जेव मए कालहरणक्खमा केसरगुण्डा णिक्खित्ता चिट्ठदि ता इमं णलिणीवत्तसङ्गदं करेहि जाव से अहं पि गोरोअणं तित्थमित्तिअं दुव्वाकिसलआइं मङ्गलसमालहणं विरएमि। (६४)

---

(६२) अनेति। आसिअं आनिद्र। सहीत्यादि। सखि प्रिय मे प्रिय किन्तु अद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि। नीयते भर्त्तृगृहं प्राप्यते। उत्कण्ठासाधारणमुत्कण्ठया सहितं। यथोत्कण्ठा तथा परितोषमनुभवामीत्यर्थः॥

(६३) प्रियमिति। सहीत्यादि। सखि वय कथमप्युत्कण्ठां विनोदयिष्याम इदानीं तपस्विनी निर्वृता भवतु। कथमपि कष्टसृष्टा उत्कण्ठा अदृष्टजनितमनोवेदनाम। रागे स्वलब्धविषये वेदना महती तु या। स शोचयी तु गात्राणां तासूत्कण्ठा विदुर्बुधा इत्युक्ते। विनोदयिष्यामो यापयिष्याम। तपस्विनी अनुकम्पार्हा। तपस्वी तापसे चानुकम्पार्हे चेति विश्व। निर्वृता सुस्थिता। निर्वृति सुस्थितावस्तगमने च सुख स्त्रिया मिति मेदिनी॥

(६४) अनेति। तेणेत्यादि। तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव मया कालहरणक्षमा केशरगुण्डा निक्षिप्ता तिष्ठति तदिमां नलिनीपत्रसङ्गतां कुरु यावदस्या अहमपि गोरोचना तीर्थ मृत्तिका दूर्व्वाकिसलयानि मङ्गलसमालम्भनं विरचयामि। चूतशाखावलम्बिते आम्रशाखायामवस्थापिते। नारिकेलसमुद्गके नारिकेलस्य सम्पुटके खोल इति प्रसिद्धे। समुद्गक सम्पुटक इत्यमर। केशरगुण्डा नागकेशरकुसुमरेणु। चाम्पेय केशरो नागकेशर काञ्चनाह्वय इत्यमर। गुण्डेति गुडिक वेष्टे रचे इति कवि कल्पद्रुम। स स्त्वाद इति च। स च स्त्रियामित्युक्तो स्त्रीत्वम। गुण्डिरत्र चूर्णार्थ। अतएव अनेकार्थत्वाच्चूर्णीकरणेऽपि यथा गुण्डयति हिङ्गुल लोक इति धातुदीपिका। इमां केशरगुण्डाम। नलिनीपत्रसङ्गता पद्मपत्रावच्छिन्नाम्। यावत् यत्कालमभिव्याप्य। अस्या शकुन्तलाया मङ्गलसमालम्भमित्यनेन सम्बन्ध। दूर्व्वाकिसलयानि दूर्व्वापल्लवान्। मङ्ग लाय समालभ्यते विलिप्यते अनेनेति मङ्गलसमालम्भनं मङ्गलगात्रानुलेपनमित्यर्थ। विर

प्रियम्वदा तथा करोति । अनसूया निष्क्रान्ता । (६५)

नेपथ्ये ॥ गौतमि आदिश्यन्तां शार्ङ्गरवशारद्वतमिश्राः वत्सां शकुन्तलां नेतुं सज्जीभवन्तु भवन्त इति । (६६)

प्रिय ॥ अणसूए तुवर तुवर एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दाविअन्ति । (६७)

---

चयामि कल्पयामि । समालम्भो विलेपनमित्यमरः । मङ्गलसमालम्भनमित्यत्र एकोन द्वाविंशतिवत् पञ्चाशत् दक्षिणायनमितिवत् हेत्वविधेयभावाच्छिङ्गवचनयोरतन्त्रता । गोरोचनादीनां मङ्गलत्वमाह मङ्गलवर्त्ते यथा । गच्छन् ददर्श रामेशो यात्रामङ्गलसूचकमित्यभिधाय दुग्धञ्च रोचनामाज्यमक्षत पायसं तथा । शालग्राम पक्वफलं स्वस्तिकं शर्करा मधु । मार्जारञ्च हयेन्द्रञ्च मेघपर्वतमूषकम् । मेघाच्छन्नस्य च रवेरुदयं चन्द्रमण्डलम् । कस्तूरीं कज्जलं तोयं हरिद्रां तीर्थमृत्तिकाम् । सिद्धान्नं सर्षपं दूर्वां विप्रबालञ्च बालिकामित्यादि ॥

(६५) प्रियमिति । तथा करोति विलेपनं विरचयति । उक्तं वस्तुजातं चूर्णयतीत्यर्थः ॥

(६६) नेपथ्य इति । आदिश्यन्तामाज्ञाप्यन्ताम् । शार्ङ्गरवशारद्वतमिश्रास्तदभिधाना गौरविता मुनयः । बहुत्वं गौरवात् । गौरवितास्त्वार्य्यमिश्रा इति भूरिप्रयोगः । किमादेष्टव्यमित्याकाङ्क्षायामित्यत्रमन्वेति । नेतुं भर्त्तृगृहमिति शेषः । सज्जीभवन्तु उद्युक्ता भवन्तु ॥

(६७) प्रियमिति । अणेत्यादि । अनसूये त्वरस्व त्वरस्व एते खलु हस्तिनापुरगामिन ऋषयः शब्दायन्ते । हस्तिनापुरं गमिष्यन्तीति हस्तिनापुरगामिनः । शब्दायन्ते शब्दं कुर्व्वन्ति । शब्दसुखकष्टादेरिति करणार्थे ङ्यः । अत्र हस्तिनापुरस्य तदानीमसद्भावमन्यमानः कश्चिदिमम्पपाठमाह तदसङ्गतम् । तद्धिनगरं दुष्मन्तराजधानीत्वेन महाभारते दर्शयते । यथा । तथेत्युक्त्वा तु ते सर्व्वे प्रतिष्ठन्त महौजसः । शकुन्तलां पुरस्कृत्य सपुत्त्रां गजसाह्वयमिति । गजसाह्वयं हस्तिनापुरम् । तथाच तत्रैव । इत्युक्त्वा तव पिता सोऽपि तथेत्यास्ते यतव्रतः । सोऽपि राजा स्वनगरं प्रस्थितो गजसाह्वयमिति । तथा निवृत्ते काश्यपे तस्मिन् समयेन महात्मनि । जगाम तमकस्तूर्णं नगरं नागसाह्वयमिति । अतएव त्रिकाण्डशेषः । नागाह्वं हस्तिनापुरम् । गजाह्वं हास्तिनञ्चेति । यत्तु दुष्मन्तान्वयप्रभवस्य सुहोत्रस्याभिधाय सुहोत्राद्धस्ती य इदं हस्तिनापुरं निर्म्मापयामासेति विष्णुपुराणे तद्राजावसाने अयोध्याया कुशस्थलस्याकारवत् स्थापनाभिप्रायकम् । अतएव महाभारतीय वंशानुकीर्त्तने दुष्मन्तस्य जन्म हस्ती य इदं हास्तिनपुरं स्थापयामासेत्यभिहितम् । स्थापनं विनाशा

अनसूया ॥ समालम्भनहस्ता ॥ निष्क्र ॥ सहि एहि गच्छम्ह । इति परिक्रामतः । (६८)

प्रिय ॥ विलोक्य ॥ एसा सुज्जोदए किदमज्जणा पडिच्छिदणीवारभाअणाहिं सोत्थिवाअणिआहिं तावसीहिं अहिणन्दीअमाणा चिट्ठदि सउन्तला ता उवसप्पह्म णं । इत्युभे तथा कुरुतः । (६९)

ततः प्रविशति यथानिर्द्दिष्टव्यापारा सपरिवारा शकुन्तला । (७०)

शकु ॥ भअवदीओ वन्दामि । (७१)

गौत ॥ जादे भत्तुणो बहुमाणसूहर्अं देवीसद्दं अहिगच्छ । (७२)

---

इत्यर्थम् । इत्यमेव रघुवंशीयअजराजविवाहसमयसमागतसुषेणराजराजधानीत्वेन वर्णितायाः अपि मथुरायाः शत्रुघ्ननिर्म्माणाभिधानं समाधेयम् ।

(६८) अनेति । समालम्भनहस्ता विच्छित्तिहस्ता पिष्टगोरोचनादिहस्तेति यावत् । विच्छित्तिस्तु कथायः स्यात्समालम्भनमित्यपीति त्रिकाण्डशेषः । सहीत्यादि । सखि एहि गच्छाव ॥

(६९) प्रियमिति । विलोक्य दृष्टिमभिनीय । एसेत्यादि । एषा सूर्योदये कृतमज्जना प्रतीष्टनीवाराभिः स्वस्तिवाचनिकाभिः तापसीभिरभिनन्द्यमाना तिष्ठति शकुन्तला तदुपसर्पाव एनाम् । सूर्योदये सति कृतमज्जनं स्नानं यया सा । तत्कालं सूर्योदयं विना नैव स्नानदानादिका क्रियेति । प्रतीष्टनीवाराभिर्गृहीततृण-धान्यतण्डुलाभिः । स्वस्ति आशीस्तद्वाचनार्थं स्थिता स्वस्तिवाचनिका । स्थितार्थे कण् । ताभिः । स्वस्त्याशीः क्षेमपुण्यादाविभ्यमरः । अभिनन्द्यमाना आद्रिय-माणा । तथा कुरुतः उपगच्छतः ॥

(७०) तत इति । यथेति कृतस्नानेत्यर्थः । सपरिवारा तापसीभिः परिवृता ॥

(७१) शकु इति । भअवदीत्यादि । भगवतीर्वन्दे प्रणमामि ॥

(७२) गौतमीति । जाद इत्यादि । जाते भर्त्तुर्बहुमानसूचकं देवीशब्द-मधिगच्छ । जाते पुत्रि । भर्त्तुर्बहुमानेनाल्पादरेण यत्सूचकं तस्य सूचक सूचक

तापस्यः॥ वीरप्पसविणी होहि। इत्याशिषो दत्त्वा गौतमीवर्ज्जं सर्व्वा निष्क्रान्ताः। (७३)

सख्यौ॥ उपगम्य॥ सम्मज्जणं दे भूदं। (७४)

शकु॥ साअदं पिअसहीणं इदो णिसीदध। (७५)

सख्यौ॥ उपविश्य॥ हला उज्जुआ दाव होहि जाव दे मङ्गलसमालहणं करेम्ह। (७६)

शकु॥ उइदं पि एदं अज्ज बहुमणिदव्वं जदो दुल्लहं दाव पुणो मे पिअसहीमण्डणं भविस्सदि। इति बाष्पं विसृजति। (७७)

---

देवीशब्दं देवीति संज्ञामधिगच्छ लभस्व। राज्ञः कृताभिषेका महिषी भवेत्यर्थः। देवी कृताभिषेकायामितरासु च भट्टिनीत्यमरः॥

(७३) तापस्य इति। वीरेत्यादि। वीरप्रसविनी भव। वीरं विक्रान्तं प्रसवितुं शीलं यस्याः सा वीरप्रसविनी। ग्रहादेर्णिनिति इनु। शूरो वीरश्च विक्रान्त इत्यमरः। गौतमीवर्ज्जं गौतमीं वर्ज्जयित्वा। द्वितीयायां चोपदायामिति णमुल्वाच्यम्। समासानुवृत्तेः समासश्च। त्वरा नेच्छन्त्यन्ये यथा सर्व्ववर्ज्जं रतिक्रियेति कामन्दकः॥

(७४) सख्याविति। समेत्यादि। सम्मज्जनं ते भूतम्। सम्मज्जनं मङ्गलस्नानं सर्व्वौषधिस्नानमिति यावत्।

(७५) शकु इति। स्वागतमित्यादि। स्वागतं प्रियसख्योः इतो निषीदताम्। स्वागतं सुखेनागतम्। प्रियसख्योरिति भावक्तान्तेन कर्त्तरि षष्ठी। प्रश्नोऽयम्। इतोऽस्मिन् निषीदतमुपविशतम्।

(७६) सख्याविति। हलेत्यादि। अयि ऋजुका तावद्भव यावत्ते मङ्गलसमालम्भनं कुर्व्व। ऋजुका अवक्रा। यावत् यत्कालमभिव्याप्य। मङ्गलसमालम्भनं मङ्गलार्थगात्रानुलेपनम्॥

(७७) शकु इति। उचितमित्यादि। उचितमप्येतदद्य बहुमन्तव्यं यतो दुर्लभं तावत् पुनर्मे प्रियसखीमण्डनं भविष्यति। उचितमभ्यस्तम्। अभ्यस्तेऽप्युचितं न्याय्यमिति यादवः। एतत् गात्रानुलेपनम्। बहुमन्तव्यं समादरणीयम्। मे इत्यस्य

सख्यौ ॥ सहि ण जुत्तं मङ्गलकाले रोदिदुं । (सख्यौ ॥ सखि न युक्तं मङ्गलकाले रोदितुम् ।) इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः । (७८)

प्रियं ॥ सहि आहरणारिहं दे रूवं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि । (७९)

प्रविश्य आभरणहस्तः ऋषिकुमारः ॥ इदमलङ्कारजातमलङ्क्रियतामायुष्मती । (८०)

सर्व्वा विलोक्य विस्मिताः । (८१)

---

प्रियसखीमण्डनमित्यनेनान्वयो न तु दुर्लभमित्यनेनापि एकमस्य कर्त्तरि षष्ठी प्रतिषेधात् । प्रियसखीमण्डनं प्रियसखीभ्यां वेशरचनम् । वाष्पं अस्रु । वाष्पावश्राश्रु इत्यमरः । विसृजति त्यजति ॥

(७८) सख्याविति । सहीत्यादि । सखि न युक्तं मङ्गलकाले रोदितं । मङ्गलकाले मङ्गलसमालम्भनकाले । अश्रूणि नेत्राम्बूनि । अश्रु नेत्राम्बु रोदनञ्चास्रमस्र चेत्यमरः । प्रसाधयतः वेशं रचयतः ॥

(७९) प्रियमिति । सहीत्यादि । सखि आभरणार्हं ते रूपं आश्रमसुलभैः प्रसाधनैर्विप्रकार्य्यते । आभरणार्हमलङ्कारार्हम् । यदाभरणेनैव शोभत इति भावः । आश्रमसुलभैराश्रमे विनायासेन लभ्यैः । प्रसाधनैः प्रसाध्यते वेशः क्रियते एभिस्तैः करणैः । आकल्पवेशौ नेपथ्यं प्रतिकर्म्म प्रसाधनमित्यमरः । विप्रकार्य्यते लोकनिकारं नीयते । निकारो विप्रकारः स्यादित्यमरः ।

(८०) प्रविश्येति । प्रवेशात्प्रागस्याभिधानासामर्थ्यादादौ प्रविश्येति पश्चाद्वाक्तिनिर्द्देशः । प्रविष्टपूर्व्वतया श्रुतवृत्तान्ततया वानुमानबलेन प्रवेशात्प्रागप्यनुभवात्तु युक्तोऽन्यत्र प्रथम व्यक्तिसमुद्देशः । अलङ्कारजातमाभरणसमूहः । एतेन प्रदर्शयति । जातं व्यक्तौषजन्मसु इति मेदिनी । अलङ्क्रियतां भूष्यताम् । आयुष्मती आयुः प्रशस्तिमती । शकुन्तलेत्यर्थः ।

(८१) सर्व्वा इति । विस्मिता जातविस्मया ।

गौत ॥ वच्छ हारीद कुदो इदं आसादिदं । (८२)

हारी ॥ तातकण्वप्रभावात् । (८३)

गौत ॥ किं माणसी सिद्धी । (८४)

हारी ॥ न खलु । श्रूयतां तत्रभवता कण्वेन वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । ततश्च । (८५)

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्व्वभागोत्थितै-
र्दत्तान्याभरणानि नः किसलयच्छायापरिस्पर्द्धिभिः ॥(८६)

---

(८२) गौतेति । वच्छेत्यादि । वत्स हारीत कुत इदमासादितम् । कुतः कस्मात् । इदमलङ्कारजातम् । आसादितं लब्धम् ।

(८३) हारीतेति । तातकण्वप्रभावात् अस्मत्पितृकल्पस्य महर्षेः शक्तेर्हेतोः । आसादितमित्यनुषङ्गः । प्रभावः शक्तितेजसोरिति विश्वः ।

(८४) गौतेति किमित्यादि । किं मानसी सिद्धिः । मानसी मनःकृता । सिद्धिर्निष्पत्तिः । सिद्धिर्निष्पत्तियोगयोरिति विश्वः । अलङ्कारजातस्येति शेषः ।

(८५) हारीतेति । न खलु नैव । मानसी निष्पत्तिरिति शेषः । शकुन्तलाहेतोः शकुन्तलाप्रसाधनार्थम् । वनस्पतिभ्यो वृक्षेभ्यः । वनस्पतिर्वृक्षमात्रे इति विश्वः । आहरत आसादयत । इति आज्ञप्ता वयमित्यन्वयः । ततः किमित्यपेक्षायां ततश्चेति ।

(८६) क्षौममिति । केनचित् तरुणा वृक्षेण इन्दुवत् चन्द्रमण्डलवत् पाण्डु सितपीतम् । सितपीतसमायुक्तः पाण्डुवर्णः प्रकीर्त्तित इति सुभूतिः । माङ्गल्यं मङ्गलकर्म्मणि हितं क्षौमं दुकूलं । क्षौमं दुकूलमित्यमरः । आविष्कृतं प्रकाशितम् । तथा केनचित् तरुणा अश्वत्थादिना चरणयोरुपरागे रञ्जने सुभगः सुन्दरः । सुन्दरेऽधिकभाग्ये च दुर्दिनेतरवासरे । सुरोपागे स्त्रीमति च सुभग इति शब्दार्णवः । लाक्षारसो लाक्षाद्रवो निष्ठ्यूत उद्गीर्णः । रङ्गादादौ विभे वीर्य्ये गुणे रागे

प्रियं ॥ शकुन्तलां विलोक्य ॥ हला कोडरसम्भवापि मञ्जरी पोक्खरमज्झं ज्जेव अहिलसदि । (८७)

गौत ॥ जादे दूमाए अब्भुववत्तीए सूइदा भत्तुणो गेहे अनुहोव्वा रायलच्छी । (८८)

शकु ॥ लज्जां नाटयति । (८९)

हारी ॥ यावदिमां वनस्पतिसेवामभिषेकार्थं मालिनीमवतीर्याय तत्रभवते कण्वाय निवेदयामि । इति निष्क्रान्तः । (९०)

---

द्रवे रस इत्यमरः । तथा अन्येभ्य तरुभ्यः आपर्श्वभोगं मणिबन्धपर्यन्त उत्थितैरुद्गतैः किसलयस्य पल्लवस्य छायां कान्तिं परिस्पर्द्धितुमनुकर्तुं शीलं येषां ते तैः किसलयच्छायापरिस्पर्द्धिभिः । छाया सूर्यप्रियाकान्तिप्रतिबिम्बमनातप इत्यमरः । वनदेवताया करतलैः कर्त्तृभिः भोगसभ्यं आभरणानि दत्तानि । वृत्तं शार्दूलविक्रीड़ितं नाम ।

(८७) प्रियमिति । हलेत्यादि । अयि कोटरसम्भवापि मधुकरी पुष्करमध्येवाभिलषति । कोटरसम्भवापि काष्ठादिविवरसम्भवापि पुष्करमधु पद्ममधु । विपद्मनराजीवपुष्कराम्भोरुहाणि चेत्यमरः । तथाश्रमसम्भवापि समाभरणान्यादद्यतीति गम्यते ।

(८८) गौतेति । जादेत्यादि । जाते अनया अभ्युपपत्त्या सूचिता भर्त्तुर्गेहे अनुभवितव्या राजलक्ष्मी । अनया अभ्युपपत्त्या उपयोगदशायामेव सौभाग्याविष्करणात्मकानुग्रहेण वनस्पतीनामितिशेषः । अभ्युपपत्तिरनुग्रह इत्यमरः । सूचिता अनुमापिता भर्त्तुर्गेहे राजलक्ष्मी राजसम्पद् अनुभवितव्या उपभोक्तव्या । उपभोगस्त्वनुभव इत्यमरः ॥

(८९) शकु इति । सुगमम् ॥

(९०) हारीति । वनस्पतिसेवां वनस्पतिकृतोपकारम् अभिषेकार्थं स्नानार्थं । अवतीर्याय गताय ॥

अन० ॥ सहि अणणुभूदभूसणो अअं जणो कधं तुमं अलङ्करेदि । (९१)

चिन्तयित्वा विलोक्य च ॥ चित्तपरिचएण दाणिं दे अङ्गेसु आहरणविणिओअं करेह्म । (९२)

शकु ॥ जाणामि वो णिउणत्तणं (९३)

सख्यौ ॥ नाट्येनाभरणानि विनियुञ्जाते । (९४)

ततः प्रविशति स्नानोत्तीर्णः कण्वः । (९५)

कण्व ॥ विचिन्त्य । (९६)

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
अन्तर्बाष्पभरोपरोधि गदितं चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ॥ (९७)

---

(९१) अनेति । सहीत्यादि । सखि अननुभूतभूषणोऽयं जनः कथं त्वा मलङ्करोति । अननुभूतभूषणः अदृष्टभूषणः ॥

(९२) चिन्तयित्वेति । चिन्तयित्वा अनुमाय । विलोक्य आभरणानि अङ्गानि च दृष्ट्वा । चित्रेति । चित्रपरिचयेनेदानीं ते अङ्गेष्वाभरणविनियोगं कुर्वः । चित्रस्य मनसः । परिचयेन ज्ञानेन । ममता यथावधार्यते तथेत्यर्थः । आभरणानां विनियोगं यथास्थाननिवेशनम् ॥

(९३) शकु इति । जाणेत्यादि । जानामि वो निपुणत्वम् । निपुणत्वमभिज्ञत्वम् । प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता इत्यमरः ॥

(९४) सख्याविति । नाट्येन अङ्गप्रदर्शनेन । विनियुञ्जाते परिधापयतः ॥

(९५) ततः इति । स्नानोत्तीर्णः स्नानानन्तरं मालिन्या उत्तीर्णः ॥

(९६) कण्व इति । विचिन्त्य शकुन्तलाभिरथानुमति कृत्वा ॥

(९७) यास्यतीति । अद्य शकुन्तला यास्यति भर्तृगृहमितिशेषः । इतिहेतो हृदयं मम उत्कण्ठया प्रगाढचिन्तया संस्पृष्टमधिष्ठितम् । तथा गदितं वचनं अन्तर्बाष्प

इति परिक्रामति । (९८)

सख्यौ ॥ हला सउन्तले अवसिदमण्डणासि सम्पदं परिहेहि खोमजुअलं । (९९)

शकु ॥ उत्थाय ॥ नाट्येन परिधत्ते । (१००)

गौत ॥ जादे एस दे आणन्दवाप्पपरिवाहिणा लोअणेण परिस्सजन्तो विअ गुरू उवत्थिदो ता समुदाआरं पडिवज्जस्स । (१०१)

शकु ॥ सव्रीडं वन्दनां करोति । (१०२)

---

यो बाष्पाणामश्रूणां मरोऽतिशयस्तस्य उपरोधि तद्विश्लेषव्याघातवत । अश्रातिशयोभर इत्यमर । तथा दर्शन नयन चिन्तया जड़ कर्माक्षमम । अरण्यमोक वन्य यस्य स तथोक्तस्य । ओक सद्माश्रयश्चौका इत्यमर । ममापि तावत् स्नेहादीदृश वैक्लव्यं विह्वलता विक्लवो विह्वल इत्यमर । गृहिणो गृहस्था नवैप्रथमाविर्भूतैस्तनयाविश्लेषदु खै तनयया सुतया विश्लेषात वियोगात् यानि दु खानि तै कथ न पीड्यन्ते क्लिश्यन्ते गुरूमेव पीड्यन्त इति भाव ॥

(९८) इतीति । सुगमम ॥

(९९) सख्याविति । हलेत्यादि । अयि शकुन्तले अवसितमण्डनासि साम्प्रत परिधेहि क्षौमयुगलम् । अवसितमण्डना समाप्तभूषणक्रिया । अलङ्कारस्त्वाभरण परिष्कारो विभूषणम् । मण्डनञ्चेत्यमर ॥

(१००) शकु इति । परिधत्ते क्षौमयुगलमिति शेष ॥

(१०१) गौतेति । जादेइत्यादि । जाते एष ते आनन्दबाष्पपरिवाहिणा लोचनेन परिष्वजमान इव गुरुरुपस्थित तत्समुदाचार प्रतिपद्यस्व । आनन्दबाष्पा आनन्दोद्भताश्रूणि तान् परिवहतीत्यानन्दबाष्पपरिवाहि तेन । शोकबाष्पोल्लेखे उष्णत्वरपि शोके द्विगुणीभविष्यतीत्यानन्दबाष्पपदम । लोचनेन परिष्वजमान नेत्रेणालिङ्गन् प्रगाढदृष्टिप्रसारणया विषयीकुर्वन्निति यावत । समुदाचार समुचिताचार वन्दनमिति यावत् । प्रतिपद्यस्व प्राप्नुहि कुर्विति यावत् ॥

(१०२) शकुइति । सव्रीड़ सलज्जम ॥

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैताना स्त्वां वह्नयः पावयन्तु ॥ (१०८)

यज्ञ ॥ प्रदक्षिणं करोति । (११०)

---

(१०८) अमी इति । वेदिं परित वेद्याः इतस्ततः । धिक्समयेति द्वितीया । क्लृप्तानि निर्दिष्टानि धिष्ण्यानि स्थानानि येषां ते । धिष्ण्यं स्थानाग्निसद्मस्विति मेदिनी । तथा समिद्वन्तो दह्यमानसमिधः । तथा प्रान्तेषु पार्श्वचतुष्टयेषु संस्तीर्णा कृतास्तरणा दर्भाः कुशा येषां ते । तथा हव्यानां देवतोद्देशेन हुतानां गन्धैः दुरितं पापमपघ्नन्तः शमयन्तः । हव्यकव्ये दैवपैत्र्ये इत्यमरः । वैतानाः यज्ञियाः । क्रतुविस्तारयोरस्त्री वितान मित्यमरः । वह्नयः संस्कृताग्नयस्त्वां पावयन्तु शुद्धिं नयन्तु । अत्र प्रथमतृतीयपादौ वातोर्म्म्याः । द्वितीयचतुर्थपादौ शालिन्याः इत्युपजातिर्नाम वृत्तम् । तदुक्तम् । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः । इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नामेति । अतएव पिङ्गलाचार्य्यकृतवृत्तानुपजातिप्रकरणे तथा शालिनीवातोर्म्मीपादयोरन्येषामल्पभेदानामपि प्रयोगानुसारेणोपजातयो द्रष्टव्या इति हलायुधेनोक्तम् । यद्यपि प्रथमतृतीयपादयोर्वातोर्म्मीपादत्वाङ्गीकारे द्वितीयपादस्य च शालिनीपादत्वाङ्गीकारे तेषां लघुपूर्व्वकत्वमनुचित मिव प्रतिभाति । वातोर्म्मीयं गदिताम्भौ तगौ ग इति वातोर्म्मीलक्षणात् मात्तौ गौ चेच्छालिनी लोकवेदे इति शालिनी लक्षणाच्च । तथापि वेदे तयोर्लघुपूर्व्वकतया अपि बहुश उपलम्भात् वेदाध्ययनाध्यापनाभ्यासोचितत्वोक्तत्वात्तत्तौ वैदिकवत् प्रयोग समुचितएव । यथाच प्रथमतृतीयपादौ अजोह्येको जुषमाणोऽनुशेते इति अपोभिद्य बहुधैकोऽनुगच्छन्नित्यादि वैदिकवत् । द्वितीयपादश्च जहात्येनां भुक्तभोगामजोऽन्य इति अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः इत्यादि वैदिकवत् द्रष्टव्यं ॥

(११०) यज्ञ इति । सुगमम् ॥

कण्वः ॥ वत्से प्रतिष्ठस्वेदानीम् । (१११)

सहदिक्षेपम् ॥ क्व नु ते शार्ङ्गरवशारद्वतमिश्राः । (११२)

शिष्यौ ॥ भगिन्य ॥ भगवन्निमौ स्वः । (११३)

कण्व ॥ वत्सौ भगिन्याः पन्थानमादेशयतम् । (११४)

शिष्यौ॥ इत इतो भवती । (११५)

सर्व्वे परिक्रामन्ति ॥ (११६)

कण्व ॥ भो भो सन्निहितवनदेवता स्तपोवनतरवः । (११७)

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्व्वैरनुज्ञायताम् ॥ (११८)

---

(१११) कण्व इति । प्रतिष्ठस्व गच्छ । प्रस्थानं गमनं गमइत्यमरः । प्रतिष्ठा निर्णयप्रकाशे संप्रव्यवाभ्यस्थ इत्यात्मनेपदम् ॥

(११२) सहदीति । सहदिक्षेपमितस्ततो दृष्टिं पातयन्नित्यर्थः । ते प्रागादिष्टा इत्याशयः । शार्ङ्गरवशारद्वतमिश्रा तु क कुत्र गताः । तु पृच्छायाम् ॥

(११३) शिष्याविति । इमौ कण्ठागतौ आवां स्वो वर्त्तावहे ॥

(११४) कण्व इति । भगिन्याः शकुन्तलायाः ।

(११५) शिष्याविति । अत्र मनुः । परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः । तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति चेति ॥

(११६) सर्व्वे इति । सुगमम् ॥

(११७) कण्व इति । सन्निहितेति । सन्निहिता उपस्थिता वनदेवता वनाधिष्ठात्री देवता येषु ते तपोवनतरवः ॥

(११८) पातुमिति । युष्मासु असिक्तेषु अकृतजलसेकेषु या शकुन्तला जलं प्रथमं पातुं न व्यवस्यति नेच्छति । अपिक्तेष्वपिबत्यपीतेष्विति मल्लिनाथसम्मतः पाठः किरातार्ज्जुनीयटीकायां दृष्टः तन्मते मकरन्दपाणा अपि कर्म्मविवक्षाया-

आकाशे ॥ रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमरीचितापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ (११९)

सर्वे ॥ सविस्मयमाकर्णयन्ति । (१२०)

---

मकर्मकत्वात्कर्त्तरि क्तो भावक्तान्तादर्श आदित्वादच्प्रत्ययो वा तत्तदर्थप्रतिपादकः । अस्मन्मते तु प्रौव्यगत्यदनार्थाड्डेचेति चकारेण कर्म्मभावकर्त्तृषा समुच्चयात्पानस्य चादनार्थान्तर्गतत्वात्कर्त्तरि क्तः समाधानतः । या प्रिय प्रीतिकरं मण्डनं भूषणं यस्याः सा तथोक्तापि स्नेहेन हेतुना भवतां पल्लवं नादत्ते भूषणाय न गृह्णाति । आदाङोऽस्वप्रसारे इत्यात्मनेपदम् । यस्याः शकुन्तलाया वो युष्माकमादौ प्रथमे कुसुमप्रवृत्तिसमये कुसुमानां पुष्पाणां प्रवृत्तेरुद्गमस्य समये उत्सवः परमानन्दो भवति । सेयं शकुन्तला पतिगृहं याति सर्व्वैर्युष्माभिरनुज्ञायतामनुमन्यताम् । वृत्तं शार्दूलविक्रीडितम् ॥

(११९) आकाशे इति । कोपि कमप्युद्दिश्य ब्रूते पठन् तदानीं वस्तुतो भूतामाकाशवाणीं रूपयति रम्येति । अस्याः शकुन्तलायाः पन्थाः गतिभूमिः कमलिनीभिः पद्मिनीभिः हरितैः पालाशवर्णैः पालाशो हरितो हरिदित्यमरः । सरोभिः कासारैः रम्यं मनोहरमन्तरं मध्यं यस्य सः । रम्यं मनोरमं इति विश्वः । तथा छायाप्रधाना द्रुमास्तरवश्छायाद्रुमाः । शाकपार्थिवादित्वान्मध्यपद-लोपः । तैर्नियमितः प्रशमितोऽर्कमरीचीनां रविकराणां तापो यस्मिन् स तथा कुशेशयानां कमलानां रजोभिः परागैः पवनचलितागतैरिति शेषः । मृदवः सुकु-माराः रेणवो धूलयो यस्य स तथोक्तः । रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयोरज इत्यमरः । तथा शान्तो मन्दोऽनुकूलो गम्यदिग्गतिश्च पवनो यत्र स तथाभूतश्च शिवः कल्याणकरश्च भूयात् । आशिषि टो । तथा चोक्तम् । वामे मधुरशाकुनी दृष्टः पल्लवितोऽम्बरे । अनुकूलोवहन् वायुः प्रयाणे शुभदः स्मृत इति । वसन्ततिलकं वृत्तम् ॥

(१२०) सर्व्वे इति । आकर्णयन्ति रम्येत्यादिवाक्यमिति शेषः ॥

शार्ङ्ग ॥ कोकिलरवं सूचयित्वा । भगवन् । (१२१)

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।

परभृतविरुतं कलं यतः प्रतिवचनीकृतमेभिरात्मनः ॥ (१२२)

गौत ॥ जादे णादिजणसिणिद्धाहिं अणुणादगमणासि तवोवणदेवदाहिं ता पणम भअवदीणं ॥ (१२३)

शकु ॥ सप्रणाम परिक्रम्य जनान्तिकम् ॥ हला पिम्बदे अज्जउत्तदंसणुस्सुआएवि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरोमुहा ण णिवडन्ति । (१२४)

---

(१२१) शार्ङ्गेति । सूचयित्वा आविष्कृत्य ॥

(१२२) अनुमतेति । भगवन्निति वाक्यस्यैवामन्त्रणपदेन योज्यम । इयं शकुन्तला वनवासेन एकत्र अरण्ये वासेन बन्धुभिः जातसौहार्दैस्तरुभिः तरुभिः अनुमतमनुज्ञातं गमनं यस्याः सा तथोक्ता भवतीति शेषः । यत एभिः तरुभिः कलं मधुरास्फुटं परं काके भिन्नं यत इति परभृत कोकिल । वनप्रिय परभृतः कोकिल पिक इत्यपीत्यमरः । तस्य विरुतं ध्वनिमात्मनः प्रतिवचनीकृतं उत्तरीकृतम् । ध्वनौ तु मधुरास्फुटे कलः इत्यमरः । वृत्तमिदं अपरवक्त्रं नाम । अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ इति । सङ्केतस्तु प्रागुक्तः ॥

(१२३) गौतेति । जादे इत्यादि जाते ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिस्तत्प्रणम भगवतीः । ज्ञातिजनस्य तातजनस्य स्निग्धाभिः स्नेहयुक्ताभिः । ज्ञातिस्तातसगोत्रयोरिति मेदिनी । स्निग्धस्तु वत्सलोऽपत्यस्नेहयुक्तजने भवेदिति शब्दरत्नावली । भगवती वनदेवता ॥

(१२४) शकु इति । जनान्तिकं त्रिपताककरेणापवार्येत्यर्थः । हलेत्यादि । सखि प्रियंवदे आर्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःखदुःखेन चरणौ मे पुरोमुखौ न निपततः । आर्यपुत्रस्य भर्तुः दर्शने उत्सुकायाः उत्कण्ठितायाः । आश्रमपदमाश्रमस्थानम् । दुःखदुःखेनात्यन्तकष्टेन । पुरोऽग्रतो मुखं ययोः तौ तथाविधौ ॥

प्रियं ॥ ण केवलं तुमं ज्जेव तवोवणविरहकादरा तुए उवट्ठिद विओअस्स तवोवनस्सवि अवत्थं पेक्ख दाव ॥ (१२५)

उग्गिलदब्भकवला मई परिच्चत्तणच्चणा मोरी ।
ओसरिअपण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ ॥ (१२६)

शकु ॥ स्मृत्वा ॥ ताद लदाबहिणीं दाव माहवीं आमन्तइस्सं । (१२७)

कण्व ॥ वत्से अवैमि ते तस्यां सौदार्द्दं इयं सा दक्षिणेपश्य । (१२८)

(१२५) प्रियमिति । णेत्यादि । न केवलं त्वमेव तपोवनविरहकातरा त्वयोपस्थितवियोगस्य तपोवनस्यापि अवस्था प्रेक्षस्व तावत् । तपोवनस्य विरहे त्यागे कातरा अधीरा । रहत्याग त्यागे इति कविकल्पद्रुमः । त्वयेति उपस्थित आसन्न त्वया वियोगो यस्य तत् तथोक्तस्य । अवस्थां दशाम ॥

(१२६) तामेव दशां दर्शयति उग्गिलेति । उद्गीर्णदर्भकवला मृगी परित्यक्तनर्त्तना मयूरी । अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रुमिव लता । उद्गीर्णा उद्वान्ता दर्भकवला कुशग्रासा यया सा तथोक्ता भवति मृगी । मयूरी च परित्यक्तनर्त्तना परिहृतनृत्यव्यापारा । तथा लता अपसृतानि पर्भादपगन्तुमारब्धवन्ति पाण्डुपत्राणि परिणतपत्राणि याभ्य स्ता स्तथोक्ता इत्य अश्रुवाम्पमिव मुञ्चन्ति किरन्ति । पाण्डुपत्रापगम एव वाष्पमोचनत्वेनोत्प्रेक्षित इत्युत्प्रेक्षालङ्कार । इय गाथा । तल्लक्षणमुक्तं प्राकतपिङ्गले यथा । पढमं बारहमत्ता बीए अट्ठारहेहि संजुत्ता ॥ जह पढमं तह तीअं दहपञ्च विहूसिआ गाहा ॥ अत्र गणनियमोपि तत्रोक्तो यथा । सत्तगणादीहन्ता जो ण लहू छट्ठणेह जो विसमे । तह गाहे बिअ अद्धे छट्ठ लहूअं विआणेहु । सप्तगणादीर्घान्ता जो न लघु षष्ठो नेह जो विषमे । तथा गाथाया द्वितीयार्द्धे षष्ठं लघु विजानीहि ।

(१२७) शकु इति । स्मृत्वा माधवीमितिशेष । तादेति । तात लताभगिनीं तावन्माधवीमामन्त्रयिष्ये । आमन्त्रयिष्ये आवपिष्ये ॥

(१२८) कण्व इति । अवैमि जानामि । तस्यां माधव्याम् । सौदार्द्दं सुहृत्वम् । सुपत्त्राद्यादित्वात् दयो पदयो दद्वयो वृद्धि ।

शार्ङ्ग ॥ कोकिलरवं सूचयित्वा । भगवन् । (१२१)

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।
परभृतविरुतं कलं यतः प्रतिवचनीकृतमेभिरात्मनः ॥ (१२२)

गौत ॥ जादे णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं ता पणम भअवदीणं ॥ (१२३)

शकु ॥ सप्रणामं परिक्रम्य जनान्तिकम् ॥ हला पिअंवदे अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरोमुहा ण णिवडन्ति । (१२४)

---

(१२१) शार्ङ्गेति । सूचयित्वा आविष्कृत्य ॥

(१२२) अनुमतेति । भगवद्भिरितिबहुवचनेनान्वयपदेन योज्यम् । इयं शकुन्तला वनवासेन एकत्र धर्मारण्ये वासेन बन्धुभिः ज्ञातिभूतैः एभिः तरुभिः अनुमतं गमनं यस्याः सा तथोक्ता भवतीति शेषः । यत एभिः तरुभिः कलं मधुरास्फुटं परैः काकैः भ्रियत इति परभृतः कोकिलः । वनप्रियः परभृतः कोकिलः पिक इत्यपीत्यमरः । तस्य विरुतं ध्वनिमात्मनः प्रतिवचनीकृतं उत्तरीकृतम् । ध्वनौ तु मधुरास्फुटे कल इत्यमरः । वृत्तमिदं अपरवक्त्रं नाम । अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ इति । अत्र हेतुस्तु प्रागुक्तः ॥

(१२३) गौतमीति । जाते इत्यादि जाते ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः तत् प्रणम भगवतीः । ज्ञातिजनस्य तातजनस्य स्निग्धाभिः स्नेहयुक्ताभिः । ज्ञातिस्तातसगोत्रयोरिति मेदिनी । स्निग्धस्तु वत्सलोऽस्य स्नेहयुक्तजने भवेदिति शब्दरत्नावली । भगवतीः वनदेवताः ॥

(१२४) शकु इति । जनान्तिकं त्रिपताककरेणापवार्येत्यर्थः । हलेत्यादि । सखि प्रियंवदे आर्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःख-दुःखेन चरणौ मे पुरोमुखौ न निपततः । आर्यपुत्रस्य पत्युः दर्शने उत्सुकाया उत्कण्ठितायाः । आश्रमपदमाश्रमस्थानम् । दुःखदुःखेनातिकष्टेन । पुरोमुखौ मुखं ययो तौ अग्राभिमुखौ ॥

प्रियं ॥ ण केवलं तुमं ज्जेव तवोवणविरहकादरा तुए उवट्ठिद विओअस्स तवोवणस्सवि अवत्थं पेक्ख दाव ॥ (१२५)

उग्गिलदब्भकवला मई परिच्चत्तणच्चणा मोरी ।
ओसरिअपाण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ ॥ (१२६)

शकु ॥ स्मृत्वा ॥ ताद लदाबहिणीं दाव माहवीं आमन्तइस्सं ।
(१२७)

कण्वः ॥ वत्से अवैमि ते तस्यां सौहार्द्दं इयं सा दक्षिणे पश्य । (१२८)

---

(१२५) प्रियमिति । णेत्यादि । न केवलं त्वमेव तपोवनविरहकातरा त्वयोपस्थितवियोगस्य तपोवनस्यापि अवस्थां प्रेक्षस्व तावत् । तपोवनस्य विरहे त्यागे कातरा अधीरा । रहस्तु त्यागे इति कविकल्पद्रुमः । त्वयेति उपस्थित आसन्न स्त्वया वियोगो यस्य तत् तथोक्तस्य । अवस्थां दशाम् ॥

(१२६) तामेव दशां दर्शयति उग्गिलेति । उद्गीर्णदर्भकवला मृगी परित्यक्तनर्त्तना मयूरी । अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः । उद्गीर्णा उद्वान्ता दर्भकवला कुशग्रासा यया सा तथोक्ता भवति मृगी । मयूरी च परित्यक्तनर्त्तना परिहृतनृत्यव्यापारा । तथा लता अपसृतानि पतितुमारब्धानि पाण्डुपत्राणि परिणतपत्राणि याभ्य स्ता तथोक्ताः सत्य अश्रुवाष्पमिव मुञ्चन्ति किरन्ति । पाण्डुपत्रापगम एव वाष्पमोचनत्वेनोत्प्रेक्षित इत्युत्प्रेक्षालङ्कारः । इयं गाथा । तल्लक्षणन्तु प्राकृतपिङ्गले यथा । पढमं बारहमत्ता बीए अट्ठारहेहिं संजुत्ता ॥ जह पढमं तह तीअं दहपञ्च विहूसिआ गाहा ॥ अत्र गणनियमोपि तत्रोक्तो यथा । सत्तगणा दीहन्ता जो ण लहू छट्ठणेह जो विसमे । तह गाहे विअ अद्धे छट्ठ लहूअं विआणेहु । सप्तगणा दीर्घान्ता जो न लघु षष्ठो नेह जो विषमे । तथा गाथाया द्वितीयार्द्धे षष्ठं लघुं विजानीहि ।

(१२७) शकु इति । स्मृत्वा माधवीमितिशेष । तादेति । तात लताभगिनीं तावन्माधवीमामन्त्रयिष्ये । आमन्त्रयिष्ये आपृच्छे ॥

(१२८) कण्व इति । अवैमि जानामि । तस्यां माधव्याम् । सौहार्द्दं सुहृद्भावम् । उपस्थाकादित्वात् द्वयो. पदयो वृद्धि ।

शकु ॥ उपेत्य लतामालिङ्ग्य ॥ लदाबहिणि पच्चालिङ्गस्स मं साहामएहिं बाहुहिं अज्ज पहुदि दूरवत्तिणी क्खु दे भविस्सं । तादं अवं विअ इमं तुए चिन्तणीआ । (१२९)

कण्व ॥ वत्से । (१३०)

सङ्कल्पितं प्रथममेव मया तवार्थे
भर्त्तारमात्मसदृशं सुकृतैर्गतासि ।
अस्यास्तु सम्प्रति वरं त्वयि वीतचिन्तः
कान्तं समीपसहकारमिमं करिष्ये ॥ (१३१)

तदितः प्रस्थानं प्रतिपद्यस्व । (१३२)

---

(१२९) शकु इति । लतामित्युभयत्रान्वेति । अद्येत्यादि । लताभगिनि प्रत्यालिङ्ग मां शाखामयैः बाहुभिः अद्यप्रभृति दूरवर्त्तिनी खलु ते भविष्यामि । तात अहमिव इयं त्वया चिन्तनीया । शाखामयैः शाखात्मकैः मयट् तद्रूप इति मयट् । अद्येति । अद्यप्रभृतीत्यव्ययीभावेति निपातित तथाप्यलोपेऽव्ययीय सप्तमीविभक्त्यर्थे अद्यादि प्रभृतीत्यर्थः । अहमिव चिन्तनीया नियतस्मरणाय चिन्तनीया ॥

(१३०) कण्व इति । सुगमम् ॥

(१३१) सङ्कल्पित मिति । मया प्रथम त्वदर्थमेव सङ्कल्पित चिन्तितमात्मसदृश मनुरूपं भर्त्तारं स्वगुणैः निजसौन्दर्यादिभिः हेतुभिः गतासि प्राप्तासि सम्प्रति तु त्वयि वीतचिन्तो विगतभावनोऽहं कान्तं मनोहरमिमं समीपसहकारं सन्निकट मतिसौरभचूतम् । आम्रचूतो रसालोऽसौ सहकारोऽतिसौरभ इत्यमरः । अस्या माधव्या वरं वोढारम् । वरौ जामातृवोढाराविति वैजयन्ती । अथवा वरं भजनीयं । वृतूसम्भक्ताविति कविकल्पद्रुमः । करिष्ये ।

(१३२) तदिति । तत् तस्मात् । इत पथ्य मनेनेति भावः । प्रस्थानं गमनम् । प्रतिपद्यस्व प्राप्नुहि ।

शकु॥ सख्यावुपेत्य॥ हला एसा दोसं पि वो हत्थे णिक्खेवो। (१२३)

सख्यौ॥ अअं जणो दाणिं कस्स हत्थे समप्पिदो। इति बाष्पं विसृजतः। (१२४)

कण्व॥ अनसूये प्रियंवदे अलं रुदितेन ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्त्तव्या। (१२५)

इति सर्व्वे परिक्रामन्ति। (१२६)

शकु॥ विलोक्य॥ ताद एसा उडअपज्जन्तचारिणी गब्भमन्थरा मिअवहू जदा सुहप्पसवा भविस्सदि तदा मे कम्पि पिअणिवेदअं विसज्जइस्ससि मा एदं विसुमरिस्ससि। (१२७)

कण्व॥ वत्से नेदं विस्मरिष्यामि। (१२८)

---

(१२३) शकु इति। हलेत्यादि। अयि एषा द्वयोरपि युवयो र्हस्ते निक्षेप एषा माधवी। निक्षेपो निक्षिप्ता॥

(१२४) सख्याविति। अयमित्यादि। अयं जन इदानीं कस्य हस्ते समर्पितः। अयमित्यात्मानं निर्दिशति। युगपदेव द्वे आत्मानमात्मानं निर्दिशतीत्ययमित्येकवचनम्। बाष्पमस्रु॥

(१२५) कण्व इति। रुदितेनेत्यलमर्थेन तृतीया। गद्गदतनये॥

(१२६) इतीति। इति एवमुक्ते सतीत्यर्थः॥

(१२७) शकु इति। तातेत्यादि। तात एषा उटजपर्य्यन्तचारिणी गर्भभारमन्थरा मृगवधू र्यदा सुखप्रसवा भविष्यति तदा मे कमपि प्रियनिवेदक विसर्ज्जयिष्यसि मा इद विस्मरिष्यसि। उटजपर्य्यन्ते उटजसीम्नि चरितुं शीलं यस्या सा। गर्भस्य भारेण गौरवेण मन्थरा मन्दगामिनी। मन्दगामी तु मन्थर इत्यमर। तदेत्यादि। तदा प्रियनिवेदकं प्रियवार्त्तावहं कमपि पुरुषं मे मम सम्बन्धे विसर्ज्जयिष्यसि प्रेरयिष्यसीत्यन्वय। विस्मरिष्यसीति माडीवेति विकल्पान्न टी॥

(१२८) कण्व इति। सुगमम्॥

शकु ॥ गतिभेदं रूपयित्वा ॥ अम्मो को णु क्खु एसो पदक्कन्तो विअ मे पुणो पुणो वसणन्ते सज्जदि । इति पराऽऽवृत्यावलोकयति ॥ (१३९)

कण्व ॥ वत्से । (१४०)

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्द्धितको जहाति
सोऽयं न पुत्त्रकृतकः पदवीं मृगस्ते ॥ (१४१)

शकु ॥ वच्छ किं मं सहवासपरिच्चाइणीं अणुवन्धेसि णं अचिरप्पसूदोवरदाए जणणीए विणा जधा मए वड्ढिदोसि तधा दाणिं पि मए विरहिदं तादो तुमं चिन्तइस्सदि ता णिवत्तस्स । इति रुदती प्रस्थिता ॥ (१४२)

---

(१३९) शकु इति । गतिभेदं गतिविघ्नं । अम्मो इत्यादि । अम्मो को नु खल्वेष पदाक्रान्त इव मे पुनः पुनः वसनान्ते सजते । नुखलुभ्यां वितर्कगर्भसम्बोद्योत्यते । वसनान्ते वस्त्रान्ते सजते लगति । सञ्ज दंशेति नलोपः । पराहृत्य आवृत्य ॥

(१४०) कण्व इति । सुगमम् ॥

(१४१) यस्येति । त्वया यस्य मृगस्य कुशानां सूचिभिः शिखाभिः विद्धे मुखे सूचिर्नृत्यप्रभेदेऽपि व्यधनीशिखयोरपीति इति कोषः । व्रणविरोहणं व्रणविनाशि इङ्गुदीनां तापसतरूणां तैलं मदुफलसम्भवस्नेहो न्यषिच्यत सिक्तम् श्यामाकानां तृणधान्यविशेषाणां मुष्टिभिः परिवर्द्धितको ऽल्पपरिवर्द्धितः सोऽयं पुत्त्रकृतकः कृत्रिमपुत्त्रभूतः । सामासिकनिर्देशनियमाभावात् विशेषणस्य प्राङ्निपातः । कृतकं स्यात् कृत्रिमे लक्षणपदे चाप्यसम्भवे । पुत्त्रभेदे त्रिलिङ्गे त्रिष्विति मेदिनी । मृगस्ते तव पदवीं पन्थानं न जहाति न त्यजति ॥

(१४२) शकु इति । वच्छेत्यादि । वत्स किं मां सहवासपरित्यागिनीमनु बध्नासि अचिरप्रसूतोपरतया जनन्या विना यथा मया वर्द्धितोऽसि तथेदानी-

कण्व ॥ वत्से अलं रुदितेन स्थिरा भव इतः पन्थानमालोकय । (१४३)

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
वाष्पं कुरु स्थिरतया शिथिलानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ (१४४)

शिष्यौ ॥ भगवन्नोदकान्तं स्निग्धोऽनुगम्यत इति श्रूयते तदिदं सरस्तीरम् अत्र नः सन्दिश्य प्रतिगन्तुमर्हसि । (१४५)

---

मपि मया विरहितं तात त्वां चिन्तयिष्यति तन्निवर्त्तस्व । अहेति । उद्घातवेकृत वासं परित्यक्तुं शीलं यस्याः सा ताम । युजभूजेत्यादि बक्षष्यात् शिणि चजो· कगाविति जस्य ग । अनुश्मासि अनुयासि । अतएवामर । दोषोत्पादेऽनुबन्ध स्यात् प्रकृत्यादिषु मश्वरे । सख्यानुयायिनि शिशौ प्रकृतस्यानिवर्त्तन इति । अचिरं सद्य प्रसूतं यया सा अचिरप्रसूता तथोक्ता मत्युपरता अचिरप्रसूतोपरता तथा । मया विरहितं मयर त्यक्तम् । निवर्त्तस्व प्रतिगच्छ ॥

(१४३) कण्व इति । सुगमम् ॥

(१४४) उत्पक्ष्मेति । उन्नत पक्ष्म लोमावली ययो स्ते तयो र्नयनयो र्नेत्रयोरुपरुद्धा व्याहता वृत्ति र्विषयप्रवृत्ति दर्शनमिति यावत् येन स तथोक्तं वाष्पं नेत्राम्बु कर्म्मं स्थिरतया स्थैर्य्येण शिथिलो मन्दीभूतो अनुबन्ध प्रवृत्ति र्यस्य स तथोक्तं कुरु खलु यस्मात् अलक्षितोऽदृष्टो नतोन्नतभूमिभागो निम्नोन्नतभूमिभागो यत्र स तस्मिन् अस्मिन् मार्गे ते तव पदानि चरणविन्यासा विषमीभवन्ति न समीभवन्ति स्खलन्तीति यावत् ॥

(१४५) शिष्याविति । ओदकान्तम् आ उदकान्तं उदकसमीपपर्य्यन्त मिति यावत् । अन्तं स्वरूपे नाशे ना न स्त्री मेचेऽन्तिके त्रिष्विति मेदिनी । स्निग्धः स्नेहास्पदजन । श्रूयत इति । तथा च श्रुति । ओदकान्तं प्रियं प्रोथमनुव्रजेदिति । नो अस्माकं सम्भ्रे । सन्दिश्य सन्देशं कृत्वा ॥

कण्व ॥ तेन सौम्ये चीरिच्छायामाश्रयाम । (१४६)

सर्वे तथा नाटयन्ति । (१४७)

कण्व ॥ किन्नु खलु तत्रभवतो दुष्मन्तस्य युक्तरूपं सन्देष्टव्यम् । इति चिन्तयति । (१४८)

अन ॥ सहि अस्समपदे ण अत्थि कोवि चित्तवन्तो जो तए विरहिज्जन्तो ण ताम्मदि पेक्ख दाव । (१४९)

१७ पुडइणिवत्तन्तरिथं वाहरिओवि ण हु वाहरेदि पिअं ।
मुहउव्वूढमिणालो तइ दिट्ठिं देइ चक्काओ ॥ (१५०)

---

(१४६) कण्वइति । चीरिच्छायां चीरिणो घटस्य छायाम । यद्यपि न्यग्रोधो डुम्बराश्वत्थपारिसप्लक्षपादपा । पञ्चैते चीरिणो वृक्षा सौम्या त्वक पञ्चवल्कमिति राजनिर्घण्टस्तथापीह घनच्छायतया ग्रीष्मसमयौचित्यात न्यग्रोधमेव प्रतिपादयति चीरिशब्द । तथाप्युक्तम् । अर्थात्प्रकरणाल्लिङ्गादौचित्याद्देशकालत । शब्दार्थास्तु विभिद्यन्ते न रूपादेव केवलादिति ॥

(१४७) सर्वेइति । तथा चीरिच्छायोपवशनम् ॥

(१४८) कण्वइति । युक्तरूपमनुरूपम । किमुखलुभ्यां सन्तिक प्रश्नोद्योत्यते । किमु प्रश्नवितर्कयोरिति मेदिनी ॥

(१४९) अनेति । सखीत्यादि । सखि आश्रमपदे नास्ति कोपि चित्तवान् यस्त्वया विरह्यमाणो न ताम्यति प्रेक्षस्व तावत् । चित्तवान् चेतन । विरह्यमाणस्त्यज्यमान । रहत्यागे इति कविकल्पद्रुम । ताम्यति खिद्यति । प्रेक्षस्व दर्शयिष्यमानमिति शेष ॥

(१५०) तदर्शयति पुडेत्यादि । पुटकिनीपत्रान्तरिता व्याहृतोपि न हि व्याहरति प्रियां । मुख उद्व्यूढमृणाल त्वयि दृष्टिं ददाति चक्रवाकः । पुटकिन्या पद्मिन्या पत्रेणान्तरितां व्यवहिताम् । नालिकिनी पुटकिनी बिसनाखिय पद्मिनीत्युत्पलिनी । व्याहृतोपि आहूतोपि प्रिययेतिशेष । चक्रवाक प्रिया न व्याहरति प्रतिवक्ति । अपितु मुख उद्व्यूढ उत्त मृणाल येन स तथोक्त सन् त्वयि दृष्टिं ददाति त्वामीक्षते । इयं गाथा । लक्षणन्तु प्रागुक्तम् ॥

कण्व ॥ वत्स शार्ङ्गरव इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्याभिधातव्यः । (१५१)

शार्ङ्ग ॥ आज्ञापयतु भवान् । (१५२)

कण्व ॥

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम् ।
सामान्यप्रतिपत्तिपूर्व्वकमियं दारेषु दृश्या त्वया —
भाग्याधीनमतःपरं न खलु तत् स्त्रीबन्धुभिर्याच्यते ॥ (१५३)

शार्ङ्ग ॥ गृहीतोऽयं सन्देशः । (१५४)

---

(१५१) कण्व इति । पुरस्कृत्य अग्रेकृत्वा व्यसर्गयन्तुकारेति समासत्वेन क्त्वो ल्यप् । मद्वचनात् मदुक्तत्वेत्यर्थः । अभिधातव्यो वक्तव्यः ॥

(१५२) शार्ङ्गेति । सुगमम् ॥

(१५३) अस्मानिति । अस्मान् संयमधनान् संयमस्तप एव धनं येषां ते तथोक्तान् । तपःप्रभाविन इति यावत् । साधु विचिन्त्य सम्यगवधार्य्य एतेनावश्यकोपत्वमात्मनः प्रकटितं । तथा आत्मनः स्वस्य कुलं वंशञ्च उच्चैर्महत् अजातदोषलेशमितियावत् । महत्युच्चैरित्यमरः । विचिन्त्य । अन्यथा पक्षपातितादोषप्रसक्तिरिति भावः । तथा त्वयि अस्याः शकुन्तलाया या मातृसाक्षादनुभूता स्नेहप्रवृत्तिं प्रणयपातं कथमपि केनापि प्रकारेण अबान्धवकृता बान्धवजनैरजनिताञ्च विचिन्त्य । अन्यथा [illegible]ता स्यादित्याशयः । इयं शकुन्तला दारेषु पत्नीषु मध्ये सामान्यप्रतिपत्तिपूर्व्वकं [illegible]पूर्व्वकम् । प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च । सम्प्राप्तौ च प्रबोधे च पदप्राप्तौ च योषितोरिति मेदिनी । त्वया दृश्या द्रष्टव्या । कृदुदन्तात् क्यप् । अत परमितोऽधिकं भाग्याधीनं दैवायत्तं तत् खलु स्त्रीणां बन्धुभिः पित्रादिभिर्न याच्यते प्रार्थ्यते । इतोऽधिकार्थं नाभ्यर्थये इति भावः ॥

(१५४) शार्ङ्गेति । गृहीतो विदितः । सन्देशः संवादः ॥

कण्व ॥ शकुन्तलां विलोक्य ॥ वत्से त्वमिदानीमनुशासनीयासि वनौकसोऽपि वयं लोकज्ञा एव । (१५५)

शार्ङ्ग ॥ भगवन् न खलु कश्चिदविषयो नाम धीमताम् (१५६)

कण्व ॥ सा त्वमितः पतिगृहं प्राप्य । (१५७)

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ (१५८)

---

(१५५) कण्व इति । अनुशासनीया उपदेष्टव्या । ननु वन्यव्यापारस्य महर्षिकुलपतेः कथं वधूपदेशपरिज्ञानमित्यत आह वनौकस इति । वनमेव ओकः सद्म येषां ते वनौकसः । लोकाचारमपश्यन्तोऽपीत्यर्थः । लोकज्ञा लौकिकाचारं जानीम एव । योगबलेनेति भावः ॥

(१५६) शार्ङ्गेति । न खलु नैव । अविषयो अज्ञातः । विषयो यस्य यो ज्ञात इत्यर्थः । धीमतां बुद्धिप्रचलितानाम् । तथाच धीमन्तो नाम बुद्धिबलेनैव सर्वमनुभवन्तीति भावः ॥

(१५७) कण्व इति । सा शासनीया त्वम् । इतः आश्रमात् । प्राप्येति श्लोकीयक्रियाभिरन्वितम् ॥

(१५८) शुश्रूषस्वेति । गुरून् गुरुजनान् श्वशुरादीन् शुश्रूषस्व परिचर । शृणोतेः सन् । धोऽज्झनिग्रहगाम् दीर्घः । ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदम् । समानः एकः पतिर्यस्याः सा सपत्नी । समानस्य सादेशः । नित्यं सपत्न्यादिषु इति ङीप् नकारश्च । सपत्नी शाठ्यम् इति सपत्नीजनो भर्तुर्दारान्तरं तस्मिन् प्रियसख्या वृत्तिमाचारं कुरु । विप्रकृतापि निकृतापि तिरस्कृतापीति यावत् । निकारो विप्रकार इत्यमरः । भर्तुरिति शेषः । रोषणतया क्रुद्धतया भर्तुः प्रतीपं पराङ्मुखं वाममाचारं वा । प्रतिपीम्य पराङ्मुखे । मायान्तो स्त्रीवलिङ्गं वामे इति यदाधि । मास्मगमः न याहि । वाम

गौतमी वा किं मन्यते । (१५९)

गौत ॥ एत्तिओ क्खु वहूजणे उवदेसो । जादे एदं क्खु हिअए करेहि मा विसुमरिस्ससि । (१६०)

कण्वः ॥ वत्से एहि परिष्वजस्व मां सखीजनञ्च । (१६१)

शकु ॥ ताद इदो ज्जेव किं पिअसहीओ णिवत्तिस्सन्ति ।(१६२)

कण्व ॥ वत्से इमे अपि प्रदेये तन्न युक्तमनयोस्तत्र गन्तुं त्वया सह गौतमी गमिष्यति । (१६३)

---

मातङ्ग वारणे इत्यमरः। अमेति मात्रास्तापि यड्‌णाह्नामागमः। तथा भोगेषु सुखेषु। भोगः सुखे स्त्र्यादिभृतावित्यमरः। अनुत्सेकिनी अनुद्धताशिनी सती परिजने परिचारकजने भूयिष्ठं बहुतरं दक्षिणा सरला भव। दक्षिणे सरलोदारावित्यमरः। एवमनेन प्रकारेण युवतयः प्रमदाः। प्रमदा चेति विज्ञेया युवतिश्च तथा स्मृतेति भागुरिः। गृहिण्या गेहकार्य्यकुशलाया पदं व्यवसायं यान्ति। गृहिणी स्त्रिया। भार्य्यायाञ्च गेहकार्य्यकुशलायामिति शब्दाब्धिः। वामा एतद्विपरीताचारिण्यः कुलस्य आधयो व्यसनभूता भवन्तीति शेषः। आधि र्मानसपीडायां प्रत्याशायाञ्च बन्धके। व्यसने चाप्यधिष्ठान इति विश्वः। अत्र गृहिणीपदं यान्तीति साधर्म्म्येण वामा इत्यादि वैधर्म्म्येणार्थान्तरन्यासोलङ्कारः। तदुक्तं प्रकाशे। सामान्यं वा विशेषो वा तदन्येन समर्थ्यते यत्र सोऽर्थान्तरन्यासः साधर्म्म्येणेतरेण वेति। वृत्तं शार्दूलविक्रीडितम्॥

(१५९) गौतमीति। किं मन्यते गौतम्या किं मतमित्यर्थः।

(१६०) गौतेति। एत्तिअमित्यादि। एतावान् खलु वधूजने उपदेशः। जाते एतत् खलु हृदये कुरु मा विस्मरिष्यसि। वधूजने नवोढस्त्रीजने। विधू- स्नुषानवोढस्त्रीभार्य्याप्रकाङ्गनासुचेति विश्वः। एतमुपदेशम्। हृदये कुरु धारय॥

(१६१) कण्व इति। परिष्वजस्व आलिङ्ग। स्वनूज दनुयेति न लोप।

(१६२) शकु इति। तादेत्यादि। तात इत एव किं प्रियसख्यौ निवर्त्तिष्येते। निवर्त्तिष्येते प्रतिगमिष्यत॥

(१६३) कण्व इति। प्रदेये प्रदानार्हे अनूढे इति यावत्॥

शकु ॥ पितुरङ्कमाश्लिष्य ॥ कधं दाणिं तादस्स अङ्कादो परिब्भट्टा मलअपव्वदादो उम्मूलिदा चन्दनलदा विअ देसन्तरे जीविदं धारइस्सं । (१६४)

कण्व ॥ वत्से किमेवं कातरासि । (१६५)

अभिजनवतो भर्त्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ (१६६)

---

(१६४) शकु इति । अङ्कम् उत्सङ्गम् । उत्सङ्गचिह्नयोरङ्क इत्यमरः । आश्लिष्य आलिङ्ग्य । कथमित्यादि । कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयपर्वतादुन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि । अङ्कात् क्रोडात् । परिभ्रष्टा चलिता । उन्मूलिता उत्पाटिता । धारयिष्यामि अहमिति शेषः । चन्दनलतापि मलयादन्यत्र नीता न जीवतीति प्रसिद्धिः ॥

(१६५) कण्व इति । किं कथम् । कातरा अधीरा ॥

(१६६) अभीति । अभिजनवतः कुलप्रशस्तिमतः ख्यातिमतो वा । अभिजनः कुले ख्याताविति विश्वः । भर्त्तुर्दुष्मन्तस्य श्लाघ्ये गौरविते । गौरविताश्लाघ्यमिश्रं श्लाघ्यास्वभवन्मुख्या इति त्रिकाण्डशेषः । गृहिणीपदे गृहिणीव्यवसाये स्थिता वर्त्तमाना तथा अस्य भर्त्तुर्विभवेन सम्पत्त्या गुरुभिर्महद्भिः । गुरुर्महति मान्यवदिति विश्वः । कृत्यैः कार्य्यैः प्रतिक्षणं क्षणे क्षणे आकुला व्यस्ता च सती । व्यस्ते त्वप्रगुणाकुलावित्यमरः । प्राची पूर्व्वा दिक् । प्राच्यवाची प्रतीच्यस्ता पूर्व्वदक्षिणपश्चिमा इत्यमरः । पावनं पवित्रताकारणमर्कं दिवाकरमिव । तथा च पवित्रताकारणाय तस्मै शुद्धात्मने नम इति सूर्य्याधिकारे विष्णुपुराणम् । अचिरात्पावनं पवित्रम् । अस्मिंस्तु पक्षे अर्को न विवक्षितः । तनयं पुत्रं प्रसूय उत्पाद्य हे वत्से त्वं मम विरहजां मत्परित्यागभवां शुचं शोकम् । मन्युशोकौ तु शुक् स्त्रियामित्यमरः । न गणयिष्यसि नानुभविष्यसि । अत्रोपमालङ्कारः । इदं हरिणी नाम वृत्तम् । तल्लक्षणम् ॥

शकु ॥ पितुः पादयोः पतित्वा ॥ ताद वन्दामि। (१६७)

कण्व ॥ वत्से यदहमिच्छामि तदस्तु ते। (१६८)

शकु ॥ सख्यावुपगम्य ॥ सहीओ एध दुवेवि मं समं ज्जेव परिस्सजध। (१६९)

सख्यौ ॥ तथा कृत्वा ॥ सहि जइ णाम सो राएसी पच्चहिणाणमन्थरो भवे तदो से इमं अत्तणो णामहेअङ्किदं अङ्गुलिअअं दंसइस्ससि। (१७०)

शकु ॥ इमिणा वो सन्देसेण कम्पिदं मे हिअअं। (१७१)

सख्यौ ॥ सहि मा भाआहि सिणेहो पावमासङ्कदि। (१७२)

शार्ङ्ग ॥ भगवन् दूरमधिरूढः सविता तत्त्वरयात्रभवती। (१७३)

(१६७) शकु इति। सुगमम् ॥

(१६८) कण्व इति। यदिच्छामि अभीष्टमित्यर्थः ॥

(१६९) शकु इति। सख्यावुपगम्य सख्योरन्तिकं गत्वा। एधेत्यादि। एतं द्वे अपि मां सममेव परिष्वजेथाम्। एत आगच्छतम्। सम सह। परिष्वजेथामालिङ्गतम् ॥

(१७०) सख्याविति। तथाकृत्वा युगपत्परिष्वज्य। सहीत्यादि। सखि यदि नाम स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत् तदास्येदमात्मनो नामधेयाङ्कितमङ्गुरीयकं दर्शयिष्यसि। यदि नाम यदिवा। नाम विकल्पे। नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते इति मेदिनी। प्रत्यभिज्ञाने सेयमिति ज्ञाने मन्थरो विलम्बीभवेत्। नामधेयाङ्कितं नामाक्षराङ्कितम् ॥

(१७१) शकु इति। इमिणेत्यादि। अनेन वां सन्देशेन कम्पितं मे हृदयम्। वां युवयोः। सन्देशेन उपदेशेन ॥

(१७२) सख्याविति। सहीत्यादि। सखि मा बिभीहि स्नेहः पापमाशङ्कते। पापमाशङ्कते अनिष्टसंशयमारोपयति ॥

(१७३) शार्ङ्गेति। सविता सूर्यः दूरमुदयस्थानादनन्तरं व्योम अधिरूढः आक्रान्तवान्। त्वरय त्वरायै प्रेरय।, घटादित्वात् ह्रस्व ॥

शकु ॥ भूयः पितुरङ्कमाश्रित्य आत्मगतमभिमुखीभूय च ॥ ताद कदा णु क्खु भूओ तवोवणं पेक्खिस्सं । (१७४)

कण्वः ॥ वत्से । (१७५)

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौष्मन्तिमप्रतिरथं तनयं प्रसूय ।
तत्सन्निवेशितधुरेण सहैव भर्त्रा
शान्त्यै करिष्यति पदं पुनराश्रमेऽस्मिन् ॥ (१७६)

गौत ॥ जादे परिहीअदि दे गमणवेला ता णिवत्तावेहि पिदरं अथवा चिरेणावि एसा ण णिवत्तइस्सदि ता णिवत्तदु भवं । (१७७)

---

(१७४) शकु इति । भूयः पुनः । तादेत्यादि । तात कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये । खलुर्जिज्ञासायाम् ॥

(१७५) कण्व इति । सुगमम् ॥

(१७६) भूत्वेति । चिराय बहून् कालान् व्याप्य दिशामन्ता दिगन्ताः तैः सह वर्त्तमाना सदिगन्ता निरवशेषेति यावत् । सा चासौ मही चेति सदिगन्तमही तस्याः सपत्नी एकभर्त्तृका भूत्वा तथा दुष्मन्तस्यापत्यं दौष्मन्तिम् । अदन्तत्वादपत्ये इञः । अप्रतिरथमसपत्नमेकाधिपमिति यावत् तनयं पुत्रं प्रसूय तस्मिं स्तनये सन्निवेशिता समर्पिता धूः साम्राज्यभारो येन स तेन । धूस्तु स्याद्भारचिन्तयो रित्येकाक्षरकोषः । धुरोऽनक्षस्य इत्यप्रत्ययः । भर्त्रा दुष्मन्तेन सहैव शान्त्यै मोक्षाय पुनरस्मिन्नाश्रमे पदं स्थानं करिष्यसि । वानप्रस्थाश्रमीयम् । यथाह विष्णुपुराणम् । वयःपरिणतौ राजन् कृतकृत्यो गृहाश्रमी । पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वेति । कूर्मपुराणञ्च । ये तु सम्यगिममाश्रमं शिवमाश्रयन्त्यशिवपुञ्जनाशनम् । ते विशन्ति परमेश्वरं परं यान्ति नैव जगतोऽस्य संस्थितिमिति । वसन्ततिलकं नाम वृत्तमिदम् ॥

(१७७) गौतेति । जादे इत्यादि । जाते परिहीयते ते गमनवेला तन्निवर्त्तय पितरम् । अथवा चिरेणाप्येषा न निवर्त्तयिष्यति तन्निवर्त्ततां भवान् । परिहीयते स्वयमेव परित्यज्यते । क्रियायाः कर्म्मस्थत्वात् कर्म्मकर्त्तर्य्याख्यातविभक्तिः । तातप्रियाया इद-

कण्व॥ वत्से उपरुध्यते मे तपोऽनुष्ठानम्। (१७८)

शकु॥ तवच्चरणव्यावारेण निरुक्कण्ठो तादो अहं उण उक्कण्ठा-भाइणी संवुत्ता। (१७९)

कण्व॥ वत्से मामेवं जडीकरोषि। (१८०)

नि श्वस्य। (१८१)

अपयास्यति मे शोकः कथं नु वत्से त्वया रचितपूर्व्वम्।
उटजद्वारविरूढं नीवारबलिं विलोकयतः॥ (१८२)

---

शक्यतया महर्षिमेव स्वयं निवर्त्तने प्रवर्त्तयति अथवेति। चिरेणापि विलम्बेनापि॥ शकु। भूय. पितुरङ्कमाश्लिष्य। तवच्चरणपीडिदं तादसरीरं। ता मा अदिमेत्तं मम किदे उक्कण्ठिदुमिति क्वचित् पाठ.। तत्र तपश्चरणपीडितं तातशरीरं। तदलमति-मात्रं मम कृते उत्कण्ठेऽत्यर्थ।

(१७८) कण्व इति। मम तपसोवेधकर्मणोऽनुष्ठानमुपरुध्यते व्याहन्यते॥

(१७९) शकु इति। तवेत्यादि। तपश्चरणव्यापारेण निरुत्कण्ठस्तात अहं पुन रुत्कण्ठाभागिनी संवृत्ता। तप इति। तपोनुष्ठानव्यापारेणेत्यर्थं। निरुत्कण्ठो निश्चिन्त। अहं पुनरङ्कन्तु। उत्कण्ठा तातादर्शनजनितमनोवेदना। रागे त्वलब्ध-विषये महती वेदना तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इत्युक्ते॥

(१८०) कण्व इति। एवमनेन प्रकारेण मां जडीकरोषि जड़िमानं लम्भयसि। जड़िमानमाह। इष्टानिष्टापरिज्ञानं यत्र प्रश्ने प्रत्युत्तरम्। दर्शनश्रवणाभावो जड़िमा सोऽभिधीयत इति॥

(१८१) निश्वसेति। दीर्घमिति शेष.॥

(१८२) अपेति। नु भो वत्से त्वया रचितपूर्व्वं विहङ्गमानां भोजनाय स्थापितपूर्व्वं अधुना उटजद्वारे पर्णशालाया अग्रतो विरूढमङ्कुरितम्। विरूढोऽङ्कुरिते जाते इति मेदिनी। नीवारबलिं नीवारधान्योपहारं विलो-कयतः पश्यतो मे कथं शोकोऽपयास्यति निवर्त्तिष्यते। कथमपि न तस्यैव सतत-स्मारकत्वादिति भाव। इत्यार्या॥

गच्छ शिवास्ते सन्तु पन्थानः । (१८३)

इति निष्क्रान्ता शकुन्तलया सह गौतमीशार्ङ्गरवमिश्राः । (१८४)

सख्यौ ॥ चिरं विचिन्त्य सकरुणम् ॥ हद्धी हद्धी अन्तरिदा सउन्तला वणराईहिं । (१८५)

कण्वः ॥ सनिःश्वासम् ॥ अनसूये प्रियंवदे गता वां सहचरी निगृह्य शोकावेगं मामनुगच्छतम् । (१८६)

सर्वे प्रस्थिताः । (१८७)

उभे ॥ ताद सउन्तलाविरहिदं सुण्णं विअ तवोवणं पविसह्म । (१८८)

कण्वः ॥ स्नेहप्रवृत्तिरेवंदर्शिनी । (१८९)

---

(१८३) गच्छेति । शिवा मङ्गलदायिनः ॥

(१८४) इतीति । इति एव सक्ते ॥

(१८५) सख्याविति ।• सकरुण करुणरसं श्रितम् । हद्धीत्यादि । हाधिक् हाधिक् अन्तरिता शकुन्तला वनराजिभि । शकुन्तला वनराजिभि र्वनश्रेणीभिरन्तरिता अन्तर्द्धापिता ॥

(१८६) कण्व इति । सनिश्वासं सदीर्घश्वासम् । वां युवयो । सहचरी सखी । निगृह्य दमयित्वा । शोकावेगं शोकवेगम् ॥

(१८७) सर्वे इति । सर्वे कण्वोऽनसूया प्रियंवदा च । पुंसोऽत्र प्राधान्यात् पुंस्त्वम् । प्रधानेन हि व्यपदेशा भवन्तीति न्यायात् ॥

(१८८) उभे इति । तादेत्यादि । तात शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशाम । शकुन्तलाविरहितं शकुन्तलया हीनम् । शून्यमिव शून्यवत् प्रतीयमानम् ॥

(१८९) कण्व इति । स्नेहप्रवृत्ति स्नेहप्रवाह । प्रवृत्तिस्तु प्रवाहे स्यात् वृत्तान्ते च प्रवर्त्तने इति मेदिनी । एवं दर्शयतीत्येवंदर्शिनी ॥

सविमर्शं परिक्रम्य ॥ हन्त भोः शकुन्तलां पतिगृहे विसृज्य लब्ध-मिदानीं स्वास्थ्यम् । कुतः । (१८०)

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः ।
जातोऽस्मि सद्योविशदान्तरात्मा चिरस्य निक्षेपमिवार्पयित्वा ॥ (१८१)

इति निष्क्रान्ताः सर्वे । चतुर्थोऽङ्कः । (१८२)

---

(१८०) सविमर्शमिति । सवितर्कं विचारेण सहेति यावत् । वितर्कः स्यादूहनं परामर्शो विमर्शनम् । अध्याहारस्तर्क ऊह इति हेमचन्द्रः । हन्तकारो हर्षद्योतकः । विसृज्य प्रेष्य ॥ स्वास्थ्यं प्रकृतिस्थता । हेतुमुद्भावयति कुत इति ॥

(१८१) अर्थ इति । कन्या अर्थः कन्यात्मकं धनं परकीयः परस्वामिक एव । अवश्यसम्प्रदानीयत्वेनोपदेशादन्यदीयत्वस्य भावित्वेऽपि भूतवदुपचारेण कन्यासामान्यस्य परकीयत्वोक्तिः । अद्य तां कन्यां परिग्रहीतुः स्वीकर्त्तुः सम्बन्धे संप्रेष्य विसृज्य । अदृष्टार्थत्वकृद्द्रव्यस्वीकारः प्रतिग्रहः । परिग्रहस्त्वबाधितस्वीकारस्य वस्तुनः स्वयं स्वीकारः । अतोऽत्र युक्तः परिग्रहेः प्रयोगः । नन्वस्यामपि स्वीकारात् प्राक् महर्षेः स्वामित्वात् बाधितोऽस्तु राज्ञः स्वीकारः स्वत्वस्य स्वत्वान्तरविरोधित्वादिति चेन्न कन्यायामृषेः परिग्रहसजातीयस्वत्वाभावात् सजातीयस्वत्वस्य च सजातीय-स्वत्वान्तरम्प्रति प्रतिबन्धकत्वस्य निबन्धृभि रङ्गीकृतत्वात् । अतएव अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीमिति वैवाहिकविधिरुपपद्यते । चिरस्य निक्षेपं चिरन्यासी-कृतम् । चिराय चिररात्राय चिरस्याद्याश्चिरार्थका इत्यमरः । अर्पयित्वा तत्स्वामिने सद्यः सपदि विशदो निर्मलो अन्तरात्मा यस्य स तथोक्तो जातोऽस्मि । अत्रोपमालङ्कारः । वृत्तमुपजातिर्नाम ॥

(१८२) इतीति । अङ्कः परिच्छेदः ॥

इति श्रीकृष्णनाथपञ्चाननकृतायामभिज्ञानशकुन्तलटीकायां
प्रबोधिकाख्यायां चतुर्थाङ्कविवरणम् ॥

---

# अभिज्ञानशकुन्तलम्।

## पञ्चमोऽङ्कः।

ततः प्रविशति कञ्चुकी। (१)

कञ्चु॥ अहोबत कीदृशीं वयोवस्थामापन्नोऽस्मि। (२)

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय॥ (३)

---

(१) तत इति। कञ्चुकिलक्षणमाह भरतः। अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते। जरावैक्लव्ययुक्तेन विशेषालेण कञ्चुकीति॥

(२) कञ्चु इति। अहोबतेत्याश्चर्य, खेदो द्योत्यते। वयोऽवस्थां वयसः कालकृतविशेषम्। आपन्न प्राप्त। विशेषः कालिकोऽवस्थेत्यमरः॥

(३) आचार इति। राज्ञोऽवरोधगृहेषु अन्तःपुरगृहेषु अधिकृतेनाध्यक्षेण। अध्यक्षाधिकृतौ समावित्यमरः। आन्तर्वंशिकेनेति यावत्। अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जन इत्यमरः। मया आचारोऽस्माकमयमाचार इति विविच्य या वेत्रयष्टि वैत्रदण्डो गृहीता धृता। अथ यष्टिश्च यष्टिर्वी च यष्टिका। दण्डः काण्डोऽपि लगुड पशुघ्नो दण्डकापि चेति शब्दरत्नावली। बहुतिथे बहूनाम्पूरणे। बहुगणपूगसङ्घात्तिथुगिति तिथट्। काले गते सति एव आचारगृहीतैव वेत्रयष्टि प्रस्थाने यात्रायां

यावदभ्यन्तरगताय देवाय स्वमनुष्ठेयमकालक्षेपार्हं निवेदयामि । (४)

स्तोकमन्तरं गत्वा ॥ किं पुनस्तत् । (५)

विचिन्त्य ॥ आं ज्ञातं कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति भो चित्रमेतत् । (६)

२ क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ (७)

---

विक्लवा विकला गतिर्यस्य स तस्य मम अवलम्बनाय आश्रयाय जाता । देहदौर्बल्यादिति भावः ॥

(४) यावदिति । अभ्यन्तरगताय अन्तःपुरस्थाय । देवाय राज्ञे । राजा भट्टारको देव इति नाट्योक्तावमरः । स्वमात्मीयम् । अनुष्ठेयं कर्तव्यम् । अकालक्षेपार्हं विलम्बानर्हम् ॥

(५) स्तोकमिति । स्तोकमल्पम् अन्तरमवधिम् । किं पुनस्तत् तत् अनुष्ठेयं पुनः किम् । एतेन विस्मृतिरूपणम् ॥

(६) विचिन्त्येति । स्मृत्वेत्यर्थः । आमिति स्मृतिं द्योतयति । आं ज्ञाने निश्चयेऽस्मृत्योरिति मेदिनी । ज्ञातं स्मृतम् किमित्याह कण्वेत्यादि । भो इत्यनधिकारामन्त्रणम् ॥ एतत् क्षणाद्विस्मरणं स्मरणञ्च ॥

(७) क्षणादिति । जरतो वर्षीयसो मतिर्बुद्धिः । वर्षीयान् दशमी ज्यायान् जीनो जीर्णो जरन्नपीत्यमरः । निर्वास्यतो निर्वाणं गमिष्यतः प्रदीपस्य शिखेव क्षणात् प्रबोधं परिस्फुरणमायाति प्राप्नोति पुनस्तमसा मोहादिभिरक-गुणविशेषेण पक्षे अन्धकारेण लङ्घ्यते आव्रियते । उपमालङ्कारः । तदुक्तं चन्द्रालोके । उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरिति ॥

परिक्रम्यावलोक्य च ॥ एष देवः । (८)

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते श्रान्तमना विविक्तम् ।
यूथानि सञ्चार्य्य रविप्रतप्तः
शीतं गुहास्थानमिव द्विपेन्द्रः ॥ (९)

भोः सत्यं धर्म्मकार्य्यमनतिपात्यं देवस्य तथापि शङ्कितवानस्मि इदानीमेव धर्म्मासनादुत्थिताय देवाय कण्वशिष्यागमनं निवेदयितुम् । अथवा कुतो विश्रामो लोकपालानाम् । तथाहि । (१०)

---

(८) परीति । एष समीपवर्त्ती इत्यर्थः ॥

(९) प्रजा इति । स्वा स्वीयाः प्रजाः सन्ततीरिव प्रजा विषयवासिनो जनान् । प्रजा स्यात् सन्ततौ जने इत्यमरः । तन्त्रयित्वा धारयित्वा । तत्रि कुटु धारणे इति कविकल्पद्रुमः । धारणं न्यायपथस्थापनम् । संस्था तु मर्य्यादा धारणा स्थितिरित्यमरः । श्रान्तः श्रान्तियुक् मनो यस्य स तथोक्त एष देवो यूथानि हस्तिनां कुलानि । सजातीयैः कुलं यूथमित्यमरः । सञ्चार्य्य चारयित्वा रविप्रतप्तो भास्करकरसन्तप्तो द्विपेन्द्रो हस्तिपतिः यूथनाथ इति यावत् । दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विप इत्यमरः । शीतं शीतलं गुहास्थानं पर्व्वतबिलप्रदेशमिव विविक्तं विजनं निषेवते अधिवसति । अत्रोपमालङ्कारः । वृत्तमुपजातिः ॥

(१०) भोरिति । देवस्य राज्ञो धर्म्मकार्य्यं धर्म्मार्थं कर्म्म । अनतिपात्यमनतिक्रमणीयमिति सत्यम् । सत्यमित्यङ्गीकारार्थमव्ययम् । सत्यं शपथेऽभ्युपगमे इति मेदिनी । तथापि इदानीमधुनैव धर्म्मासनात् धर्म्माधिकरणासनादुत्थिताय देवाय कण्वस्य शिष्याणामागमनं निवेदयितुं विज्ञापयितुं शङ्कितवान् भीतवानस्मि । शङ्का भिरुद्ग्राह इत्यमरेति । लोकपालानां प्रजापालानाम् ।

भानुः सकृद्युक्ततुरङ्ग एव
रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः
षष्ठांशवृत्तेरपि धर्म्म एषः ॥ (११)

इति परिक्रामति । (१२)

ततः प्रविशति राजा विदूषको विभवतश्च परीवारः । (१३)

राजा । (अधिकारखेदं निरूप्य ।) सर्व्वः प्रार्थितमधिगम्य सुखी सम्पद्यते जन्तुः राज्ञान्तु चरितार्थता दुःखोत्तरैव । कुतः (१४)

---

(११) भानुरिति । भानुः सविता सकृदेकवारं युक्ता योजिताः तुरङ्गा अश्वा येन स तथोक्तः । सततमेव गच्छति न विश्राम्यतीत्यर्थः । तथा गन्धवहो वायुः रात्रिञ्च दिवा च द्वयोः समाहारो रात्रिन्दिवम् । निपातनात् सिद्धम् । अहोरात्रमित्यर्थः । प्रयाति वहति । तथा शेषोऽनन्तः सदैव आहितो अर्पितो भूमेः भारो यत्र स तथोक्तः । सततमेव भूभारं वहतीति भावः । तद्वत् षष्ठांशः प्रजोत्पादितद्रव्यजातानां षष्ठो भागो वृत्तिः राजाजीवो यस्य स तस्य राज्ञोऽपि एष अविश्रामरूपो धर्म्मः । अत्रैकदाविश्रामरूपः सामान्यो धर्म्मो विभिन्नशब्दैः पृथक् पृथक् निर्द्देशात् प्रतिवस्तूपमालङ्कारः । सा चात्र मालारूपा । तदुक्तम्प्रकाशे । प्रतिवस्तूपमा तु सा । सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिरिति । इदमिन्द्रवज्राख्यम् वृत्तम् । तदुक्तम् । यस्यां त्रिषट्सप्तममक्षरं स्याद् ह्रस्वं सुजङ्घे नवमञ्च तद्वत् । गत्या विलासीकृतहंसकान्ते तामिन्द्रवज्रां ब्रुवते कवीन्द्रा इति ॥

(१२) इतीति । सुगमम् ॥

(१३) तत इति । विभवतः ऐश्वर्य्यानुसारात् ॥

(१४) राजेति । अधिकारखेदम् अधिकारात् स्थिकारात् खेदं दैन्यम् सर्व्वो जन्तुरित्यन्वयः । अधिगम्य लब्ध्वा । सम्पद्यते भवति । जन्तुः शरीरी ।

औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातः श्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ (१५)

नेपथ्ये ॥ वैतालिकौ ॥ जयति जयति देवः । (१६)

एकः ॥

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ (१७)

---

जन्तुजन्यशरीरिण इत्यमरः । चरितार्थता प्रयोजनसिद्धिः राज्यलाभ इति यावत् । दे.खोत्तरा दुःखं परिपालनकष्टमुत्तरत्र पश्चादेव यस्याः सा तथोक्तैव न सुखहेतुरित्यर्थः ॥

(१५) औत्सुक्येति । प्रतिष्ठा ख्यातिरौत्सुक्यमात्रं विचारेऽस्मिन् लोके किं कथयतीत्युत्कण्ठामात्रमवसादयति शमयति । लब्धस्य राज्यस्य परिपालनवृत्तिः पालनाचारः क्लिश्नात्येव पीड़यत्येव अत स्वहस्तेन धृतो दण्डो यस्य तत् तथाभूतमातपत्रं छत्रमिव राज्यं यथा श्रमाय भवति तथा श्रमापनयनाय श्रान्तिप्रशमनाय न । नातिश्रमापनयनायेति पाठे । अत इत्यध्याहार्य्यं श्रमस्यातिप्रशमनायेति व्याख्यातव्यम् । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥

( १६ ) नेपथ्य इति । वैतालिकौ बोधकरौ । वैतालिका बोधकरा इत्यमरः । जयति उत्कर्षेण वर्त्तताम् । जेस्तुन्त्योस्तातङिति वक्तव्यात्तुपलिप् ॥

(१७) एक इति । वैतालिकयो रन्यतर इत्यर्थः । स्वसुखेति । त्वं स्वसुखे स्वसुखेषु निरभिलाषो निःस्पृहः सन् लोकहेतोः प्रजासुखहेतोः प्रतिदिनं दिने दिने खिद्यसे खेदं गच्छसि अथवा तव एवंविधा एवम्प्रकारैव वृत्तिः स्वभावः ।

द्वितीय: ॥

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः संविभक्ता-
स्त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम् ॥ (१८)

---

विधा विधौ प्रकारे चेत्यमरः । सृष्टिस्तु निर्मितौ । स्वभावे चापि कथितेति मेदिनी । अत्र दृष्टान्तयति अनुभवतीति । तथाहि पादपो शिरसा मूर्द्धा शिख-रेण तीव्रं दुःसहमुष्णमातपम् । उष्णं दत्तेऽपि नातपेद्दति लिङ्गाङ्गशेष । अनु-भवति प्रत्यक्षीकरोति गृह्णातीति यावत् छायया करणेन संश्रितानामात्मान-माश्रितानां परितापं सन्तापं शमयति नाशयति । अत्र दृष्टान्तोऽलङ्कारः । उप-मानधर्म्मस्य क्रियायाश्च प्रतिबिम्बनात् । तदुक्तं प्रकाशे दृष्टान्तः पुनरेतेषां सर्व्वेषां प्रतिबिम्बनादिति । वृत्तं मालिनी नाम ॥

(१८) द्वितीय इति । वैतानिकयोरिति शेष । नियमयसीति । आत्तदण्डो गृहीतदण्डविधिः सन् विमार्गे विपथे अविहितकर्म्मणीत्यर्थः । प्रस्थितान् गच्छतः प्रवृत्तानिति यावत् । नियमयसि विपथप्रवृत्तेः त्याजयसि तथा विवाद व्यवहारं प्रशमयसि निष्पादयसि विवादो व्यवहार स्यादित्यमर । तथा रक्षतीति रक्षण: । नन्द्यादित्वाल्ल्युः । रक्षणाय प्रजानां पालकाय कल्पसे सम्पद्यसे रक्षको भवसी-त्यर्थः । क्लृप्यर्थे विकारे सम्पद्यमानादभेदे इति वक्तव्याच्चतुर्थी । विकारो न विव-क्षितः । ज्ञातयश्च दायादा अतनुषु अनल्पेषु विभवेषु धनेषु । अर्थरै विभवा अपीत्यमर । संविभक्ता विभागं गता । कर्त्तरि क्तः । क्तो कर्मणि इत्युक्तेरन्य-त्रापि प्रयोगस्त इत्यभिधानात् । किन्तु जनानां बन्धुकृत्यं बन्धूचितं कर्म्म त्वयि परिसमाप्तं निर्वृत्तम् । न ते ज्ञातिषु तेषामराजत्वादिति भाव । एतेन तेभ्यो-ऽस्य स्वर्वस्थापनाद्राजानुरक्तताद्योतयति । मालिनी नाम वृत्तमिदम् ॥

राजा । आकर्ण्य साश्चर्यम् ॥ एतेन काव्यानुशासनपरिश्रान्ताः पुन र्नवीकृताः स्मः । (१९)

विदू ॥ विहस्य ॥ भोः गोविन्दारअस्ति भणिदस्स विसमस्स किं परिस्समो णस्सदि । (२०)

राजा ॥ स्मितम् ॥ ननु क्रियतामासनपरिग्रहः । (२१)

उभौ । उपविश्य परिजनश्च यथास्थानं स्थितः ॥ (२२)

नेपथ्ये वीणाशब्दः ॥ (२३)

विदू ॥ कर्णं दत्त्वा ॥ भो वअस्स सङ्गीदसालब्भन्तरे कण्णं देहि सालअसुद्धाए वीणाए सरसंजोओ सुणिअदि जाणे तत्तभोदी हंसवदी वसपरिचअं करेदि त्ति । (२४)

राजा ॥ तूष्णींभव यावदाकर्णयामि । (२५)

कञ्चु ॥ विलोक्य ॥ प्रत्यासन्नो देवस्यावसरं प्रतिपालयामि । एके-कान्ते स्थितः ॥ (२६)

नेपथ्ये गीयते ॥ (२७)

---

लयं करोति । सङ्गीतस्य प्रेक्षणार्थं नृत्यगीतवाद्यरूपस्य शाला इदं सङ्गीतशाला । गीतवाद्यनृत्यत्रयं नाट्यं तौर्यत्रिकञ्च तत् । सङ्गीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्मिका इति हेमचन्द्रः । तदभ्यन्तरे तदभ्यन्तरस्थमिति । वर्णं देहि तदनुगतध्वनि-श्रवणाय श्रोत्रं नियोजय । तालेति । कालविशेषेण गीतस्य क्रियाविशेषमानं तालः । गीतवाद्ययोः साम्यं लयः । तालः कालक्रियामानं लयः साम्यमित्यमरः । ताभ्यां शुद्धाया निर्दोषायाः । शुद्धं स्यान्निर्मले केवले निर्दोषे च पवित्रे चेति मेदिनी । तथाचोक्तं सङ्गीतदामोदरे । अश्लिष्टं भीतसंत्रस्तमव्यक्तमनुनासि-कम् । काकुस्वरं शिरःकम्पोत्थस्थानविवर्जितम् । विस्वरं विरसञ्चैव विश्लिष्टं विषमाहतम् । व्याकुलं तालहीनञ्च गानदोषाश्चतुर्दशेति । स्वरसंयोगः स्वर-ग्रामश्च । जाने मन्ये इत्यनेन कर्म तदाश्रयः । हंसपदी देवीविशेषः । वर्णो गीतिक्रमः । भेदे गीतिक्रमे चित्रे इति वर्णशब्दार्थे हेमचन्द्रः । निषादादीनामारो-हावरोहक्रम इति यावत् । तस्य परिचयमभ्यासम् ॥

(२५) राजेति । तूष्णीभाव मौनीभव । मौने तु तूष्णीं तूष्णीकामित्यमरः । तूष्णीं शब्दस्य तूष्णीदित्वाद्यव्ययत्वादेति धातुना समासान्तीभावोऽर्थो साधयन्त व्याख्यातार्थोऽस्य । तत्र पृथक् पदम् । धर्मेभरतेनान्ययापत्तेः । यावत् यत्काल-मभिव्याप्य । आकर्णयामि शृणोमि यावत् पुरावर्यां भव्ये इति भविष्यति लौ ॥

(२६) कञ्चु इति । प्रत्यासन्नः प्रत्यस्मिन् विषये कृतमनोयोग । अवसर-मवकाशम् । प्रतिपालयामि प्रतीक्षे । एकान्ते निर्जने । एकान्तं कीवमत्यर्थनिर्जने तद्युते त्रिलिङ्गमित्यमराभिः ॥

(२७) नेपथ्य इति । गीयते कण्ठोच्चारितस्वरैरिति शेष ॥

राजा । आकर्ण्य साश्चर्य्यम् ॥ एतेन कार्य्यानुशासनपरिश्रान्ताः पुन र्नवीकृताः स्मः । (१९)

विदू ॥ विहस्य ॥ भोः गोविन्दारच्चत्ति भणादस्स विसमस्स किं परिस्समो णस्सदि । (२०)

राजा ॥ सस्मितम् ॥ ननु क्रियतामासनपरिग्रहः । (२१)

उभौ । उपविष्टौ परिजनश्च यथास्थानं स्थितः ॥ (२२)

नेपथ्ये वीणाशब्दः ॥ (२३)

विदू ॥ कर्णं दत्त्वा ॥ भो वअस्स सङ्गीदसालब्भन्तरे कण्णं देहि तालवणसुद्धाए वीणाए सरसंजोओ सुणिअदि जाणे तत्थभोदी हंसवदी वण्णपरिचअं करेदि त्ति । (२४)

---

(१९) राजेति । साश्चर्य्यं सविस्मयम् । एतेन वाक्येन । कार्य्यानुशासनै कर्त्तव्योपदेशै परिश्रान्ता वय पुनर्नवीकृता सानुरागीकृताश्च ॥

राजा ॥ सस्मितम् ॥ सकृत्कृतप्रणयोऽयं जन इत्यक्षरार्थः । तदहं देवीं हंसवतीमन्तरेण उपालम्भनमागतोऽस्मि सखे माधव्य मद्वचना-दुच्यतां देवी हंसवती सम्यगुपालब्धोऽस्मीति । (३१)

विदू ॥ जं तवं आणवेदि । (३२)

उत्थाय ॥ भो वअस्स गहीदो तुए परकीएहिं हत्थेहिं सिहण्डए अच्छभल्लो ता वीदरायस्स असरणस्स णत्थि मे मोक्खो । (३३)

राजा ॥ सखे ! गच्छ नागरिकवृत्त्या सान्त्वयैनाम् । (३४)

---

गृहीतो भवता अक्षरार्थः । अस्या गीतिकाया अक्षरार्थो वर्णार्थो भवता किं गृहीत किमवगत । अक्षरं मन्त्रवर्णयोरिति विश्व. । अपि प्रश्नम् द्योतयति ॥

(३१) राजेति । सकृदेकवारं कृत प्रणय प्रेम यस्मिन् स तथोक्तोऽयं जनो हंसवतीरूप । इत्यक्षरार्थे एव वर्णार्थे । हंसवतीमन्तरेण हंसवतीं विना । भर्तृ-सहयोगाभावेनेति यावत् । पृथक् विनान्तरेणर्त्ते इत्यमर· । उपालम्भन वाच्य-ताम् । मद्वचनादुच्यता महाराज एवमाहेत्युच्यताम् । उपालब्धो दूषक ॥

(३२) विदू इति । जमित्यादि । यद्भवानाज्ञापयति । सुगमम् ॥

(३३) उत्थायेति । भो इत्यादि । भो वयस्य गृहीतस्त्वया परकीयाभ्या हस्ताभ्या शिखण्डके अच्छभल्लस्तद्वीतरागस्याशरणकस्य नास्ति मे मोक्ष । त्वया पर-कीयाभ्यामन्यदीयाभ्यां हस्ताभ्या करणाभ्यामच्छभल्लो भालूक । अथाच्छभल्लभालूका इत्यमर· । शिखण्डके शिखाभ्यन्तरे गृहीतो धृत । येन सर्वैर्नखैर्विदारयितु शक्नो-तीति भाव शिखण्डे तु शिखावर्हे इति रभस । एतेन त्व क्रुद्धा देवीमन्येन सान्त्वयितु यतसे इति गम्यते । तत् तस्मात् । वीतरागस्य विगतक्लेशादिकस्य क्लेशा-द्यनुभवशून्यस्येति यावत् । राग क्लेशादिके रक्ते इति यादव । नास्ति शरणं रक्षिता यस्य सोऽशरणकस्तस्य मे मोक्षो देव्या सकाशाद्धिसक्तिर्नास्ति ॥

(३४) राजेति । नागरिकवृत्त्या विदग्धस्वभावेन एना सान्त्वय कोपाद्विरमय ॥

अहिणवमहुलोहभाविदो
तह परिचुम्बिअ चूअमञ्जरिम् ।
कमलवसदिमेत्तणिव्वुदो
महुअर विम्हरिदोसि णं कहं ॥ (२८)

राजा ॥ अहो रागपरिवाहिणी गीतिः । (२९)

विदू ॥ भो वअस्स किं दाव से गीदिआए अवि गहीदो भवदा अक्खरत्थो । (३०)

---

(२८) गानमाह अहिणवेत्यादि । अभिनवमधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम् । कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥ हे मधुकर भ्रमर अभिनवस्य अचिरोद्भूतस्य मधुनो रसस्य लोभेन भावित प्राप्त सन् । मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे इति विश्वः । भावितं वासिते प्राप्ते इति मेदिनी । चूतमञ्जरीमाम्रमुकुलं तथा परिचुम्ब्य कमले पद्मे वसतिमात्रेण वासमात्रेण निर्वृतः सुस्थितस्त्वम् । वासेऽपि वसतिरिति त्रिकाण्डशेषः । एनां चूतमञ्जरीं कथं विस्मृतो विस्मर्तुमारब्धवानोऽसि । शेषादिष्टे क्तः इत्यादिकर्मणि कर्तरि क्तः । यद्वा अधर्म विभक्ता भ्रातर इतिवत् क्वचिदन्यत्रापि कर्तरि क्तो वक्तव्य । प्राकृतत्वाद्वाच्याभ्रंशो वा । वृत्तमिदमपरवक्त्रं नाम । तदुक्तम् । अयुजि न नरला गुरुः समे तदपरवक्त्रमिदं नजौ जराविति । तत्र गीयमान प्रच्छेदकाख्यलास्याङ्गं भवति तदुक्तम् । अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना । वीणा पुरःसरं गानं स्त्रियां विच्छेदको मत इति ॥

(२९) राज्ञेति । अहो विस्मये । रागो गान्धारादिस्वर । रागस्तु मात्सर्ये लोहितादिषु क्लेशादावनुरागे च गान्धारादौ नृपेऽपि चेति मेदिनी । तत्परि सर्वतोभावेन स्रवति निर्गलति यावत् । परितीति रागपरिस्राविणी । गीतिर्गानम् ॥

(३०) विदू इति । भो इत्यादि । भो वयस्य किं तावदस्या गीतिकाया अपि

इत्यस्तुतिनिमित्तमुन्मनस्कत्वं रूपयति । (३८)

कञ्चु ॥ उपसृत्य ॥ जयति जयति देव एते खलु हिमगिरेरुपत्यकारण्यवासिनः कण्वसन्देशमादाय सस्त्रीकास्तपस्विनः सम्प्राप्ताः । श्रुत्वा देवः प्रमाणम् । (३९)

राजा ॥ सविस्मयम् ॥ किं कण्वसन्देशहारिणः सस्त्रीकास्तपस्विनः । (४०)

कञ्चु ॥ अथकिम् । (४१)

राजा ॥ तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः सोमरातः अमून् आश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति । अहमप्येतांस्तपस्विदर्शनोचितप्रदेशे प्रतिपालयामि । (४२)

---

सौहार्द्दीयां मत्प्राणेतायाः स्थानसम्पर्केण मनसः स्मृते पुण्डरीकनेत्रत्वं द्रष्टव्यम् । वसन्ततिलकं नाम वृत्तम् ॥

(३८) इतीति । अस्तुतिवाक्यपठाद्धेतोरस्मरणं निमित्तं हेतुर्यस्य तत् तथोक्तम् उन्मनस्कत्वमन्यमनस्कता ॥

(३९) कञ्चु इति । हिमगिरेर्हिमालयस्य । उपत्यका आसन्नभूमिः । उपत्यकाद्रेरासन्ना भूमिरित्यमरः । तदरण्यवासिनस्तत्रा वनवासिन । कण्वसन्देशं कण्वसंवादम् । श्रुत्वा इति । श्रुत्वा देवो राजा प्रमाणं कर्त्तव्यनिश्चयकृत् भवत्विति शेष. । प्रमाणं हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृष्वित्यमरः ॥

(४०) राजेति । सस्त्रीका इति विस्मये हेतु अतस्तस्य ध्वनिविशेषः ॥

(४१) कञ्चु इति । अथकिमङ्गीकारे । अङ्गीकारेऽपि चाथकिमिति हारावली ॥

(४२) राजेति । सोमाय रायते दीयत इति सोमरातः देवरात इतिवत् रातदाने इत्यस्माद्धात्वाद्यौतिकत्वेति संज्ञायां क्त । महामा पुरोधा इत्यर्थः । विज्ञापयितव्यमाह इत्यन्तम् । आश्रमवासिनस्तापसान् । श्रौतेन वैदिकेन वैधेन वा । विधिना विधानेन । सत्कृत्य पूजयित्वा । व्यस्तव्यस्तकारेति समासात् स्त्रार्थो-

विदू॰ ॥ का गई । इति निष्क्रान्तः । (२५)

राजा ॥ स्वगतम् ॥ किन्नु खलु गीतमेवंविधमाकर्ण्य इष्टजनविरहा-हृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा । (२६)

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्य्युत्सुको भवति यत् सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्व्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ (२७)

---

(२५) विदू इति । का गई का गतिः । गतिरुपाय । गतिर्मार्गे दशायाञ्च ज्ञाने यात्राभ्युपाययोरिति विश्वः ॥

(२६) राजेति । स्वगतमनतिस्पष्टम् । इष्टजनस्य प्रणयिजनस्य । विप्रयोगात् विरहात् । ऋते विना । बलवदुत्कण्ठित अत्युत्कण्ठित. । उत्कण्ठा तु रागे त्वलब्ध-विषये महती वेदना तु या । संयोषणी तु गाम्भाणा तामुत्कण्ठा विदुर्बुधा इत्युक्ता । तथा गीत्या शकुन्तलाविरहस्यापि सूचनादिति भाव । उत्कण्ठाहेतु मनसा परि-कल्प्याह अथवेति ॥

(२७) रम्येति । सुखितो जातसुखोऽपि अजातशोकोऽपीति यावत् । जन्तुः शरीरी रम्याणि मनोरमाणि वस्तूनि वीक्ष्य तथा मधुरान् प्रियान् शब्दांश्च निशम्य श्रुत्वा । स्वादुप्रियौ तु मधुराविल्यमरः । यत् यस्मात् पर्य्युत्सुक उत्कण्ठितो भवति तत् तस्मान्नूनमवश्यमबोधपूर्व्वमबुद्धिपूर्व्वं यथा स्यात्तथा स्मर्यमाणं विशेषतो अनुद्धा-पीत्यर्थं । भावस्थिराणि स्वभावनिबद्धानि । भाव सत्तास्वभावाभिप्रायचेष्टात्म-जन्मस्वित्यमर । जननान्तरस्यान्यजन्मन सौहृदानि सौहार्द्दानि । विकल्पेन शुभ-गादौ पाठाद् द्विपदवृद्धि । चेतसा मनसा स्मरति । तथाह्युक्तं रघुवंशे । रतिकरौ नूनमिमावभूतां राज्ञः सहस्रेषु तथाहि बाला । गतेयमात्मप्रतिरूपमेव मनोहि जन्मान्तरसंगतिज्ञमिति । तथाच ऐहिकोत्कण्ठाहेतुभूतप्रणयिजनविप्रयोगाभावेऽपि जन्मान्तरीणप्रणयस्फूर्तेरियमुत्कण्ठेति भाव. । एवमेव कादम्बर्यां जननान्तरजात-

किन्तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्म्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित् प्रसवो ममापरिचितैर्विष्टम्भितो वीरुधा-
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ (४८)

प्रती ॥ देवस्सभुअदण्डणिव्वुदे अस्समपदे कुदो एदं किन्तु सुचरि-
दाहिणन्दिणो इसीओ देवं सभाजइदुं आअदे त्ति तक्केमि । (४९)

---

(४८) किन्तावदिति । किं वितर्के । व्रतिनामारब्धयागानाम् । आदेष्टा त्वध्वरे व्रती यष्टा च यजमानश्चेत्यमरः । उपोढं वृद्धं तपो देहक्लेशकरं कर्म्म यैस्ते तेषां तापसानामित्यर्थः । तपो यागादि किन्तावत् विघ्नैः राक्षसादिभिर्दूषितम् व्याहतम् । उतो विकल्पे । धर्म्मारण्ये चरन्ति ये ते धर्म्मारण्यचरास्तेषु प्राणिषु उत केनचिज्जनेन असच्चेष्टितमसदाचरितम् । आहोस्विदुभाभ्यां विकल्पवितर्कौ द्योत्येते तेन आहोस्वित् अथवा किं नास्ति परिचितं परिचयो येषां ते अपरिचिताः । मम अपरिचितैरज्ञातमत्परिचयैर्जनैः कर्त्तृभिः वीरुधां विस्तारवतीनां लतानाम् । लता प्रतानिनी वीरुदित्यमरः । प्रसवः फलम् । प्रसवस्तु फले पुष्पे वृक्षाणां गर्भमोचन इति विश्वः । विष्टम्भितः प्रतिबन्धं प्रापितः । कुसुमभङ्गादिनेति यावत् । विष्टम्भः प्रतिबन्धे स्यात् प्रभेदे चामयस्य चेति मेदिनी । इति एवमारूढाः संजाताः बहवः प्रतर्काः यत्र तत् तथोक्तं मे मम अपरिच्छेदेनानवधारणेनाकुलं भवति । शार्दूलविक्रीडितं नाम वृत्तमिदम् ॥

(४९) प्रतीति । देवस्येत्यादि । देवस्य भुजदण्डनिर्वृते आश्रमपदे कुत एवं किन्तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि । भुजदण्डेन बाहुदण्डेन निर्वृते सुस्थिते आश्रमपदे एतम् असदाचरणं कुत कस्माद्भवितुमर्हतीत्यर्थः । सुचरितानि सदाचरणानि अभिनन्दन्ति प्रशंसन्ति ये ते सुचरिताभिनन्दिनः । सभाजयितुम् आनन्दयितुम् । द्रष्टुं वा । आनन्दनसभाजने इत्यमरः । सभाजृ कथने प्रीतिदर्शने इति कविकल्पद्रुमः ॥

कञ्चु ॥ यथाज्ञापयति देवः । इति निष्क्रान्तः । (४३)

राजा ॥ उत्थाय ॥ वेत्रवति अग्निशरणमार्गमादेशय । (४४)

प्रतीहारी ॥ इदो इदो एदु देवो । (४५)

परिक्रम्य ॥ एसो अहिणवसम्मज्जणरमणीओ सण्णिहिदहोमधेणु अग्गिसरणालिन्दो ता आरोहदु देवो । (४६)

राजा । आरुह्य परिजनांसावलम्बी तिष्ठन् । वेत्रवति किमुद्दिश्य तत्रभवता काश्यपेन मत्सकाशमृषयः प्रेषिताः । (४७)

---

यष् । तपस्विदर्शनोचितप्रदेशे पवित्रभूमौ होमगृह इति यावत् । एतान् तपस्विनः । प्रतिपालयामि प्रतीक्षे ॥

(४३) कञ्चु इति । सुगमम् ।

(४४) राजेति । वेत्रवतीति प्रतिहार्या नाम्ना सम्बोधनम् । अग्निशरण-माहितस्याग्नेर्गृहम् । शरणं गृहरक्षित्रोरित्यमरः । तस्य मार्गं पन्थानम् । आदेशय दर्शय ॥

(४५) प्रतीहारीति । इदो इत्यादि । इत इत एतु देव ॥

(४६) परीति । एसो इत्यादि । एषोऽभिनवसम्मार्जनरमणीयः सन्निहित-होमधेनुरग्निशरणालिन्द । तदारोहतु देव । अभिनवसम्मार्जनेनाचिरसम्मा-र्जनेन रमणीय सुन्दर । संनिहिता अवस्थिता होमधेनुर्होमीयद्रव्योपयोगिनी धेनुर्यत्र स तथोक्त । एष अग्निशरणशालिन्दस्य अलिन्दो बहिर्द्वारगतप्रकोष्ठ-भूमिविशेष । प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठक इत्यमर । तत् तस्मात् आरोहतु एनमिति शेष ॥ ✓

(४७) राजेति । परिजनस्य परिवारजनस्य । अंसावलम्बी स्कन्धाहितहस्त । वेत्रवतीत्यादि प्रश्न । किमुद्दिश्य किमभिसन्धाय । मत्सकाशं मत्समीपम् । प्रेषिताः प्रेरिता ॥

किन्तावद्व्रतिनामुपोढ़तपसां विघ्नैस्तपो दूषितं
धर्म्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढ़बहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ (४८)

प्रती ॥ देवस्सभुअदण्डणिव्वुदे अस्समपदे कुदो एदं किन्तु सुचरि-दाहिणन्दिणो इसीओ देवं सभाजइदुं आअदे त्ति तक्केमि । (४९)

---

(४८) किन्तावदिति । किं वितर्के । व्रतिनामारब्धयागानाम् । आदेशा ध्वरे व्रती यष्टा च यजमानश्चेत्यमरः । उपोढं धृतं तपो मैथक्षेपकरं कर्म यैस्ते तेषां तापसानामित्यर्थः । तपो यागादि किन्तावत् विघ्नै राक्षसादिभिर्दूषितं व्याहतम् । उतो विकल्पे । धर्म्मारण्ये चरन्ति ये ते धर्म्मारण्यचरास्तेषु प्राणिषु च केनचिज्जनेन असच्चेष्टितमसदाचरितम् । आहोस्विदुतभ्यां विकल्पवितर्कौ द्योत्येते तेन आहोस्वित् अथवा किं नास्ति परिचितं परिचयो येषां ते अपरि-चिताः । मम अपरिचितैरज्ञातमत्परिचयैर्जनैः कर्त्तृभिः वीरुधां विस्तारयतीनां लतानाम् । लता प्रतानिनी वीरुदित्यमरः । प्रसवः फलम् । प्रसवस्तु फले पुष्पे वृक्षाणां गर्भमोचन इति विश्वः । विष्टम्भित प्रतिबन्धं प्रापितः । कुसुमभङ्गादिनेति यावत् । विष्टम्भः प्रतिबन्धे स्यात् प्रभेदे चामयस्य चेति मेदिनी । इति एवमारूढ़ाः संजाता बहवः प्रतर्का यत्र तत् तथोक्तं मे मम मनः अपरिच्छेदेनानवधारणेनाकुलं भवति । शार्दूलविक्रीड़ितं नाम वृत्तमिदम् ॥

(४९) प्रतीनि । देवस्सेत्यादि । देवस्य भुजदण्डनिर्वृते आश्रमपदे कुत एवं किन्तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि । भुज-दण्डेन बाहुदण्डेन निर्वृते सुस्थिते आश्रमपदे एवम् असदाचरणं कुतः कस्माद्भवि-तुमर्हतीत्यर्थः । सुचरितानि सदाचरणानि अभिनन्दन्ति प्रशंसन्ति ये ते सुचरिता-भिनन्दिनः । सभाजयितुम् आनन्दयितुम् । द्रष्टुं वा । आनन्दनसभाजने इत्य-मरः । सभाजनकथेनने प्रीतिदर्शन इति कविकल्पद्रुमः ॥

ततः प्रविशतो गौतमीसहितौ शकुन्तलामादाय कण्वशिष्यौ पुरतश्चैषां पुरोहितकञ्चुकिनौ ॥ (५०)

कञ्चु॰ ॥ इत इतो भवन्तः। (५१)

शार्ङ्गरव ॥ सखे शारद्वत!। (५२)

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ (५३)

शारद्वत ॥ शार्ङ्गरव स्थाने खलु पुरप्रवेशात्तवेदृशः संवेगः। अहन्तु। (५४)

---

(५०) तत इति। एषां गौतमीशकुन्तलाकण्वशिष्याणाम्। पुरोहितकञ्चुकिनौ राज्ञ इति शेषः॥

(५१) कञ्चु इति। भवन्त इति पुंसः प्राधान्यात् पुंस्त्वम्॥

(५२) शार्ङ्ग इति। सुगमम्॥

(५३) महेति। महान् भागो भागधेयं यस्य स महाभागः। भागो रूपार्द्धके भाग्ये भागधेयैकदेशयोरिति विश्वः। असौ नरपती राजा कामं पर्य्याप्तमभिन्ना अव्याहता स्थितिर्लोकमर्य्यादा येन स तथोक्तः। संस्था तु मर्य्यादाधारणास्थितिरित्यमरः। सुतरामेतस्यापराधे न सम्भाविता भीतिरिति भावः। अत्येभ्योपि साध्वसानवकाशं दर्शयति न कश्चिदिति। वर्णानामपकृष्टः शूद्रादिरपि कश्चिद्राजभृत्यभूत इति यावत्। अपथमसदाचरणं न भजते। तथापि कुतोपि कारणाद्भयानवकाशेपि शश्वत्परिचित आजन्मसेवितो विविक्तो निर्जनस्थलप्रदेशो येन तत् तथोक्तेन मनसा करणेन जनाकीर्णं लोकैः सङ्कुलमिदं राजभवनं हुतवहपरीतमनलाक्रान्तं गृहमिव ससाध्वसप्रवेशमिति भावः। मन्ये। विविक्तान्तं जनाकीर्णमिति च हेतुगर्भविशेषणम्। अत्रोपमालङ्कारः। शिखरिणी नाम वृत्तम्॥

(५४) शारेति। स्थाने युक्तम्। युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। पुरप्रवेशान्नगरप्रवेशात्। संवेगः सम्भ्रमः। अहन्त्विति अवैमीति श्लोकीयेनान्वयः॥

अभ्यक्तमिव स्नातः, शुचिरशुचिमिव, प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥ (५५)

पुरोधा ॥ अतएव भवद्विधा महान्तः । (५६)

शकुन्तला ॥ दुर्निमित्तमभिनीय ॥ अम्मो किं मे वामेदरं णअणं विप्फुरदि । (५७)

गौतमी ॥ जादे पडिहदं अमङ्गलं सुहाइं दे होन्तु । (५८)

---

(५५) अभ्यक्तमिति । स्नातः कृतस्नानो यथा अभ्यक्तं कृततैलाभ्यङ्गम् अवैति चिरादसौ स्नापनायाम्मत्पार्श्वमुपसृत इतीति भाव । शुचिः शुचिमान् पुमान् यथा अशुचिं पुमांसमवैति । अयमीदानीमनधिकारीति भाव. । प्रबुद्धो जागरावस्थापन्नो यथा सुप्तं निद्रापन्नमवैति । नासौ परमार्थत. किमपि जानातीत्येवमिति भाव. । यथाच स्वैरगतिः स्वैरा स्वच्छन्दा अव्याहतेति यावत् गति पादविहरणं यस्य स तथोक्तो जनो बद्धं प्राप्तबन्धनं जनमवैति । कथमप्यधुनासौ न सत्पथमधिरोढुं समर्थ इत्येवमिति भाव । स्वच्छन्दयो. स्वैरमित्यमर. । अहन्तु सुखसङ्गिनं सांसारिकसुखासक्तं जनं तथा अवैमि जानामि । भयमस्त्यावदस्माकं दूरे आस्तामिति भाव. । इयं मालोपमा । यदुक्तं दर्पणे । मालोपमा यदेकस्योपमानं बहु दृश्यत इति । आर्य्येयम् ॥

(५६) पुरो इति । अतएव तुच्छीकृतसांसारिकसुखत्वादेव । भवद्विधा. भवत्प्रकाराः सर्व्वे । महान्तो लोकोत्तरा ॥

(५७) शकुन्तलेति । दुर्निमित्तं दक्षिणाक्षिस्पन्दम् । अभिनीय रूपयित्वा । अम्मो इत्यादि । अहो किं मे वामेतरत् नयनं विस्फुरति । किं कथम् । वामेतरत् दक्षिणम् । विस्फुरति स्पन्दते ॥

(५८) गौतमीति । जादे इत्यादि । जाते प्रतिहतममङ्गलं शुभानि ते सन्तु । प्रतिहतमपगतम् । अमङ्गलं दक्षिणाक्षिविस्फुरणसूचितम् । भ्रूप्राणमध्ये प्रियसङ्गमः स्यादासाक्षिमध्ये च सहायलाभ इत्यनेनाक्षिस्पन्दनस्य शुभसूचकत्वेऽपि, यात्रा फलाभाष्टि,गलप्रकम्पे पुंसां सदा दक्षिणदेहभागे । स्त्रीणाञ्च वामावयवे प्रजात. स्पन्द. फलानि प्रदिशत्यवश्यमिति वचनान्तरानिर्देशात् दक्षिणाक्षिस्पन्दनस्याशुभसूचकत्वम् ॥

इति परिक्रामन्ति। (५८)

पुरो। राजानं निर्दिश्य॥ भो भो तापस्विन. असावत्रभवान् वर्णा-श्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयति वः पश्यतैनम्। (६०)

शार्ङ्ग॥ भो महाब्रह्मन् काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्थाः। कुतः। (६१)

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभि
स्वभाव एवैष परोपकारिणाम्॥ (६२)

---

(५८) इतीति। इति पूर्व्वोक्तायामुक्तौ सत्याम्। परिक्रामन्ति सर्व्वे इति शेष॥

(६०) पुरो इति। निर्दिश्य अङ्गुल्या प्रदर्श्य। वर्णाश्रमाणां वर्णानामाश्रमाणाञ्च। रक्षिता पालयिता। प्रागेव भवदुपगमात् पूर्व्वमेव। मुक्तासन ऊर्द्धीभूत। प्रतिपालयति प्रतीक्षते। एनं राजानम्॥

(६१) शार्ङ्गेति। एतत् अनौद्धत्यं। काम पर्य्याप्तमभिनन्दनीय प्रशंसार्हम्। तथापि पर्य्याप्तप्रशंसार्हत्वेपि अत्र अनुद्धतभावे वयं मध्यस्था उदासीना न निन्दामो न वा प्रशंसाम इत्यर्थं॥

(६२) कुत औदासीन्यमिति प्रश्ने नैसर्गिकत्वादित्याह भवन्तीति। फलोद्गमै फला-नामुद्गमैस्तरवो नम्रा नतशाखा भवन्ति घना मेघा नवाम्बुभि प्रथमवारिसम्बन्धै दूरादि लम्बन्त इति दूरविलम्बिनो भूमेरनतिदूरवर्त्तिनो भवन्ति तथा सन्त साधवश्च ते पुरुषा-श्चेति सत्पुरुषा. समृद्धिभिर्धनसम्पत्तिभिरनुद्धता नम्रा भवन्ति परान् स्वेतरान् उपकर्त्तुं शीलं येषा तेषामेष स्वभाव प्रकृतिरेव तथाच उदकपङ्कादीना शीतोष्णतादिवत् स्वाभा विकत्वादेतस्य न स्तुतिनिन्दे इति भाव। अत्रानौद्धत्यरूपैकस्य गुणस्य पृथक निर्देशात् प्रतिवस्तूपमालङ्कार। अन्त्यचरणेत्वर्थान्तरन्यास। यदुक्तं दर्पणे। प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययो। एकोपि धर्म्म सामान्यो यत्र निर्दिश्यते पृथगिति। वृत्तं वंशस्थविलं नाम॥

प्रती ॥ देव पसस्मसुहा दूसीअो दीसन्ति । (६३)

राजा ॥ शकुन्तलां निर्व्वर्ण्य ॥ अये अत्र । (६४)

केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।

मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ (६५)

प्रती ॥ भट्टा कुदूहलगब्भो पडिहदो ण मे तक्को पसरदि दंसणीश्रा उण से आकिदी लक्खीअदि । (६६)

राजा ॥ भवत्वनिर्व्वर्ण्यं खलु परकलत्रम् । (६७)

शकु ॥ उरसि हस्तं दत्त्वा स्वगतम् ॥ हिअअ किं एव्वं वेवसि अज्जउत्तस्स तादिसभावाणुबन्धं सुमरिअ धीरत्तणं दाव अवलम्बस्स । (६८)

---

(६३) प्रतीति । इतः प्रतीहारी राजानमावेदयति देवेत्यादि । देव प्रसन्नमुखा तपस्विनो दृश्यन्ते । प्रसन्नानि प्रसादवन्ति मुखानि येषां ते प्रसन्नमुखाः । एतेनागतदुःखत्वमनुभावितम् ॥

(६४) राजेति । निर्व्वर्ण्य विशेषेणावलोक्य । निर्व्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणमित्यमरः । अये इति सम्भ्रमे ॥

(६५) केयमिति । पाण्डुपत्राणां परिणतपत्राणां मध्ये किसलयं नवपल्लवमिव तपोधनानां तापसानां मध्ये अवगुण्ठनवती शिरःप्रच्छादनवती । अथावगुण्ठनस्त्वावगुण्ठिका । योषाशिरःप्रावरणक्रियायां स्यादिति शब्दाब्धिः । अतएव नातिपरिस्फुटमनतिव्यक्तं शरीरस्य लावण्यं चैकण्यं यस्याः सा तथोक्ता इयं नारी का । लुप्तोपमालङ्कारः । आर्य्याजातिरियम् ॥

(६६) प्रतीति । भट्टेत्यादि । भर्त्तः कुतूहलगर्भः प्रतिहतो न मे तर्कः प्रसरति । दर्शनीया पुनरस्या आकृतिर्लक्ष्यते । कुतूहलं जिज्ञासा गर्भे अभ्यन्तरे यस्य स तथाभूतो मे तर्को विचारणं प्रतिहतः पराङ्मुखः सन् न प्रसरति नायततोवर्त्तते न निर्णेतुमर्हतीति यावत् । आकृतिस्तस्या दर्शनीया दर्शनयोग्या रमणीयेति यावत् ॥

(६७) राजेति । अनिर्व्वर्ण्यं न विशेषेण प्रेक्षणीयम् । परकलत्रं परभार्य्या । कलत्रं श्रोणिभार्य्ययोरित्यमरः । खलु निषेधद्योतकः ॥

(६८) शकु इति । उरसि वक्षसि । हिअएत्यादि । हृदय किमेवं वेपसे आर्य्य-

पुरो ॥ पुरोगत्वा ॥ स्वस्ति देवाय देव एते खलु विधिवदर्च्चिता-स्तपस्विनः कश्चिदेतेषु उपाध्यायसन्देशोऽस्ति तं देवः श्रोतुमर्हति । (६९)

राजा ॥ अवहितोऽस्मि । (७०)

शिष्यौ ॥ हस्तमुद्यम्य ॥ भो राजन् विजयतां भवान् । (७१)

राजा ॥ सर्व्वानभिवादये वः । (७२)

शिष्यौ ॥ स्वस्ति देवाय । (७३)

राजा ॥ अपि निर्व्विघ्नं तपः । (७४)

शिष्यौ ॥

कुतो धर्म्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति धर्म्मांशौ कथमाविर्भविष्यति ॥ (७५)

---

पुत्रस्य तादृग्भावानुबन्धं स्मृत्वा धीरत्वं तावदवलम्बस्व । एवं सातिशयम् । वेपसे कम्पसे । आर्य्यपुत्रस्य भर्त्तुरद्य इति यावत् । तादृग्भावानुबन्धं प्रागनुभूताभिप्रायप्रवृत्तिम् । धीरत्वं धैर्य्यम् ॥

(६९) पुरो इति । पुरोऽग्रतः । स्यात् पुरः पुरतोऽग्रत इत्यमरः । कर्म्मपदमेतत् व्यस्तग्यत्तुकारेति समासप्रसक्तावपि सोऽत्र नाङ्गीकर्त्तव्यः समासविधेरनित्यत्वात् तथात्वे ङ्गाषो यथापत्ते । स्वस्ति मङ्गलं भवत्विति शेषः । देवायेति नमःस्वस्त्यादिना स्वस्ति-योगाच्चतुर्थी । विधिवत् यथाविधि । अर्च्चिताः सत्कृताः । एते तपस्विन इति तान् दर्शयति । एषु तपस्विषु । उपाध्यायस्य एतेषामध्यापकस्य कण्वस्येति यावत् सन्देशः संवादः ॥

(७०) राजेति । अवहितः सावधानः ॥

(७१) शिष्याविति । सुगमम् ॥

(७२) राजेति । अभिवादये पादौ वन्दामि । समेतु पादग्रहणमभिवादनमित्युभे इत्यमरः ॥

(७३) शिष्याविति । सुगमम् ॥

(७४) राजेति । अपि प्रश्ने । गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपीत्यमरः ॥

(७५) शिष्याविति । कुत इति । त्वयि रक्षितरि परिपालनपरायणे सति सतां

राजा ॥ आत्मगतम् ॥ सर्व्वथा अर्थवान् खलु मे राजशब्दः । (७६)

प्रकाशम् ॥ तत्रभवान् कुशली कण्वः । (७७)

शार्ङ्ग ॥ राजन् स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्व्वकमिदमाह । (७८)

राजा ॥ किमाज्ञापयति भगवान् । (७९)

शार्ङ्ग ॥ यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपयेमे तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः । (८०)

---

घर्म्मांशुः कस्मात् धर्म्मक्रियायां श्रेयःसाधनक्रियाणां विघ्नः स्यात् । यदुक्तम् । द्रव्यक्रियागुणादीनां धर्म्मत्वं स्थापयिष्यते । तेषामैन्द्रियकत्वेपि न ताद्रूप्येण धर्म्मता । श्रेयःसाधनताह्येषां नित्यं वेदात्प्रतीयते । ताद्रूप्येण तु धर्म्मत्वं तस्मान्नेन्द्रियगोचर इति । अत्र दृष्टान्तयति तम इति । घर्म्मा उष्णा अंशवो यस्य स तस्मिन् सूर्य्ये । घर्म्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्बुनोरपीति विश्वः । तपति सन्तापयति सति कथं तमस्तिमिरमाविर्भविष्यति आगमिष्यति । अत्र दृष्टान्तोऽलङ्कारः । यदुक्तं प्रकाशे । दृष्टान्तः पुनरेतेषां सर्व्वेषां प्रतिबिम्बनादिति ॥

(७६) राजेति । आत्मगतमनतिप्रकाशम् । सर्व्वथा अङ्गीकारे । अर्थवान् लोकरञ्जकत्वमर्थमनुगतः । खल्ववधारणे ॥

(७७) प्रकाशमिति । सर्व्वश्राव्यमित्यर्थः । कुशली मङ्गलवान् । ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव चेति मनुः । अतएव परत्रानामयप्रश्नोक्तिः ॥

(७८) शार्ङ्गेति । स्वाधीनानि स्वेच्छामात्रसुलभानि कुशलानि येषां ते । सिद्धिमन्तः सिद्धाः । स कण्वः । अनामयप्रश्न आरोग्यप्रश्नः । अनामयं स्यादारोग्यमित्यमरः । तत्पूर्व्वकं तद्युक्तम् । इदं वक्ष्यमाणम् ॥

(७९) राजेति । सुगमम् ॥

(८०) शार्ङ्गेति मिथःसमयात् अन्योन्यप्रतिज्ञानात् गान्धर्व्वविधिनेति यावत् । गान्धर्व्वः समयान्मिथ इति याज्ञवल्क्यः । समयाः शपथाचारकालसिद्धान्तसम्विद इत्यमरः । संवित्प्रतिज्ञा । उपयेमे ऊढवान् । उपयमो विवाह इत्यात्मनेपदम् । प्रीति-

त्वमर्हतामग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्त्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ (८१)

तदिदानीमापन्नसत्त्वेयं प्रतिगृह्यताम् सहधर्म्मचरणायेति । (८२)

गौत ॥ भद्दमुह किम्पि वत्तुकामम्हि ण मे वअणावसरो अत्थि । (८३)

राजा ॥ आर्य्ये कथ्यताम् । (८४)

---

मता आत्मच्छन्दोमेव । युवयोः सम्बन्धे । अनुज्ञातमनुमतम् । साक्षमप्रष्टवतैः सत्यामच्छन्दोप-सम्भावनायां कुतः प्रीतिरित्याह कुत इति ॥

(८१) त्वमिति । त्वम् अर्हतां योग्यानां सत्क्रियाया इति शेषः । अर्हयोग्यत्वे इति कविकल्पद्रुमः । अग्रसरः । प्रथमः स्मृतश्चिन्तितोऽसि शकुन्तला नोऽस्माकं मूर्त्ति-मती शरीरिणी सत्क्रिया सत्कारभूतेव सत्काराहंस्यैव सत्कारलाभो न शोचनीय इति भावः । तुल्या अन्यूनातिरिक्ता गुणा यस्य तत् तथोक्तं वधूर्नवोढा योषित् । वधूः स्नुषा-नवोढस्त्रीभार्य्यास्वकाङ्गनासु चेति विश्वः । वरो वोढा । वरौ जामातृवोढाराविति वैज-यन्ती । सा च स च द्वयोः समाहारस्तत् समानयन् एकीकुर्व्वन् मेलयन्निति यावत् । समानाः सत्समैकेस्विरित्यमरः । प्रजापतिर्विधाता चिरस्य भाविनः कालस्य वाच्यं दूषणं न गतः । अतुल्यगुणयोर्योजने विधिर्दूषितः स्यादिति भावः । वाच्यन्तु कुत्सिते हीने वचनार्हे न पुंसि तु । दूषणे पालने इति शब्दाब्धिः । इदं वंशस्थविलं वृत्तम् ॥

(८२) तदिति । आपन्नसत्त्वा गर्भिणी । आपन्नसत्त्वा स्याद्गुर्व्विण्यन्तर्वत्नी च गर्भिणी-त्यमरः । सहेति । सपत्नीको धर्म्ममाचरेदिति स्मृतेरिति भावः ॥

(८३) गौतेति । भद्देत्यादि । भद्रमुख किमपि वक्तुकामास्मि न मे वचनावसरोऽस्ति । भद्रं साधु मुखं यस्य स भद्रमुख सुमुखः । इक्षिजात्यन्तरे भद्रो वाच्यवत् श्रेष्ठसाधुनोरिति विश्व । न मे वचनावसरोऽस्ति भवतोर्वाग्गतुबन्धादिति शेषः ॥

(८४) राजेति । सुगमम् ।

गौत ॥

णावेक्खिदो गुरुअणो इमिए ण तुएवि पुच्छिदो बन्धू ।

एक्कक्कस्स चरिए भणादु किं एक्कएक्कस्सिं ॥ (८५)

शकु ॥ आत्मगतम ॥ किणु क्खु अज्जउत्तो भणिस्सदि । (८६)

राजा ॥ साशङ्कमाकर्ण्य ॥ अये । किमिदमुपन्यस्तम् । (८७)

शकु ॥ आत्मगतम् ॥ हद्दी हद्दी सावलेवो से वअणावक्खेवो । (८८)

शार्ङ्ग ॥ किं नाम किमिदमुपन्यस्तमिति । ननु भवन्तएव सुतरां लोकवृत्तान्तनिष्णाताः । (८९)

---

(८५) गौतेति । णेति । नापेक्षितो गुरुजनोऽनया न त्वयापि पृष्टोबन्धुः । एकैकस्य च चरिते भणतु किम् एक एकस्मिन् ॥ अनया शकुन्तलया गुरुजन पित्रादि नापेक्षितो नानुज्ञापित । तथा त्वयापि बन्धु बधूस्वजनो न पृष्ट । एकैकस्य शकुन्तलाया तव च एकस्मिन्नभिन्ने अनपेक्षणरूपे इति यावत् । चरिते आचारे एक अनपेक्षितत्वात् परभूतः कस्व किं भणतु उक्तादन्यत् किं कथयतु यदाह तदेवोचितमितिभाव. । एके मुख्यान्य-केवला इत्यमर' । इय गाथा ॥

(८६) शकु इति । किमित्यादि । किन्नु खलु आर्य्यपुत्रो भणिष्यति । किन्नु वितर्के । खलु प्रश्ने ॥

(८७) राजेति । साशङ्क' सभयम् । अये सम्भ्रमे । अये कोपे विषादे च सम्भ्रमे स्मरणेपि चेति मेदिनी । उपन्यस्त' वक्तु मारब्धम् । उपन्यासस्तु वाङ्मुखमित्यमर ॥

(८८) शकु इति । हद्दीत्यादौ । हा धिक हा धिक् सावलेपोऽस्य वदनाक्षेप । सावलेपः सगर्व्वं । अवलेपस्तु गर्व्वे स्यादिति विश्व । वदनाक्षेपो वदनव्यापारनिषेध. । वचनाक्षेप इति क्वचित् तत्राक्षेप प्रयोग ॥

(८९) शार्ङ्गेति । किमिदमुपन्यस्तमिति किं नाम । नाम क्रोधे । नाम प्राकाश्य-सम्भाव्यक्रोधोपगमकुत्सने इत्यमर । भवन्त एव सुतरामतिशयेन लोकानां वृत्तान्तस्य वार्त्ताया निष्णाता अभिज्ञा ननु । प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता इत्यमर. । ननु प्रश्ने । सुतरामिति किमेत्याख्यातव्ये इति सुशब्दादुत्कर्षे चतराम् ॥

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्त्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः॥ (९०)

राजा॥ किमत्रभवती मया परिणीतपूर्व्वा। (९१)

शकु॥ सविषादमात्मगतम्॥ हिअअ संपदं संवुत्ता दे आसङ्का। (९२)

शार्ङ्ग॥
किं कृतकार्य्यद्वेषाद्धर्म्मं प्रति विमुखतोचिता राज्ञः। (९३)

राजा॥ कुतोऽयमसत्कल्पनाप्रसङ्गः। (९४)

---

(९०) सतीमिति। ज्ञातिकुलं पितृकुलं एकं केवलं संश्रयतीति ज्ञातिकुलैकसंश्रयाम्। ज्ञाति सगोत्रे पितरीति विश्व। सतीमपि प्रमदा जनोलोकोऽन्यथाभर्त्तृमतीं व्यभिचारिणीं विशङ्कते। ज्ञातिकुलैकसंश्रयां भर्त्तृमतीं सधवा सतीमपि जनो अन्यथा-व्यभिचारित्वेन विशङ्कते। इति वा योजना। अतो अस्मात् स्वबन्धुभि बंध्वा पित्रादिभि प्रिया अप्रिया वा भर्त्तुरिति शेष। प्रमदा युवति परिणेतु वोढु समीपे विद्यमानेति शेष। इष्यते अभिलष्यते। प्रमदा चेति विज्ञेया युवतिश तथा स्मृतेति भागुरि। वंशस्थविलं वृत्तम्॥

(९१) राजेति। परिणीतपूर्व्वा पूर्व्वं परिणीता॥

(९२) शकु इति। सविषादं सखेदम्। हिअअ इत्यादि। हृदय साम्प्रतं संवृत्ता ते आशङ्का। आशङ्का संवृत्ता आशङ्कनीयोऽर्थं सम्भूत॥

(९३) शार्ङ्गेति। किमिति। कृतकार्य्यस्य शकुन्तलाया गुर्व्वननुमतावपि परिणयस्य द्वेषादविहिताचारतयावधारणात् धर्म्मं प्रति विमुखता धर्म्मभ्रष्टता परिणयानङ्गीकारादिति भाव। किं राज्ञ उचिता। नियत येनाधर्म्माचिवर्त्तनीयो लोकचय इति भाव। एतत्पूर्व्वोक्तानन्तर राजवचनान्ते पराङ्ग द्रष्टव्यम्॥

(९४) राजेति। असत्या अमूलाया कल्पनाया उद्भावनाया अयं प्रसङ्ग कृत॥

शार्ङ्ग ॥ सक्रोधम् ॥ (६५)

मूर्छन्त्यमी विकाराः प्रायेणैश्वर्य्यमत्तानाम् । (९६)

राजा ॥ विशेषेणाधिक्षिप्तोऽस्मि । (९७)

गौत ॥ शकुन्तलां प्रति ॥ जादे मुहुत्तअं मा लज्ज अवणइस्सं दाव दे अवगुण्ठणं तदो भट्टा तुमं अहिजाणिस्सदि ।

इति तथा करोति । (९८)

राजा ॥ शकुन्तलां निर्व्वर्ण्य स्वगतम् । (९९)

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवेत्यव्यवस्यन् ।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम् ॥ (१००)

---

(९५) शार्ङ्गेति । सक्रोधं क्रोधेन सह श्लोकोत्तरार्द्धमाहेत्यर्थः ॥

(९६) मूर्छन्तीति । ऐश्वर्य्येण मत्ताया मदं गतानाम् अमी विकाराः प्रकृतिविपर्य्ययाः प्रायेण मूर्छन्ति उच्छ्रयन्ति । मूर्छा मोह उच्छ्रये इति कविकल्पद्रुमः । इयमार्य्या जातिः ॥

(९७) राजेति । विशेषेणातिशयेन अधिक्षिप्तो भर्त्सितः । अधिक्षिप्तं प्रणिहिते कुत्सिते भर्त्सिते क्षिप्तेति मेदिनी ॥

(९८) गौतेति । प्रति लक्ष्मीकृत्य । प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगत इत्यमरः । जादे इत्यादि । जाते मुहूर्त्तं मा लज्जस्व अपनेष्यामि तेऽवगुण्ठनं ततो भर्त्ता त्वामभिज्ञास्यति । मुहूर्त्तं कञ्चित् क्षणान् मा लज्जांस्व लज्जिता मा भव । अपनेष्यामि उद्घाटयिष्यामि । अवगुण्ठनं शिरःप्रच्छादनम् । अभिज्ञास्यति सैयमिति परिचेष्यति । तथा करोति अवगुण्ठनमपनयति ॥

(९९) राजेति । निर्व्वर्ण्य सविशेषं प्रेक्ष्य ॥

(१००) इदमिति । एवमित्यप्रकारेण उपनतमुपगतम् अक्लिष्टा अम्लाना कान्तिः शोभा यस्य तत् अक्लिष्टकान्ति इदं रूपं प्रथमपरिगृहीतमादौ स्वीकृतं स्यान्न वा इति

इति विचारयन् स्थितः । (१०१)

प्रती ॥ स्वगतम् ॥ अम्मो धम्मावेक्खिणो भट्टिणो ईदिसं णाम सुहोवणदं इत्थीरअणं पेक्खिअ को अण्णो विआरेदि । (१०२)

शार्ङ्ग ॥ भो राजन् किमिति जोषमास्यते । (१०३)

राजा ॥ भोस्तपस्विनः चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि तत् कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानमक्षत्रियं मन्यमानः प्रतिपत्स्ये । (१०४)

शकु ॥ स्वगतम् ॥ हद्धी हद्धी कधं परिणए ज्जेव सन्देहो भग्गा दाणिं दूरारोहिणी आसालदा । (१०५)

---

एतस्मिन् विषये अध्यवस्यन् मनोऽभिनिवेशयन्नह निशान्ते निशावसाने भ्रमरो अन्तर्मध्ये तुषारो नीहारो यस्य तत् तथोक्तं कुन्दं पुष्पमिव सपदि सद्यो न खलु भोक्तुं सेवितुं नापि मोक्तुं त्यक्तुं शक्नोमि । शकुन्तलाया अपत्यसत्त्वात् कुन्दसौसादृश्यम् । अत्रोपमालङ्कारः । यदुक्तम् दण्डिना । यथा कथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते । उपमाहेति । इदं मालिनी नाम वृत्तम् ॥

(१०१) इतीति विचारयन् तर्कं कुर्वन् ॥

(१०२) प्रतीति । अम्मो इति । अहो धर्म्मावेक्षिणो भर्त्तार ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति । धर्म्ममवेक्षन्ते धर्म्मं प्रति जाग्रति अनन्यमनसा धर्म्मं पश्यन्तीति यावदिति धर्म्मावेक्षिणः । अवेक्षा प्रतिजागर इत्यमरः । ईदृश मित्यादि हेलः । सुखोपनतमप्रयत्नोपगतम् । स्त्रीरत्नमुत्कृष्टस्त्रियम् । जातौ जातौ यदुत्कृष्टं तद्रत्नमिति यादवः । विचारयति तर्कयति ॥

(१०३) शार्ङ्गेति । जोषं तूष्णीम् । आस्यते स्थीयते । तूष्णीमर्थे सुखे जोषमित्यमरः ॥

(१०४) राजेति । चिन्तयन् विचारयन् । स्वीकरणं परिग्रहम् । अभीति । अभिव्यक्तं स्पष्टमनुभूयमानं सत्त्वलक्षणं गर्भलक्षणं यस्याः सा ताम् । अक्षत्रियमिति । तत्र क्षत्रियत्वव्याघात इति भावः । प्रतिपत्स्ये ग्रहीष्ये ॥

(१०५) शकु इति । हद्धीत्यादि । हा धिक् हा धिक् कथं परिणय एव सन्देह भग्नेदानीं दूरारोहिणी आशालता । परिणय एव विवाह एव का कथा प्रत्यभिज्ञान

शार्ङ्ग ॥ मा तावत् । (१०६)

कृतावमर्षामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन ॥ (१०७)

शार० ॥ शार्ङ्गरव विरम त्वमिदानीं शकुन्तले वक्तव्यमुक्तमस्माभिः सोऽयमत्रभवानेवमाह दीयतामस्मै प्रत्ययप्रतिवचनम् । (१०८)

---

इति भावः । दूरमारोहतीति दूरारोहिणी । आशालता राजगृहमासाद्य एवमेवं सुखमनुभविष्यामीति वासनारूपा लता । अत्र रूपकालङ्कारः । यदुक्तं दण्डिना । उपमैव तिरोभूतभेदा रूपकमुच्यत इति ॥

(१०६) शार्ङ्गेति । मा तावदिति । मा भवतु स्मरणमिति शेषः । तावत् तदा त्वया मुनिर्विमान्य इति श्लोकीयेन पूरणम् ॥

(१०७) कृतेति । कृतावमर्षां त्वया कृतस्पर्शां सुतां कन्यामनुमन्यमानः परिग्रहीष्टगामिन्येव भवत्वित्यनुजानन् मुनिः कण्वः त्वया नाम विमान्यः अवमाननीयः । नाम क्रोधे । नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने इत्यमरः । तदा मुनेरवमाननमेवोचितमभवदिति भावः । तदनौचित्यं प्रतिपादयितुमुद्दिश्य विधेयभावेन विशेषणमाह मुष्टमित्यादिना । मुष्टं चोरितं पुनर्लब्धमित्यर्थः । स्वं स्वीयमर्थं स्वर्णादिकं प्रतिग्राहयता पात्रसात् कुर्वता अनेन दस्युरिव येन मुनिना त्वं पात्रीकृतः सुतासम्प्रदानीकृतोऽसि । दानपात्रं सम्प्रदानमित्युक्तेः । चौरस्य स्वर्णादिग्रासाद्य पुनस्तच्चौर एव यथा पात्रीक्रियते तद्वदिति भावः । अत्रावमर्षः स्पर्शः । तथा च मृषयो मृषीति कविकल्पद्रुमव्याख्याने अनिर्दिष्टार्थत्वात् स्पर्शने प्रणिधानश्चास्यार्थः । स्पर्शने यथा परामृशन् हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितमिति रघुः । प्रणिधाने यथा रामप्रवासे व्यमृशद्दोषं जनापवादं सनरेन्द्रमृत्युमिति भट्टिरिति धातुदीपिका । अत्रोपमालङ्कारः । वृत्तमुपजातिः ॥

(१०८) शारेति । विरम वचनान्निवर्त्तस्व । शकुन्तला प्रत्याह शकुन्तले इति । अस्माभिर्वक्तव्यमुक्तम् । सोऽयं यमुद्दिश्योक्तमित्यर्थः । एवं भवत्या स्मृतमित्यर्थः । अस्मै राज्ञे । प्रत्ययप्रतिवचनं विश्वासकरं प्रतिवचनम् ॥

शकु ॥ स्वगतम् ॥ इमं अवत्थन्तरं गदे तादिसे अगुराए किंवा सुमराविदेण अधवा अत्ता दाणिं मे सोधणीओ होदु त्ति किञ्चिवदिस्सं । (१०९)

प्रकाशम् ॥ अज्जउत्त । इत्यर्द्धोक्ते ॥ अधवा संसइदो दाणिं एसो समुदाचारो । पोरव जुत्तं णाम तुह पुरा अस्समपदे सभावुत्ताणहिअअं इमं जणं तधासमअपुव्वअं सम्भाविअ सम्पदं ईदिसेहिं अक्खरेहिं पच्चाक्खादुं । (११०)

राजा ॥ कर्णौ पिधाय ॥ शान्तं शान्तम् । (१११)

---

(१०९) शकु इति । स्वगतमनतिप्रकाशम् । इममित्यादि । इदमवस्थान्तरं गते तादृशेऽनुरागे किंवा स्मारितेन अथवा आत्मेदानीं शोधनीयो भवत्विति किञ्चिद्वदिष्यामि । इदमवस्थान्तरं वैपरीत्यदशाम् । तादृशे प्रागनुभूतानिर्वचनीये । स्मारितेन स्मरणाय प्रेरितेन । अनेन किं फलमित्यर्थः । फलानुपलब्ध्याह अथवेति । शोधनीयो निर्द्दोषीकरणीय इति शेषः ।

(११०) प्रकाशमिति । स्पष्टमित्यर्थः । अज्जउत्त आर्य्यपुत्र इति अर्द्धोक्ते सत्याह अधवेत्यादि । अथवा संशयित इदानीमेष समुदाचारः । पौरव युक्तं नाम तव पुरा आश्रमपदे सद्भावोत्तानहृदयमिमं जनं तथा समयपूर्व्वकं सम्भाव्य साम्प्रतमीदृशै रक्षरैः प्रत्याख्यातुम् । एष समुदाचारः पत्नीत्वव्यवहारः आर्य्यपुत्रपदप्रयुक्तेति भावः । आर्य्यपुत्रेति सम्बोध्यः पतिः पत्नीजनेन वेति भरतः । संशयितः संशयविषयतां गतः । यद्वा एष समुदाचारो नृपतेराशयः संशयितो जातसंशयः । समुदाचारा स्वभिप्राया इति त्रिकाण्डशेषः । पुरा प्राक् । आश्रमपदे आश्रमस्थाने । सद्भावेन प्रणयेन उत्तानं विपर्य्यस्तगाम्भीर्य्यं हृदयं यस्य तं जनम् । निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्य्यये इत्यमरः । समयपूर्व्वकं प्रतिज्ञापूर्व्वकं तथा तादृशेन परिणयबहुत्वेऽपीत्याद्युक्तेन वाक्येनेति यावत् । सम्भाव्य बहुमत्य साम्प्रतमिदानीमीदृशैः चिन्तयन्नपि न खलु स्वीकरणमलभमत्याः स्मरामीत्यादिभिरक्षरैर्वर्णैः प्रत्याख्यातुं निराकर्त्तुं तव नाम युक्तम् ॥

(१११) राजेति । शान्तं शान्तं विरमतु विरमतु । शान्तं वारणे अव्ययम् । वारणे शान्त अव्ययमिति मेदिनी ॥

व्यपदेशमाविलयितुं समीहसे माञ्च नाम पातयितुम्।
कूलङ्कषेव सिन्धुः प्रसन्नमोघं तटतरुञ्च ॥ (११२)

शकु॥ भोदु जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं पउत्तं ता अहिणाणेण केणवि तुह आसङ्कं अवणइस्सं। (११३)

राजा॥ प्रथमः कल्पः। (११४)

शकु॥ मुद्रास्थानं परामृश्य॥ हद्धी हद्धी अङ्गुलीअअसुण्णा मे अङ्गुली। इति सविषाद गौतमीमुखमीक्षते॥ (११५)

---

(११२) व्यपदेशमिति। कूलं कषति भिनत्तीति कूलङ्कषा। प्रियवशादिति कुलोपपदात्कषे खच्। खित्वात् कूलस्य मुन्। सिन्धुर्नदी। सिन्धु समुद्रे नद्याञ्च नदे देशभेदानयोरिति विश्वः। यथा प्रसन्नं स्वच्छमोघं जलवेगमाविलयितुं कलुषीकर्त्तुम्। कलुषोऽनच्छ आविल इत्यमरः। तटतरुं तीरस्थतरुञ्च पातयितुं समीहते तथा त्वं नाम व्यपदेशं व्यवहारम् आचारमिति यावत्। व्यपदेशस्तु नामनि। याच्ञे व्यवहारे चेति शब्दाब्धिः। अथवा व्यपदिश्यते व्यवह्रियते अनेनेति व्यपदेशं कुलम् आविलयितुं माञ्च पातयितुं पतितं कर्त्तुं समीहसे वाञ्छसि। अत्रोपमालङ्कारः। आर्य्या जातिः॥

(११३) शकु इति। भोदुइत्यादि। भवतु यदि परमार्थतः परपरिग्रहशङ्किना त्वया एवं प्रवृत्तम् तदभिज्ञानेन केनापि तवाशङ्कामपनेष्यामि। परमार्थतो यथार्थतः। परपरिग्रहशङ्किना परकलत्रसन्देहिना। पत्नी परिजनादानमूलशापाः परिग्रहा इत्यमरः। *एवं प्रवृत्तमित्थमाचरितम्। तव् तदा। अभिज्ञायते परिचीयते*ऽनेनेत्यभिज्ञानं संशयच्छेदि वस्तु तेन। तवाशङ्का तव संशयारोपम्। अपनेष्यामि अपसारयिष्यामि।

(११४) राजेति। प्रथम कल्पो मुख्यकल्पः॥

(११५) शकुइति। मुद्रास्थानमङ्गुरीयस्थानम्। अङ्गुलिदेशमिति यावत्। परामृश्य स्पृष्ट्वा। हद्धीत्यादि। हा धिक् हा धिक् अङ्गुरीयकशून्या मे अङ्गुलि। सुगमम्। सविषादं सखेदम्॥

गौत ॥ णूणं दे सक्कावदारे सचीतीत्थोदअं वन्दमाणाए पब्भट्टं अङ्गुलीअअं । (११६)

राजा ॥ सस्मितम् ॥ इदं तावत् प्रत्युत्पन्नमतित्वं स्त्रीणाम् । (११७)

शकु ॥ एत्थ दाव विहिणा दंसिदं पहुत्तणं अवरं दे कथइस्सं । (११८)

राजा ॥ श्रोतव्यमिदानीम् । (११९)

शकु ॥ णं एक्कदिअहे वेदसलदामण्डवे णलिणीवत्तभाअणगदं उदअं तुह हत्थे सण्णिहिदं आसी । (१२०)

राजा ॥ शृणुमस्तावत् । (१२१)

---

(११६) गौतेति । णूणमित्यादि । नूनं ते शक्रावतारे शचीतीर्थोदकं वन्दमानाया प्रभ्रष्टमङ्गुलीयकम् । शक्रावतारो भागीरथीतीरस्थजनपदविशेष तत्र शचीतीर्थं जाह्नव्या शचीतीर्थम् । तीर्थशक्तमित्युपक्रम्य षष्ठे माले च मन्त्रिणीति यस्त्राब्धि । अतएव वक्ष्यति शचीतीर्थं सलिलं वन्दमानायास्ते सख्या हस्ताद्गङ्गास्रोतसि परिभ्रष्टमिति । तस्य उदकं तत्रस्थं जाह्नव्या जलं वन्दमानाया. स्पर्शपूर्वक प्रणमन्त्या । प्रभ्रष्टमङ्गुल्या स्खलितम् ॥

(११७) राजेति । इदम् अङ्गुरीयकस्यानदर्शनं पुन पतनाभिव्यञ्जनञ्च । प्रत्युत्पन्नमतित्व प्रतिभान्वितत्वम् । प्रतिभातु प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मतेति रुद्रोक्ता ॥

(११८) शकु इति । एत्थेत्यादि । अत्र तावत् विधिना दर्शितं प्रभुत्वम् । अपरन्ते कथयिष्यामि । अत्र अङ्गुरीयकपाते तावत् विधिना दैवेन प्रभुत्वम् अलङ्घनीयप्रभावत्वं दर्शितं प्रकटितम् । अपर अभिज्ञानमित्यर्थं ॥

(११९) राजेति । श्रोतव्यं श्रवणार्हम् ॥

(१२०) शकु इति । णमित्यादि । नन्वेकदिवसे । वेतसलतामण्डपे नलिनीपत्रभाजनगतमुदक तव हस्ते सन्निहितमासीत् । वेतसलता वानीरगता लता स्ताभिर्मण्डपे निकुञ्जे । नलिनीपत्रभाजनगत नलिनीपत्रपुटकस्थम् । सन्निहितमवस्थितम् ॥

(१२१) राजेति । शृणुम स्तावत् न तवात् श्रणम इति भाव ॥

यक् ॥ तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिदो तदो तुए अअं दाव पढमं पिअदु त्ति अणुकम्पिणा उवच्छन्दिदो उदएण ण उण सो अपरिचिदस्स दे हत्थादो उदअं उवगदो पाउं पच्छा तस्सिं ज्जेव उदए मए गहिदे किदो तेण पणओ एत्थन्तरे विहसिअ तुए भणिदं सव्वो सगन्धे वीससदि जदो दुवेवि तुह्मे आरण्णआओ त्ति । (१२२)

राजा ॥ आभिस्तावदात्मकार्य्यप्रवर्त्तिनीभिर्मधुराभिरनृतवाग्भिराकृष्यन्ते विषयिणः । (१२३)

---

(१२२) यक् इति । तक्खणमित्यादि । तत्क्षणं स मे पुत्त्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थित ततस्त्वया अयं तावत् प्रथमं पिबत्विति अनुकम्पिना उपच्छन्दित उदकेन, न पुन सोऽपरिचितस्य ते हस्तादुदकमुपगत पातुं पश्चात्तस्मिन्नेवोदके मया गृहीते कृतस्तेन प्रणय । अत्रान्तरे विहस्य त्वया भणितं सर्व्व स्वगन्धे विश्वसिति यतो द्वे अपि युवामारण्यके इति । तत क्षणमिति देशाध्वकालभावमित्यनेन कर्म्मता । पुत्त्रकृतक कृत्रिमपुत्त्र । दीर्घापाङ्गौ नेत्रान्तौ यस्य स । मृगपोतको मृगशिशु । पोत पाकोऽर्भकोडिम्भ पृथुक शावक शिशुरित्यमर । ततइति । अनुकम्पिना सदयेन त्वया अय मृगशिशुस्तावत प्रथम पिबत्विति इत्युक्त्वा उदकेन तेन नलिनीपत्रभाजनगतेन जलेन उपच्छन्दित प्रलोभित । स पुनर्मृगपोतक अपरिचितस्य अनातपरिचयस्य ते हस्तादुदक पातुं नोपगत । प्रणयो विश्वास । प्रणयास्त्वमी । विस्रम्भ याच्ञा प्रेम णेत्यमर । स्वगणे आत्मीयगणे । तच्च मृगपोतकस्येत्येकशेषादन्यपदलोपे युवामिति क्लीवत्वम । आरण्यके । अरण्योद्भवे । इति भणितमित्यन्वित्तम ॥

(१२३) राजेति । आत्मकार्य्येषु स्वोद्देश्येषु प्रवर्त्तयितुं नियोजयितुं शीलं यासा ताभिरात्मकार्य्यप्रवर्त्तिनीभि । मधुराभि प्रियाभि । स्वादुप्रियौ च मधुराविसमर । अनृतवाग्भिरसत्यवाग्भि । सत्य तथाभ्त सम्यगित्यमर ।

गौत ॥ महाभाअ णारिहसि एव्वं मन्तिदुं तवोवणसंवड्ढिदो क्खु अअं जणो अणभिण्णो कइदवस्स । (१२४)

राजा ॥ अयि तापसवृद्धे । (१२५)

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः परिबोधवत्यः ।
प्रागन्तरीक्षगमनात् स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः किल पोषयन्ति ॥ (१२६)

शकु ॥ सरोषम् ॥ अणज्ज अत्तणो हिअआणुमाणेण किल सव्वं पेक्खसि को णाम अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तुह अणुआरी भविस्सदि । (१२७)

---

आलम्ब्यन्ते वशीक्रियन्ते । विषयिणः इन्द्रियवैकताना । कामिन इति यावत् ॥

(१२४) गौतेति । महेत्यादि । महाभाग नार्हस्येवं मन्त्रयितुं तपोवनसम्वर्द्धित खल्वयं जनोऽनभिज्ञ कैतवस्य । मन्त्रयितुं विवेचयितुम् । कैतवस्य अनभिज्ञ कपटानभिज्ञ । कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमरः ॥

(१२५) राजेति । तापसेषु तपस्विजनेषु वृद्धे अथवा तापसी चासौ वृद्धा चेति समासः ॥

(१२६) स्त्रीणामिति । अमानुषीषु मानुषीभिन्नासु पश्वादिस्त्रीषु अशिक्षितपटुत्वमनुपदिष्टचातुर्य्यं संदृश्यते उत भो या परि सर्वतोभावेन बोधवत्यस्तेन ताभ्यो मानुष्य इति यावत् । ताः किं किं निर्दिशन्तु इत्यर्थः । अमानुषीषु चातुर्य्यं दर्शयति प्रागित्यादि । परभृता कोकिला किल अन्तरीक्षगमनादुड्डयनात् प्राक् पूर्वं स्वं स्वीयमपत्यजातमपत्यसमूहं अन्यैर्द्विजै रितरपक्षिभि काकैरिति यावत् । दन्तविप्राण्डजा द्विजा इत्यमरः । पोषयन्ति पालयन्ति । किल वार्त्तायाम् । वसन्ततिलकं वृत्तम् ॥

(१२७) शकु इति । अणज्जेति । अनार्य्य आत्मनो हृदयानुमानेन किल

राजा ॥ आत्मगतम् ॥ वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते । तथाहि । (१२८)

न तिर्य्यगवलोकितं भवति चक्षुरालोहितं
वचोऽतिपरुषाक्षरं नच पदेषु संगच्छते ।
हिमार्त्त इव वेपते सकल एव बिम्बाधरः
प्रकामविनते भ्रुवौ युगपदेव भेदं गते ॥ (१२९)

---

सर्वं प्रेक्षते को नागान्यो धर्मकञ्चुकव्यपदेशिनस्तृणच्छन्नकूपोपमस्य तवानुकारी भविष्यति । अनार्य्य अत्रेह । आत्मनो हृदयानुमानेन आत्महृदयवदनुमानेन किल सम्भावनायाम् । वार्त्तासम्भाव्ययोः किलेत्यमरः । नाम कुत्सने । धर्मेति धर्म-कञ्चुकेन धर्मरूपबहिरङ्गावरणेन व्यपदेशिनः भाषमाणस्य । बहिर्धर्माचरणेनान्त-र्दोषमदर्शयत इति यावत् । अतएव तृणैश्छन्न आच्छन्नस्तो य कूपस्तदुपमस्य तत्सदृशस्य तव कोऽन्य इतरजनः अनुकारी सदृशो भविष्यति । त्वमेवात्मानमनु-कर्त्तुमर्हसीति भावः ॥

(१२८) राजेति । वनवासादनभिज्ञातनागरीस्वभावत्वात् । अविभ्रमः शृङ्गारभावजातविकाररहितः । नागरीणान्तु कोपो न विभ्रमं रुणद्धीति भावः । तद्दर्शयति तथाहीति ॥

(१२९) न तिर्य्यगिति । अस्याः अवलोकितं दर्शनं न तिर्य्यक् वक्रम् । सविभ्रमे तु कोपे दृष्टिर्वक्रैव भवतीति भावः । चक्षुर्नेत्रमालोहितमतिरक्त-मभवति । सति तु विभ्रमे चक्षुषो नातिलौहित्यमिति भावः । तथा वचो भाषि-तम् अतिपरुषाक्षरं अतिनिष्ठुराणि अक्षराणि वर्णा यस्मिन् तत् तथोक्तम् । तथा पदेषु लक्ष्यविशेषेषु मादृशपुरुषेष्विति यावत् । न सङ्गच्छते च न सङ्गतं भवति च । नागरीभिस्तु न तथोच्यत इति भावः । हिमार्त्तः शीतार्त्त इव सकल एव न त्वल्पभागमात्रं सविभ्रमे तु तथैव भवतीति भावः । बिम्बाधरो बिम्बिका-फलमिवाधरो लोहितवर्णोऽधर इति यावत् । वेपते कम्पते । बिम्बस्तु प्रतिबिम्बेऽपि मण्डले पुंनपुंसकम् । बिम्बिकायाः फले क्लीबं ऋकलासे पुनः

अपिच । सन्दिग्धबुद्धिं मामधिकृत्य अकैतव एवास्याः कोपः सम्भाव्यते । तथाह्यनया । (१३०)

मय्येवमस्मरणदारुणचित्तवृत्तौ
९८ वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ (१३१)

प्रकाशम् ॥ भद्रे प्रथितं दुष्मन्तस्य चरितं प्रजास्वपीदं न दृश्यते । (१३२)

---

प्रमानिति मेदिनी । तया प्रकामभिन्नते अतिनम्रीभूते भ्रुवौ युगपदेकदेश भेदं द्वैधं गते । अन्यथा न तथेति भावः । इदं पृथ्वी नाम वृत्तम् । तदुक्तम् । द्वितीयमविकुन्तले यदि पदद्वयं द्वादशम । चतुर्दशमथ प्रिये गुरुगभीरनाभिह्रदे । यमह्रदशमन्तिमं तदनु यत्र कान्ते यतिर्निखाविनि गजमहैर्भवति साध्वि पृथ्वीह्रि सेति ॥/

(१३०) अपिचेति । सन्दिग्धा सन्देहवती बुद्धिर्यस्य स तम । अधिकृत्य उद्दिश्य । अकैतव छ· कापद्यशून्य एव सत्यरूपेति यावत् । तदेवोपपादयितुमाह तथाह्योति । अनया शकुन्तलया ॥

(१३१) मयीति । एवमित्यम्भूतेनास्मरणेन दारुणा भीषणा चित्तवृत्तिर्मनोवृत्तिर्यस्य स तस्मिन् । दारुणं भीषणं भीष्ममित्यमरः । अतएव रहो निर्ज्जने वृत्तं भूतं प्रणयम् । विविक्तविजनच्छन्ननि शलाकास्तथा रहः । रहश्चोपांशु चालिङ्गे इत्यमरः । अप्रतिपद्यमाने अमन्यमाने मयि अतिरुषा अतिक्रोधेन हेतुना अतिलोहिते अक्षिणी यस्याः सा तया अनया शकुन्तलया कुटिलयोः कुञ्चितयोर्भ्रुवोः भेदात् द्वैधीकरणात् स्मरस्य कामस्य शरासनं धनुः भग्नं खण्डितमिव । साम्प्रतं क्रुद्धेव स्मरस्य धनुर्भग्नं येन पुनरसौ न प्रहर्त्तुं शक्नुयादिति भावः । अत्रोत्प्रेक्षालङ्कारः । वसन्ततिलकं वृत्तम् ॥

(१३२) प्रकाशमिति । दुष्मन्तस्य चरितमाचरणं प्रथितं विख्यातं । यतः

शकः॥

तुह्मे ज्जेव पमाणं जाणाध धम्मट्ठिदिञ्च लोअस्स।
लज्जाविणिज्जिदाओ जाणन्ति ण किम्पि महिलाओ॥ (१३३)
सुट्ठु दाव अत्तच्छन्दाणुचारिणी गणिआ समुवट्ठिदा। (१३४)

गौत। जादे इमस्स पुरुवंसमच्चएण सुहमअणो छिअअविसस्स इत्थं समुवगदासि। (१३५)

---

इद परकलत्रोपादान प्रजास्वपि न दृश्यते प्रजाभिरप्येवं न क्रियत इत्यर्थः। अथवा दुष्मन्तस्य चरितमाचरण यत्कथितमधर्मोऽमर इत्युक्तेन विख्यातं अपि किं इदं प्रजासु न दृश्यते नानुभूयते भवत्येति शेष। दृष्टि र्ज्ञानेऽक्ष्णि दर्शन इत्यमरः। तथाच प्रजाभिरपि नाधर्मः क्रियत इति भावः॥

(१३३) शकु इति। तुह्मे इत्यादि। यूयमेव प्रमाणं जानीथ धर्मस्थितिञ्च लोकस्य। लज्जाविनिर्ज्जिता जानन्ति न किमपि महिला। यूयमेव प्रमाणं विधिनिषेधात्मक तथा लोकस्य जनस्य धर्मस्थितिं धर्ममर्य्यादाञ्च जानीथ। मर्य्यादा धारणा स्थितिरित्यमरः। लज्जया विनिर्जिता अभिभूता महिला मादृश्यो नार्य्यं किमपि न जानन्ति। अत कथ प्रजासु मे द्रष्टव्यमित्याशय। वनिता महिलाद्वयेत्यमरः। अत्र स्तुत्या निन्दाया गम्यत्वात् व्याजरूपस्तुतित्वेन व्याजस्तुतिरलङ्कार। यदुक्त प्रकाशे। व्याजस्तुति र्मुखे निन्दा स्तुतिर्वारूढिरन्यथेति। अन्यथा रूढिरन्ययाव्यक्ति। निन्दया स्तुते स्तुत्या निन्दाया इत्यर्थः। इय गाथा॥

(१३४) सुट्ठिति। सुष्ठु तावदात्मच्छन्दानुचारिणी गणिका समुपस्थिता। सुष्ठु भद्रमित्यर्थः। तावत् तदा। आत्मेति। आत्मनश्छन्देनाभिप्रायेण अनुचारिणी स्वेच्छाचारिणीत्यर्थः। अभिप्रायश्छन्द आशय इत्यमरः। गणिका वेश्या। वारस्त्री गणिका वेश्या इत्यमरः। समुपस्थिता भवत्संमुखमुपस्थिता॥

(१३५) गौतेति। जादे इत्यादि। जाते अस्य पुरुवंशप्रत्ययेन सुखमधो-

शकु ॥ पटान्तेन मुखमाच्छाद्य रोदिति । (१२६)

शार्ङ्ग ॥ इत्थमप्रतिहतं चापल्यं दहति । (१२७)

अतः परीक्ष्य कर्त्तव्यं विशेषात् सङ्गतं रहः ।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ (१२८)

राजा ॥ अयि भो किमत्रभवतीप्रत्ययादेवास्मानसम्भृतदोषैरधिक्षिपन्ति भवन्तः । (१२९)

---

हृदयविषस्य हस्तं समुपगतासि । मुखमात्रमधुरेण महात्मना पुरोर्वंश इति विश्वासेन । मुखे मधु यस्य स तस्य । तथा हृदये विषं यस्य स तथोक्तस्य अस्य पुरुषस्य हस्तं समुपगतासि परिणयविषयता गतासि । प्रश्नोयम् ॥

(१२६) शकु इति । पटान्तेन वस्त्रान्तेन ॥

(१२७) शार्ङ्गेति । चापल्यमात्मनश्चाञ्चल्यम् अप्रतिहतं येन केनापि प्रणयकरणादिकार्य्यादनिवारितं सत् इत्थमिदम्प्रकारेण दहति तापयति । चपलश्चिकुरे चले इति विश्वः ॥

(१२८) अत इति । अतोऽस्मात् आत्मचाञ्चल्याप्रतिघातस्य तापानुबन्धित्वादिति यावत् । विशेषात् परीक्ष्य रहो निर्ज्जने सङ्गतं सौहार्दं कर्त्तव्यम् । अत्रकता सङ्गताजर्थयो पर्यायता दर्शिता । अजर्यन्तु सौहृद्ये क्लीबलिङ्गमकोषितमिति शब्दाब्धि । अज्ञातं हृदयं मनो येषां ते तेषु पुरुषेषु सौहृदं प्रणय एवमित्थं वैरीभवति अवैरमपि वैरं भवति । प्रणयोपि विद्वेषायत इति भावः । अत्र सामान्येनार्थान्तरेण प्रस्तुतार्थसमर्थनादर्थान्तरन्यासोऽलङ्कारः । यदुक्तं दण्डिना । ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुन इति ॥

(१२९) राजेति । अत्रभवत्यां प्रत्ययादेतस्यां विश्वासादेव भवन्तोऽस्मान् किमसम्भृतदोषैरनाहृतदोषैरधिक्षिपन्ति भिन्दन्ति । प्रश्नोयम् । भवच्छब्दस्य युष्मदर्थस्यैव सर्व्वनामसंज्ञानियमादत्र भवतीत्यत्र न पुंवत् स्त्रोरिति पुंवद् भावः ॥

शार्ङ्ग ॥ सासूयम् ॥ श्रुतं भवद्भिरधरोत्तरम् । (१४०)

आजन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
पराभिसन्धानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ (१४१)

राजा ॥ अहो सत्यवादिन्, अभ्युपगतं तावदस्माभिः एवंविधा एव वयं किं पुनरिमामभिसन्धाय लभ्यते । (१४२)

---

(१४०) शार्ङ्गेति । भवद्भिरित्यनेन तत्रस्थाः सोमरातादय उच्यन्ते । अधरोत्तरं विपरीतं । वैपरीत्यार्थे अधरोत्तरशब्दो मनुना प्रयुक्तो यथा सप्तमाध्याये राज्ञो दण्डवर्णने । अद्यात् काकः पुरोडाशं श्वावलिह्याद्धविस्तथा । स्वाम्यञ्च न स्यात् कस्मिंश्चित् प्रवर्त्तेताधरोत्तरमिति । तथाष्टमाध्याये वादिन सदोषोक्तौ । अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः । यश्चाधरोत्तरानर्थान् विगीतान्नावबुध्यत इति च ॥

(१४१) वैपरीत्यं दर्शयति । आजन्मन इति । यो जन आजन्मन जन्मावधि शाठ्यमशिक्षित केनापि शठतां न शिक्षित तस्य जनस्य वचनमप्रमाणं प्रमीयते अनेनेति प्रमाणं निश्चयहेतु नं । यैः पुरुषैः परेषां मनूणां दोषप्रदर्शनपरत्या दन्धेषामित्यपि ध्वनि । पर अंशारिदूरान्योत्तरे क्लीवन्तु केवल इति मेदिनी । अभिसन्धानं प्रतारणम् । वञ्चनस्त्वभिसन्धानं व्यलीकञ्च प्रतारणमिति हेमचन्द्रः । विद्येतिबुद्ध्या अधीयते ते किल पुरुषा आप्ताः प्रत्ययिता वाचो येषां ते तथोक्ताः सन्तु भवन्तु । आप्तः प्रत्ययित स्त्रिष्वित्यमरः । उपहासोऽत्र ॥

(१४२) राजेति । अहो शब्दः सम्बोधनार्थः । अहो धिगर्थे शोके च करुणार्थविषादयोः । सम्बोधने प्रशंसायामिति मेदिनी । अस्माभिस्तावदभ्युपगतमङ्गीकृतम् । अङ्गीकाराभ्युपगमप्रतिश्रवसमाधय इत्यमरः । वयमेवंविधा

शार्ङ्ग॥ विनिपातः। (१४३)

राजा॥ विनिपातः पौरवैर्लभ्यत इत्यश्रद्धेयमेतत्। (१४४)

शार्ङ्ग॥ भो राजन् किमत्रोत्तरैः अनुष्ठितो गुरुनियोगः सम्प्रति प्रतिनिवर्त्तामहे वयम्। (१४५)

तदेषा भवत पत्नी त्यज वैना गृहाण वा।
उपपन्नाहि दारेषु प्रभुता विश्वतोमुखी॥ (१४६)

गौतमि गच्छाग्रतः। (१४७)

इति सर्व्वे प्रस्थिता। (१४८)

शकु ॥ अहं दाणिं इमिणा किदवेण विप्पलद्धा तुम्हे बि मं परिच्चअध । इत्यनुप्रस्थिता । (१४९)

गौत ॥ स्थित्वा परिवृत्यावलोक्य च ॥ वच्छ सङ्गरव अणुगच्छदि णो करुणपरिदेविणी सउन्तला पच्चादेसपरुसे भत्तारि किं करेदु तवस्सिणी । (१५०)

शार्ङ्ग ॥ सरोषं प्रतिनिवृत्य । आः पुरोभागिनि किमिदं स्वातन्त्र्यमवलम्बसे । (१५१)

शकु ॥ भीता वेपते । (१५२)

शार्ङ्ग ॥ शकुन्तले शृणोतु भवती । (१५३)

---

(१४९) शकु इति । अहमित्यादि । अहमिदानीमनेन कितवेन विप्रलब्धा । यूयमपि मां परित्यजथ । कितवेन धूर्त्तेन । कितवो धूर्त्तेऽन्मत्ते वञ्चके कनकाह्वये इति विश्वः । विप्रलब्धा विप्रयुक्ता वञ्चिता वा । विप्रलम्भो वियोगे इत्यमरः । अनुप्रस्थिता अनुगच्छति सर्व्वानिति शेषः ॥

(१५०) गौतेति । स्थित्वा गमनान्निवृत्य । वच्छेत्यादि । वत्स शार्ङ्गरव अनुगच्छति नः करुणपरिदेविनी शकुन्तला । प्रत्यादेशपरुषे भर्त्तरि किं करोतु तपस्विनी । करुणेन करुणरसेन परिदेवयति विलपति या सा करुणपरिदेविनी । विलापः परिदेवनमित्यमरः । प्रत्यादेशेन प्रत्याख्यानेन परुषे निष्ठुरे भर्त्तरि तथाविधभर्त्तृसमीपे । सामीप्याधिकरणे सप्तमी । सामीप्यान्नैमित्तिकं व्याप्त्याधारस्त्रिविधः स्मृतः । किं करोत्विति सम्प्रश्ने लोट् । तपस्विनी अनुकम्पार्हा । तपस्वी तापसे चानुकम्पार्हे चेति विश्वः ॥

(१५१) शार्ङ्गेति । आ इति कोपे । पुरोभागिनि दोषैकदर्शिनि । दोषैकदृक् पुरोभागीत्यमरः । येन कर्म्मण्यनुष्ठितेन केवलं दोषमात्रं जायते न कश्चिद्गुणस्तत्कर्म्मानुयायी दोषैकदृक् । स्वातन्त्र्यं स्वाधीनता । तथाचोक्तम् । पिता रक्षति कौमारे भर्त्ता रक्षति यौवने । पुत्त्रश्च स्थविरे रक्षेत् न स्त्री स्वातन्त्र्यमर्हतीति ॥

(१५२) शकु इति । वेपते कम्पते ॥

(१५३) शार्ङ्गेति । सुगमम् ॥

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पुनरुत्कुलया त्वया ।
अथ तु वेत्सि शुचिव्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ (१५४)

तिष्ठ साधयामो वयम् । (१५५)

राजा ॥ भोस्तपस्विन् किमत्रभवतीं विप्रलभसे । कुतः (१५६)

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ (१५७)

---

(१५४) यदीति । क्षितिपो राजा यथा वदति नेयं मया परिणीतपूर्वेति । यदि त्वं तथासि तदा उत्कुलया उद्गतं कुलं यस्याः सा तथोक्ता त्वया पुनः किं अस्माकं किं कार्यं क्रियते । अथतु यदितु आत्मनो व्रतमाचारं शुचि पवित्रं वेत्सि जानासि तदा पतिकुले राजगृहे तव दास्यं दासीभावोपि क्षमं हितम् । क्षम युक्ते हिते त्रिष्विति अमरः । इदं द्रुतविलम्बितं नाम वृत्तम् ॥

(१५५) तिष्ठेति । साधयामो गच्छाम । गद्याम् । प्रायेण साधयत्यस्य गच्छतीत्यर्थे प्रयुज्यत इति ॥

(१५६) राजेति । अत्रभवतीं शकुन्तलां किं कथं विप्रलभसे परित्यजसि । विप्रलम्भो विप्रयोग इत्यमरः । अलं विप्रलम्भेनानया मयैनामुद्दिश्य पराङ्मुख एवेति भावः । तत्र हेतुमुद्भावयति कुत इति ॥

(१५७) कुमुदानीति । हि यस्मात् शशाङ्कश्चन्द्रमाः कुमुदानि कैरवाण्येव बोधयति उन्मीलयति । न पङ्कजानीत्यर्थः । सविता भास्करः पङ्कजानि पद्मान्येव बोधयति न कुमुदानीत्यर्थः । एवं वशिनां जितेन्द्रियमानवानां वृत्तिः प्रवृत्तिः । वृत्तिर्विवरणाजीव कौशिक्यादिप्रवर्त्तने इति मेदिनी । परेषामितरेषां परिग्रहाणां पत्नीनां संश्लेषेण स्पर्शेषु पराङ्मुखी विमुखी भवति । पत्नीपरिजनादानमूलशापाः परिग्रहा इत्यमरः । अत्र पञ्चकाद्वयनेनपरिग्रहपराङ्मुखत्वधर्मस्यैव निर्देशात् प्रतिवस्तूपमालङ्कारः । तदुक्तं दर्पणे । प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः । एकोपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति । प्रार्या जातिः ॥

शार्ङ्ग ॥ राजन् अथ पूर्व्ववृत्तं व्यासङ्गाद्विस्मृतं भवेत् तदा कथमधर्म्मभीरोर्दारपरित्यागः । (१५८)

राजा ॥ भवन्तमेवात्र गुरुलाघवं पृच्छामि । (१५९)

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांशुलः ॥ (१६०)

पुरोधा ॥ विचार्य्य ॥ यदि तावदेवं क्रियताम् । (१६१)

राजा । अनुशास्तु मां गुरुः । (१६२)

पुरो ॥ अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु । (१६३)

---

(१५८) शार्ङ्गेति । अथेति प्रश्नद्योतकं । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः । पूर्व्ववृत्तं पूर्व्वचरित्रम् । वृत्तं पद्ये चरित्रे चेत्यमरः । व्यासङ्गात् कार्य्यान्तरासक्तेः । अधर्म्मभीरोरधर्म्माद्भयशीलस्य । परपरिग्रहसंश्लेषपाक्षिकत्वप्रतिपादनादिति भावः । कथं केन प्रकारेण । दारपरित्यागः कथं त्वं दारान् परित्यजसीत्यर्थः । यतोऽस्ति तत्राप्यधर्म्म इति भावः ॥

(१५९) राजेति । अत्र विषये । भवन्तं शार्ङ्गरवं । गुरुलघुभावो गुरुलाघवम् । भावे ष्यञ् । सुपञ्चालादित्वादन्त्यपदवृद्धिः । राजेत्यनन्तरं पुरोधसं प्रतीति क्वचित्पाठः । तत्र भवन्तं गुरुम् ॥

(१६०) अन्वयमाह । मूढ इति । अहं मूढः प्राप्तमोहः विस्मृतविवाहवृत्तान्त इति यावत् । स्यां भवेयं अथवा एषा नारी मिथ्या वदेत् इति संशये दारत्यागी धर्म्मपत्नीपरित्यागी भवामि । मूढत्वे सतीति भावः । आहो किम्वा । आहो उताहो किमुत विकल्पे किं किमूत चेत्यमरः । परस्त्रीस्पर्शेन परदारग्रहणेन पांशुलो मलिनो भवामि अस्या मिथ्यावादित्वे इति भावः । इति पृच्छामीत्यन्वयः । संशये परस्त्रीसंपर्काद्दारत्यागो वरमिति राजाभिप्रायः ॥

(१६१) पुरोधा इति । यदि तावत् यदि तथा तदा एवं वक्ष्यमाणं क्रियताम् ॥

(१६२) राजेति । अनुशास्तु उपदिशतु ॥

(१६३) पुरो इति । आप्रसवात् प्रसवपर्य्यन्तम् । अस्मद्गृहे अस्माकं भवने ॥

राजा ॥ कुत इदम् । (१६४)

पुरो ॥ त्वं साधुनैमित्तिकैरुपदिष्टपूर्व्वः प्रथममेव चक्रवर्त्तिनं पुत्त्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति ततोऽभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि विपर्य्यये त्वस्याः पितुः समीपगमनं स्थितमेव । (१६५)

राजा ॥ यथा गुरुभ्यो रोचते । (१६६)

पुरो ॥ उत्थाय ॥ वत्से इत इतो ऽनुगच्छ माम् । (१६७)

शकु ॥ भअवदि वसुन्धरे देहि मे अन्तरं । इति सह पुरोधसा गौतमीतपस्विभिश्च रुदती निष्क्रान्ता (१६८)

---

(१६४) राजेति । इदं भवद्वाक्यस्थानम् ॥

(१६५) पुरो इति । निमित्तानि शुभाशुभलक्षणानि जानन्तीति नैमित्तिकाः । निमित्तं हेतुलक्ष्मणोरित्यमरः । साधुनैमित्तिकैरुत्कृष्टगणकैः प्रथममादावेव चक्रवर्त्तिनं सार्व्वभौमं पुत्त्रं जनयिष्यसि उत्पादयिष्यसि इति त्वमुपदिष्टपूर्व्वः पूर्व्वमुपदिष्टः । स गर्भात् प्रसूतो मुनिदौहित्रो मुनिदुहितृसुतश्चेत् यदि तल्लक्षणैश्चक्रवर्त्तिचिह्नैः । यस्य पादतले पद्मं चक्रं वाप्यथ तोरणम् । अङ्कुशं कुलिशं वापि स राजा भवति ध्रुवमिति तथा आजानुलम्बिनौ बाहू वृत्तौ पीनौ नृपेश्वरे इत्याद्युक्तैरुपपन्नो युक्तो भविष्यति ततस्तदा अभिनन्द्य आदृत्य एनां नारीं शुद्धान्तमन्तःपुरं प्रवेशयिष्यसि । विपर्य्यये वैपरीत्ये राजलक्षणाभावे इति यावत् । अस्या नार्य्याः पितुः समीपगमनं कण्वसमीपगमनं स्थितमव्याहतमेव ॥

(१६६) राजेति । यथा यत्प्रकारो गुरुभ्यो रोचते गुरुणा भवता प्रीतिमुत्पादयति । यस्मै दित्सासूयाक्रोधेर्ष्यारुचिद्रोहेत्यादिना गुरुभ्य इति चतुर्थी ॥

(१६७) पुरो इति । मामनुगच्छ मदनुगामिनी भव ॥

(१६८) शकु इति । भअवदीति । भगवति वसुन्धरे देहि मे अन्तरम् । वसुन्धरे वसुमति । अन्तरमवकाशम् अहमत्र गच्छामीति भावः । इति इत्युक्त्वा रुदती क्रन्दन्ती पुरोधसा राजपुरोहितेन गौतमी च तपस्विनो च ते सैव सह निष्क्रान्ता अपगता ॥

राजा ॥ शापव्यवहितस्मृति शकुन्तलागतमेव चिन्तयति ॥ (१६९)

नेपथ्ये ॥ आश्चर्य्यमाश्चर्य्यम् । (१७०)

राजा ॥ कर्णं दत्त्वा ॥ किन्नु खलु स्यात् । (१७१)

पुरोधा ॥ प्रविश्य सविस्मयम् ॥ देव अद्भुतं खलु संवृत्तम् । (१७२)

राजा ॥ किमिव । (१७३)

पुरो ॥ देव परावृत्तेषु कण्वशिष्येषु । (१७४)

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता ॥ (१७५)

राजा ॥ ततः किम् । (१७६)

---

(१६९) राजेति। शापेन दुर्व्वाससः शापेन व्यवहिता कृतव्यवधाना स्मृतिर्यस्य स तथोक्तः। शकुन्तलागतं शकुन्तलासम्बन्धम् ॥

(१७०) नेपथ्य इति। सुगमम् ॥

(१७१) राजेति। कर्णं दत्त्वा साभिनिवेशं श्रुत्वा। किन्नु वितर्के। किन्नु प्रश्नवितर्कयोरिति मेदिनी। खलु प्रश्ने ॥

(१७२) पुरो इति। अद्भुतमाश्चर्य्यम्। विस्मयोऽद्भुतमाश्चर्य्यमित्यमरः ॥

(१७३) राजेति। किमिव कीदृक् ॥

(१७४) पुरो इति। परावृत्तेषु निवृत्तेषु कण्वशिष्येषु तपस्विषु। तत्र श्लोकार्थान्वयः ॥

(१७५) सेति। स्वानि स्वीयानि भाग्यानि दैवानि निन्दन्ती सा बाला च बाहूत्क्षेपं बाहू उत्क्षिप्य रोदितुं प्रवृत्ता आरब्धवती। एतदनन्तरं राजवचनान्ते श्लोकार्द्धेन परार्द्धेन वाक्यसमापनम्। बाहूत्क्षेपमिति द्वयोः स्वाङ्गादध्रुवादिति णमुल्प्रत्ययः। णमुलन्ताव्ययेन समासः। यस्मिन्नङ्गे छिन्ने न म्रियते तदङ्गमध्रुवम् ॥

(१७६) राजेति। सुगमम् ॥

पुरो॥

स्त्रीसंस्थानञ्चाप्सरस्तीर्थमारा-

दुत्क्षिप्यैनां ज्योतिरेना तिरोऽभूत्॥ (१७७)

सर्व्वे॥ विस्मयं रूपयन्ति। (१७८)

राजा॥ भगवन् प्रागेवास्माभिरेषोऽर्थः प्रत्यादिष्टः किं वृथा तर्केणान्विष्यते विश्राम्यताम्। (१७९)

पुरोधा॥ विजयस्व। इति निष्क्रान्त। (१८०)

राजा॥ वेत्रवति पर्य्याकुलोऽस्मि शयनीयच्छद्ममार्गमादेशय। (१८१)

---

(१७७) पुरो इति। पुरोधा मन्युक्तशोकसापराधं गाढ़ स्त्रीति। स्त्रीया संस्थानमात्रतिरिव संस्थानं यस्य तत् तथोक्तम्। संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे इति मेदिनी। अप्सरस्तीर्थं अप्सरसामिव तीर्थं दर्शनं यस्य तत् अप्सरोपदृश्यमानमिति यावत्। तीर्थमुक्तमित्युपक्रम्य उपाध्याये दर्शने चेति शब्दाब्धि। अथवा अप्सरस तीर्थं योनि र्यस्य तत् अप्सरोयोनि इत्यर्थः। तीर्थं योनौ जलावतारे चेति हलायुध। ज्योति खेचर। गन्धर्व्वव्याहत्यर्थे स्त्रीसंस्थानमिति। आरात् समीपादेनां बालामङ्के क्रोडे उत्क्षिप्य उत्तोल्य तिरोऽभूत् अन्तर्हितमभूत्। तिरोऽन्तर्द्धौ तिर्य्यगर्थे इत्यमरः। द्वौ चकारौ वाक्यद्वयगतौ क्रिययो पौर्व्वापर्य्यमव्यवहितं बोधयतः। इदं शालिनी नाम वृत्तम्। तदुक्तम्। ह्रस्वो वर्णो जायते यत्र यत्र कम्बुग्रीव तद्देशाद्यमान्त्यौ। विश्राम स्यात्तन्वि वेदैः स्वरङ्गैः तां भाषन्ते शालिनीं छान्दसीया इति॥

(१७८) सर्व्वे इति। रूपयन्ति नाटयन्ति॥

(१७९) राजेति। एषोऽर्थं शकुन्तलारूपं वस्तु। प्रत्यादिष्टो निराकृत। इदानीं मानुपलब्धेपि सन्देहादर्थपदप्रयोग। तर्केण किमेवं किमेवमिति विचारेण। वृथा मिथ्या। अन्विष्यते अनुसन्धीयते॥

(१८०) पुरो इति। सुगमम्॥

(१८१) राजेति। पर्य्याकुल परिश्रान्त। शेरतेऽस्मिन्निति शयनीयम्। अधिकरणे अनीय। तच्च तत् छद्म चेति तस्य मार्गम्॥

सर्वे ॥ इदो इदो देवो । इति प्रस्थिताः । (१८२)

राजा ॥ परिक्रम्य स्वगतम् । (१८३)

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् ॥ (१८४)

इति निष्क्रान्ताः सर्वे । पञ्चमोऽङ्कः । (१८५)

---

(१८२) सर्वेति । इद इत्यादि । इत इतो देव । सुगमम् ॥

(१८३) राजेति । सुगमम् ॥

(१८४) काममिति । प्रत्यादिष्टां निराकृतां मुनेस्तनयां परिग्रह परिणीतां कामं पर्य्याप्तं न स्मरामि । बलवदूदूयमानमतिशयेन खिद्यमानम् । दूङ्य खेदे इति कविकल्पद्रुम । हृदयं मनस्तु मां प्रत्याययति परिणीतपूर्व्वतया विश्वासयतीव । इय मार्य्या ॥

(१८५) इतीति । एतदङ्कौ सत्यामित्यर्थं ॥

इति श्रीकृष्णनाथसर्व्वकृतायामभिज्ञानशकुन्तलटीकाया
मर्थद्योतिकाख्यायां पञ्चमाङ्कविवरणम् ॥

# अथ पञ्चमाङ्कांशोऽङ्कावतारः।

ततः प्रविशति नागरकश्यालः पश्चाद्बाहुबद्धं पुरुषमादाय रक्षिणौ च। (१)

रक्षिणौ ॥ पुरुषं ताडयित्वा ॥ अले कुम्भिलआ कधेहि कहिं तुए एशे महामणिभाशुले उक्किण्णणामक्खले लाअकीए अंगुलीअए शमाशादिदे। (२)

पुरुषः ॥ भीतिनाटितकेन ॥ पशीदन्तु पशीदन्तु मे भावमिश्शे ण हग्गे ईदिशश्श अकज्जश्श कालके। (३)

---

(१) तत इति। नागरको नगरस्य प्रधानरक्षकः तस्य श्यालः पत्नीभ्राता। श्यालाः स्युर्भ्रातरः पत्न्याः इत्यमरः। पश्चाद्बाहुबद्धं पृष्ठलग्नबाहुं कृत्वा बद्धम्। पुरुषं कमपि जनम्। आदायेत्यस्य कर्त्तारौ रक्षिणौ। रक्षिणौ रक्षकौ च प्रविशत इति शेषः॥

(२) रक्षिणाविति। ताड़यित्वा आहत्य। अले इत्यादि। अरे कुम्भिलक कथय कुत्र त्वया एतन्महामणिभासुरमुत्कीर्णनामाक्षरं राजकीयमङ्गुरीयकं समासादितम्। कुम्भिलक चौर। कुम्भिलः शालमीने च चौरे श्लोकार्थचौरयोरिति मेदिनी। महेति। महामणिना भासुरं दीप्तिमत्। भिन्नाभसक्तो धुर इति धुरः। उत्कीर्णानि खचितानि नामाक्षराणि यत्र तत्। समासादितं प्राप्तम्॥

(३) पुरुष इति। भीतिनाटितकेन किञ्चिद्भयसूचकव्यापारेण। पसीति। प्रसीदन्तु प्रसीदन्तु मे भावमिश्रा नाहमीदृशस्याकार्यस्य कारकः। भावमिश्रा भावेषु विद्वत्सु गौरविताः। भावो विद्वानित्यमरः। गौरविताश्चार्यमिश्राः प्राध्वाङ्क्षमुखा इति त्रिकाण्डशेषः। अकार्यस्य चौर्य्यस्य॥

एक ॥ किणु क्खु शोहणे बह्मणेमि त्ति कदुअ लज्जा दे पडिग्गहे दिण्णे। (४)

पुरुष ॥ शुणुध दाव हग्गे क्खु शक्कावदालवाशी धीवले। (५)

द्वितीय ॥ अले पाडच्चले किं तुमं अह्मेहिं वशदिं जादिञ्च पुच्छीअसि। (६)

नाग ॥ सूअअ कधेदु सव्वं अणुक्कमेण मा णं अन्तरा पडिबन्धेअ। (७)

उभौ ॥ जं आवुत्ते आणवेदि लवेहि ले। (८)

---

(४) एक इति। रक्षिणोरितिशेष। किण्वित्यादि। किन्नु खलु शोभनो ब्राह्मणोऽसीति कृत्वा राज्ञा ते प्रतिग्रहो दत्त। प्रतिग्रह प्रतिग्राह्य ॥

(५) पुरुष इति। शुणुधेत्यादि। शृणुत तावत् अहं खलु शक्रावतारवासी धीवर। शक्रावतारो गङ्गातीरगत प्रदेशविशेष। धीवर कैवर्त्त। कैवर्त्ते दाशधीवराविल्यमर ॥

(६) द्वितीय इति। रक्षिणोरिति शेष। अले इत्यादि। अरे पाटच्चर किं त्वमस्माभि वसति जातिञ्च पृच्छ्यसे। पाटच्चरश्चौर। चौरैकागारिकस्तेनदस्युतस्करमोषका। प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचा इत्यमर। पृच्छ्यते हि कस्मकगणत्वे याचादौ पाठात् त्वमिति गौणकर्म्मणि कर्म्मप्रत्ययो न वसतिजात्योर्मुख्ययोरपि। तदुक्तं न्यादिग्रहनाढगत्यर्था मुख्ये द्वे इत्यमामु यु। गौणे याचादयोऽन्येतु यथेष्टं द्विकर्मिकेष्विति।

(७) नागेति। सूअअ इत्यादि। सूचक कथयतु सर्व्वमनुक्रमेण। मा अन्तरा प्रतिबध्नीय। ' सूचक इति द्वितीयरक्षिणो नामधेयम्'। 'अनुक्रमेण यथाक्रमेण'। 'अन्तरा मध्ये वाक्यस्येति शेष। अथान्तरेऽन्तरा। अन्तरेण च मध्ये स्युरित्यमर। मा प्रतिबध्नीया प्रतिबन्धको मा भू ॥

(८) उभाविति। रक्षिणावित्यर्थ। जमित्यादि। यदावुत्त आज्ञापयति। लप रे। आवुत्तो भगिनीपति। भगिनीपतिरावुत्त इत्यमर। लप कथय ॥

एक॰ ॥ किणु क्खु शोहणे बम्हणेम्हि त्ति कदुअ लज्जा दे पडिग्गहे दिण्णे। (४)

पुरुष ॥ शुणुध दाव हग्गे क्खु शक्कावदालवाशी धीवले। (५)

द्वितीयः ॥ पाले पाडच्चले किं तुमं अम्हेहिं वशदिं जादिं अ पुच्छीअसि। (६)

श्याल ॥ सूअअ कधेदु सव्वं अणुक्कमेण मा णं अन्तरा पडिबन्धेध। (७)

उभौ ॥ जं आवुत्ते आणवेदि लवेहि ले। (८)

---

(४) एक इति। रक्षिणोरितिशेषः। किण्वित्यादि। किन्नु खलु शोभनो ब्राह्मणोऽसीति कृत्वा राज्ञा ते प्रतिग्रहो दत्तः। प्रतिग्रहः प्रतिग्राह्यः॥

(५) पुरुष इति। शुणुधेत्यादि। *शृणुत तावत् अहं खलु शक्रावतारवासी धीवरः। शक्रावतारो गङ्गातीरगतः प्रदेशविशेषः। धीवरः कैवर्त्तः। कैवर्त्ते दाशधीवराविल्यमरः॥

(६) द्वितीय इति। रक्षिणोरिति शेषः। पाले इत्यादि। अरे पाटच्चर किं त्वमस्माभिः वसतिं जातिञ्च पृच्छ्यसे। पाटच्चरश्चौरः। चौरैकागारिकस्तेनदस्युतस्कर- [illegible] प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचा इत्यमरः। पृच्छ्यते हि कर्मकरणने

(१५) नागेति। आमोद [illegible] गतमिति नास्ति सन्देहः यतोऽयमामिषगन्धो वाति। आगम इदानीमेतस्यैव विज्ञप्तव्यः सद्देश राजकुलमेव गच्छामः। जालुक इति प्रथमरक्षिणो नाम। यत इत्यादि। यतो यस्मादयमामिषगन्धो मत्स्यगन्धो वाति गच्छति। एतस्य अङ्गुरीयकस्य एष धीवरोऽस्य आगम आगतेः तान्त इदानीं विज्ञप्तव्यो विचारणीयः न उपेक्षणीय इत्यर्थः। एत आगच्छत। राजकुलं राजभवनम्। कुलं जनपदे गोत्रे सजातीयगणे पि च। भवने च तनौ क्लीबमिति मेदिनी॥

(१६) रक्षिणाविति। धीवरं चौरत्वेनाभियुक्तम्। गच्छेत्यादि। गच्छ रे ग्रन्थिच्छेदक, गच्छ। रे इति तुच्छसम्बोधने। सम्बोधनेऽङ्ग भोः पाट् प्याट् हे है हंहोऽरेऽरे चेति हेमचन्द्रः। ग्रन्थिच्छेदकश्चौरः॥

इति परिक्रामन्ति । (१७)

नाग ॥ सूचअ सूअ गोउरदुआले अप्पमत्ता पडिपालेध मं जाव लाअउलं पवेसिअ णिक्कमामि । (१८)

उभौ ॥ पविसदु आवुत्ते सामिप्पसादत्थं । (१९)

नाग ॥ परिक्रम्य निष्क्रान्तः । (२०)

सूच ॥ जालुअ चिलाअदि क्खु आवुत्ते । (२१)

जालु ॥ णं अवसलोवसप्पणीआ राआणो होन्ति । (२२)

सूच ॥ फुरन्ति मे अग्गहत्था इमं गण्ठिच्छेदअं वावादिदुं । (२३)

---

(१७) इतीति । इति एतदुक्त्वा सर्व्वे इत्यर्थः । परिक्रामन्ति राजकुलगमनं रूपयन्ति धीवरसहिताः सर्व्वे इति शेषः ॥

(१८) नागेति । सूचअ इत्यादि । सूचक इह गोपुरद्वारे अप्रमत्तौ प्रतिपालयतं मां यावद्राजकुलं प्रविश्य निष्क्रामामि । गोपुरद्वारे गोपुरसंज्ञके द्वारे । पुरद्वारन्तु गोपुरमित्यमरः । अप्रमत्तौ धीवरं प्रति सावधानौ । प्रमादोऽनवधानतेत्यमरः । प्रतिपालयतं युवां प्रतीक्षेथाम् । निष्क्रामामि । प्रत्यागच्छामि । क्रमोऽपीषिं इति दीर्घः ॥

(१९) उभाविति । पविसदु इत्यादि । प्रविशतु आवुत्त स्वामिप्रसादार्थम् । स्वामिनो भर्त्तुः प्रसादार्थं प्रसन्नतार्थम् ॥

(२०) नागेति । परिक्रम्य राजकुलप्रवेशं रूपयित्वा ॥

(२१) सूचेति । जालुअ इत्यादि । जालुक चिरयति खल्वावुत्त । चिरयति विलम्बं करोति । खलु प्रश्ने कथमित्यर्थः ॥

(२२) जालु इति । णमित्यादि । नन्ववसरोपसर्पणीया राजानो भवन्ति । ननुस्त्वनु प्रश्ने । ननुशब्दो विनिमये । अनुप्रश्ने इति मेदिनी । राजानोऽवसरेऽवकाशेन एव उपसर्पणीयाः समीपगम्या भवन्ति ननु ॥

(२३) सूचेति । फुरन्तीत्यादि । स्फुरतो मे अग्रहस्तौ इमं ग्रन्थिच्छेदकं व्यापादयितुम् । स्फुर सञ्चलने । अग्रहस्तौ पाणी । व्यापादयितुं मारयितुम् ॥

धीव॥ णालिहदि भावे अकालणमालके भविदुम्। (२४)

जानु॥ विलोक्य॥ एशे अह्माणं ईश्शले पत्ते गेह्णिअ लाअ-शाशणं आअच्छदि शम्पदं एशे गउलाणं मुहं पेक्खदु अधवा गिद्ध-शिआलाणं बली होदु। (२५)

नाग॥ प्रविश्य॥ शिग्घं शिग्घं एदं। इत्यर्द्धोक्ते। (२६)

धीव॥ हा हदोह्मि। इति विषादं नाटयति। (२७)

नाग॥ मुञ्चध जालोवजीविणं। उववण्णे से अङ्गुलिअअस्स आगमे अह्म शामिणा जाव कधिदं। (२८)

---

(२४) धीवेति। णालीत्यादि। नार्हसि भावोऽकारणमारको भवितुम्। भावो विद्वान्। अकारणमारकः अनिमित्तघातकः॥

(२५) जान्विति। विलोक्य पन्थानं दृष्ट्वा। एषे इत्यादि। एषोऽस्माकमीश्वरः पत्रे गृहीत्वा राजशासनमागच्छति। साम्प्रतमेव स्वकुल्यानां मुखं प्रेक्षताम् अथवा गृध्रशृगालानां बलिर्भवतु। अस्माकमीश्वरो नागरकश्यालः। पत्ते गृहीत्वा पत्राहृदं गृहीत्वा। राजशासनं राजादेशम्। एष धीवरः। स्वकुल्यानां निजवंश्यानाम्। बलिरुपहारः। दण्डादण्डयोरुभयोरेव सम्भवादिति भावः। करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियामित्यमरः॥

(२६) नागेति। प्रविश्य रङ्गभूमिमितिशेषः। शिग्घमित्यादि। शीघ्रं शीघ्रमेतम्। इत्यर्द्धोक्ते मुञ्चतं जालोपजीविनमित्यन्तस्य वाक्यस्यार्द्धे उक्ते॥

(२७) धीवेति। हेत्यादि। हा हतोऽस्मि। हा विषादे। विषादं विषण्णतां नाटयति रूपयति। मारयतमिति वाक्यशेषमनुमायेति भावः॥

(२८) नागेति। मुञ्चधेत्यादि। मुञ्चतं जालोपजीविनम्। उपपन्नोऽस्याङ्गुरीयस्यागमः। अस्मत्स्वामिना यावत् कथितम्। उपपन्नो युक्तः। यावत् यदा अस्मत्स्वामिना राज्ञा कथितं तदा उपपन्न इत्यन्वयः॥

सूच ॥ जह आणवेदि आवुत्ते जमवसदिं गदुअ पडिणिउत्तो क्खु एसो। इति धीवरं बन्धनान्मोचयति। (२९)

धीव ॥ भट्टके अम्पदं तुह केलके मे जीविदे। इति पादयोः पतति। (३०)

नाग ॥ उट्ठेहि एसे भट्टिणा अङ्गुलीअमुल्लसम्मिदे पारिदोसिए दे पसादीकदे ता गेह्ण एदं। इति धीवराय कटकं ददाति। (३१)

धीव ॥ सहर्षं सप्रणामञ्च प्रतिगृह्य ॥ अणुग्गहीदोह्मि। (३२)

जालु ॥ एसे क्खु रञ्जा तधा अणुग्गहिदे जधा सूलादो ओदालिअ हत्थिक्खन्धे समालोविदे। (३३)

सूच ॥ आवुत्ते पालिदोसिएण जाणामि महालिहलदणेण अङ्गुलीअएण सामिणो बहुमदेण होदव्वं। (३४)

---

(२९) सूचेति। जधेत्यादि। यथाज्ञापयत्यावुत्तः। यमवसतिं गत्वा प्रतिनिवृत्तः खल्वेषः। यमवसतिं यमवेश्म ॥

(३०) धीवेति। भट्टके इत्यादि। भर्त्तः साम्प्रतं तव क्रीतकं मे जीवितम्। क्रीतकं क्रीतम् ॥

(३१) नागेति। उट्ठेहीत्यादि। उत्तिष्ठ एतद्भर्त्रा अङ्गुरीयमूल्यसम्मितं पारितोषिकं ते प्रसादीकृतं तद्गृहाणैतत्। भर्त्ता राजा। अङ्गुरीयस्य यन्मूल्यं तत्सम्मितं तत्परिमितं पारितोषिकं परितोषदत्तं वस्तु प्रसादीकृतं प्रणयतास्वरूपीकृतम्। कटकं वलयं। कटकं वलयोऽस्त्रियामित्यमरः ॥

(३२) धीवेति। अहमित्यादि। अनुगृहीतोऽस्मि। अनुगृहीतः कृतानुग्रह ॥

(३३) जालुइति। एषे इत्यादि। एष खलु राज्ञा तथानुगृहीतः यथा शूलादवतार्य्य हस्तिस्कन्धं समारोपितः। एष धीवरः। शूलान्मनुष्यवधार्थं रोपितादयः कीलकात्। अवतार्य्य उत्तोल्य नमयित्वा। समारोपितो निवेशितः ॥

(३४) सूचेति। आवुत्ते इत्यादि। आवुत्त पारितोषिकेण जानामि महार्हरत्नेन अङ्गुरीयकेण स्वामिनो बहुमतेन भवितव्यम्। जानामि अनुमिनोमि। महार्हरत्नेन महामूल्यरत्नभूतेन। स्वामिनो बहुमतेन राज्ञः समादृतेन ॥

नाग ॥ ण तस्सिं भट्टिणो महालिहलदणं त्ति कदुअ पलिदोसो एत्ति उण तक्केमि। (३५)

• उभौ ॥ किं उण। (३६)

नाग ॥ तस्स दंसणेण भट्टिणा कोवि अहिमदो जणो सुमरिदो त्ति जदो मुहुत्तअं पइदिगम्भीरोवि पज्जुस्सुअमणा आसी। (३७)

सूच ॥ दोसिदे सोहुदे अ दाणिं भट्टा आवुत्तेण। (३८)

जालु ॥ णं भणेमि इमस्स मच्छसत्तुणो कदे। इति धीवरमसूयया पश्यति। (३९)

धीव ॥ भट्टालके इदो अद्धं तुह्माणम्पि सुलामुल्लं होदु। (४०)

---

(३५) नागेति। णेत्यादि। न तस्मिन् भर्त्तुर्महाहरत्नमिति कृत्वा परितोष। एत-त्पुनस्तर्कयामि। तस्मिन्नङ्गुरीये। महार्हरत्नमुत्कृष्टरत्नम्। एतत् वक्ष्यमाणम्॥

(३६) उभाविति। किं उण। किं पुन॥

(३७) नागेति। तस्सेत्यादि। तस्य दर्शनेन भर्त्ता कोऽप्यभिमतो जन स्मृत इति यतो मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्य्युत्सुकमना आसीत्। तस्य अङ्गुरीयस्य। भर्त्ता राजा। अभिमतो वाञ्छित। इतीति तर्कयामीत्यन्वितम्। मुहूर्त्तं कञ्चित्कालं व्याप्य पर्य्युत्सुक-मना आसीदिति सम्बन्ध। प्रकृतिगम्भीर प्रकृत्या स्वभावेन गम्भीर। पर्य्युत्सुकमना उत्कण्ठितमना॥

(३८) सूचेति। दोसिदे इत्यादि। तोषित पोषित चेदानीं भर्त्ता आवुत्तेन। पोषित पोषं गमित। आवुत्तेन भवता॥

(३९) जालु इति। णमित्यादि। ननु भणामि अस्य मत्स्यशत्रो कृते। नन्वहं भणामि यत् अस्य मत्स्यशत्रोर्धीवरस्य कृते अयं भर्त्ता आवुत्तेन पोषित इति शेष। मत्सा-वुत्तेन सार्धं भर्त्ता पोषित इति भाव। अयं कृतेऽव्यय तावत् तादर्थ्ये वर्त्तते इयमिति कोपसार। असूयया दोषारोपणेन॥

(४०) धीवेति। भट्टेत्यादि। भट्टारक इतोऽर्द्धं युष्माकमपि सुरामूल्यं भवतु। इतो राजप्रसादीकृतकटकस्य। सुरामूल्यं मद्यक्रयोपयोगि॥

# अभिज्ञानशकुन्तलम् ।

## षष्ठोऽङ्कः ।

ततः प्रविशत्याकाशयानेन मिश्रकेशी । (१)

मिश्र ॥ णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थ-सन्दिट्टं ता जाव साहुजणस्स अहिसेअकालो भवे दाव सम्पदं इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरिस्सं मेणआसम्बन्धेण सरीरभूदा दाणिं मे सउन्तला तए अ दुहिदुणिमित्तं सन्दिट्ठ-पुव्वह्मि । (२)

जालु॥ धीवल महत्तले शम्पदं अह्माणं पिअवअश्शके शंवुत्ते शि कादम्बलीशक्खिके क्खु पढमं शोहिदे इच्छीअदि ता एहि शुण्डिआलअं ज्जेव गच्छम्ह। (४१)

इति निष्क्रान्ताः सर्व्वे। अङ्कावतारः। (४२)

---

(४१) जालु इति। धीवलेत्यादि। धीवर महत्तर साम्प्रतमस्माकं प्रियवयस्य संवृत्तोऽसि कादम्बरीसाक्षिकं खलु प्रथमसौहृदमिष्यते तदेहि शौण्डिकालयमेव गच्छाम। महत्तर अतिमहान्। साम्प्रतमिदानीम्। कादम्बरीत्यादि। प्रथमसौहृदं प्रथमसौहार्द्दं कादम्बरी मदिरैव साक्षी प्रत्यक्षदर्शिजनस्वरूपा यस्य तत् तथोक्तं खलु तथाभूतमेव इष्यते लोकैरिति शेषः। उक्तं समक्षदर्शनात् साक्षीति। चाण्डालादयो मद्यसाक्षिकमेव परिणयनव्यापारं निर्व्वर्त्तयन्तीति प्रथमसौहृदमुक्तम्। गन्धोत्तमा प्रसन्नेरा कादम्बर्य्यः परिस्रुता। मदिरा कश्यमद्ये चेत्यमरः। साक्षिपदोऽत्र प्रत्यक्षदर्शिजनवाचकतया उद्देश्यविधेयभावान्विततया न पुंस्त्वं जहाति। अत उक्तम्। उद्देश्यविधेयभावे लिङ्गाना नास्ति तन्त्रतेति। तत् तस्मात् एहि आगच्छ शौण्डिकालयं सुराकारालयमेव गच्छामः॥

(४२) इतीति। एवमुक्त्वा सर्व्वाभित्यर्थः। अङ्कावतारः षष्ठाङ्कावतरकः पञ्चमाङ्कांश। तदुक्तम्। अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः। यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृत इति। अत्र पात्रैर्नागरकश्यालादिभिर्नृपतेस्तत्कण्ठाभरणादिरहस्यप्रदर्शनात्मकः षष्ठाङ्कोऽवतरति॥

इति श्रीकृष्णनाथसर्व्वभौमसङ्कलितायामभिज्ञानशकुन्तलटीकायां

प्रवेशिकाख्यायामङ्कावतारनाम

पञ्चमाङ्कांशविवरणम्॥

ततः प्रविशति चूताङ्कुरमालोकयन्ती चेटी तत्पृष्ठेऽपरा च। (४)

प्रथमा ॥ कधं उवत्थिदो महुमासो। (५)

आतम्महरिअपण्डुरं ऊससिअं विअ वसन्तमासस्स।
दिट्ठं चूअङ्कुरअं छणमङ्गलं णिअच्छामि ॥ (६)

द्वितीया ॥ परहुदिए किं एदं एआइणी मन्तेसि। (७)

प्रथमा ॥ महुअरिए चूअकलिअं पेक्खिअ उम्मत्तिआ क्खु परहुदिआ होदि। (८)

---

अदृश्यविग्रहा सती उपलप्स्ये गच्छामि। नाट्येनावतीर्य आकाशादवतरणं रूपयित्वा ॥

(४) तत इति। चूताङ्कुरमाम्रमुकुलम्। चेटी भृत्याविशेष। तत्पृष्ठे तत्पश्चात्। अपरा चेटीत्यर्थः ॥

(५) प्रथमेति। प्रथमा चेटीत्यर्थः। कधमित्यादि। कथमुपस्थितो मधुमासः। मधुमासो वसन्तमासः। मधु। दैत्ये चैत्रे वसन्ते चेति विश्वः। चूताङ्कुरैरिव चूतकलिकालोकनान्मधुमासस्यानुमानम् ॥

(६) आतम्रेत्यादि। आताम्रहरितपाण्डुरं उच्छ्वसितमिव वसन्तमासस्य। दृष्टं चूताङ्कुरकं क्षणमङ्गल्यं नियच्छामि। आताम्रमीषल्लोहितं हरितं पालाशवर्णञ्च वृन्तं बन्धनं यस्य तत्। आताम्रं पाटलं विपदारुण मिति धनञ्जयः। पालाशो हरितो हरिदिति वृन्तं प्रसवबन्धनमिति चामरः। वसन्तमासस्य उच्छ्वसितं जीवितमिव दृष्टं चूताङ्कुरकं चूतमुकुलं क्षणे उत्सवे वसन्तमासविहिते इति यावत् मङ्गल्यं मङ्गलाय हितं नियच्छामि निश्चिनोमि। वसन्तमासस्य उच्छ्वसितमिव दृष्टमिति उत्सवमङ्गल्यत्वे हेतुरवधेयः। निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण इत्यमरः। नियमो यन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते इति मेदिनी। अत्रोच्छ्वसितमिवेत्युत्प्रेक्षा। छन्दस्तु गाथाख्यम् ॥

(७) द्वितीयेति। अपरा चेटीत्यर्थः। परेत्यादि। परभृतिके किं एकाकिनी मन्त्रयसे। परभृतिकेति प्रथमचेटीसंज्ञा। मन्त्रयसे अस्पष्टं व्याहरसि ॥

(८) प्रथमेति। मह इत्यादि। मधुकरिके चूतकलिकां प्रेक्ष्य उन्मत्ता खलु परभृतिका भवति। मधुकरिकेति। द्वितीयचेटीनाम ॥

द्वितीया ॥ सहर्षं त्वरया उपगम्य ॥ कधं उवत्थिदो महुमासो। (९)

प्रथमा ॥ महुअरिए तवावि एसो कालो मदविब्भमुग्गीदाणं। (१०)

द्वितीया ॥ सहि अवलम्बस्स मं जाव अग्गपदे परिट्ठिदा भविअ चूदप्पसवं गेह्निअ सम्पादेमि कामदेवस्स अच्चणं। (११)

प्रथमा ॥ जइ एव्वं ता ममावि अद्धं अच्चणाफलस्स। (१२)

द्वितीया ॥ सहि अभणिदेवि एदं सम्पज्जइ एव्व जदो एक्कं ज्जेव णो एदं सरीरं द्विधा भिण्णं पजावइणा। (१३)

---

(९) द्वितीयेति। उपगम्य चूततरुमिति शेषः। कथमित्यादि। कथमुपस्थितो मधुमासः। कथं किं॥

(१०) प्रथमेति। महु इत्यादि। मधुकरिके तवाप्येष कालो मदविभ्रमोद्गीतानाम्। तवापि मदविभ्रमोद्गीतानां मदेन मत्ततया यो विभ्रमश्चाञ्चल्यं तत्प्रयुक्तानामुच्चैर्गीतानामेष कालः॥

(११) द्वितीयेति। सहीत्यादि। सखि अवलम्बस्व मां यावदग्रपदे परिस्थिता भूत्वा चूतप्रसवं गृहीत्वा सम्पादयामि कामदेवस्यार्चनम्। अवलम्बस्व पतनप्रतिबन्धाय धारय। अग्रपदे अङ्गुलिदलमात्रे। दैर्घ्यायासवशात्पार्ष्णिर्भूत्वेत्यर्थः। चूतप्रसवं चूतकुसुमम्। स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने इत्यमरः। कामदेवस्य मदनस्य वसन्तोत्सवे कामस्यार्चनयोग्यत्वात्॥

(१२) प्रथमेति। जइ इत्यादि। यद्येवं तन्ममाप्यर्धमर्चनफलस्य। यदि एवं मत्कृतावलम्बनेन चूतप्रसवग्रहणं तत् तदा अर्चनफलस्य त्वत्कृतकामदेवार्चनफलस्य अर्धं ममापि स्यात्॥

(१३) द्वितीयेति। सहीत्यादि। सखि अभणितेऽपि एतं सम्पद्यत एव यत एकमेवावयोरिदं शरीरं द्विधाभिन्नं प्रजापतिना। एवं मत्कृतकर्मणोऽर्धफलभागसि। सम्पद्यते जायते। चेदमाह यत इत्यादि। द्विधाभिन्नं द्विधाकृतं प्रजापतिना विधात्रा।

उभे ॥ भीते ॥ पसीददु पसीददु अज्जो अगहिदत्था अह्मे। (१८)

कञ्चु ॥ हुं न किल श्रुतं भवतीभ्यां यद्वासन्तैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिश्च। तथाहि। (१९)

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरवकं तत् कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम्॥ (२०)

---

(१८) उभे इति। चेट्यावित्यर्थः। भीते सत्यौ। पसीदेत्यादि। प्रसीदतु प्रसीदत्वार्यः अगृहीतार्थे आवाम्। अगृहीतोऽविदितो वसन्तोत्सवप्रतिषेधरूपोऽर्थो याभ्यां ते अगृहीतार्थे॥

(१९) कञ्चु इति। हुमिति परिप्रश्ने। हुं वितर्के परिप्रश्ने इत्यमरः। देवस्य राज्ञो यत् शासनमाज्ञा। अववादस्तु निर्देशो निदेशः शासनञ्च सः। शिष्टिश्चाज्ञा चेत्यमरः। वासन्तैर्वसन्तसम्बन्धिभिः। पुष्पैरुपयोगादिति भावः। तरुभिस्तदाश्रयिभिर्विहङ्गैश्च प्रमाणीकृतं स्वगतं तत् भवतीभ्यां किल भवतीभ्यामेव न श्रुतम्। तरूणां तदाश्रयिणाञ्च देवशासनानुगमं दर्शयितुमाह तथाहीति॥

(२०) चूतानामिति। चूतानां रसालानां चिरनिर्गता प्रागुद्गतापि कलिका मुकुलं स्वं स्वीयं रजः परागं न बध्नाति न जनयति। तदवस्थैव स्थितिमिता इति भाव। यदपि कुरवकं तत्कुसुमं सन्नद्धं सज्जीभूय बहिर्गतं तत्कोरकावस्थया अस्फुटावस्थया स्थितं तिष्ठति तथा पुमांसश्च ते कोकिलाश्चेति तेषां रुतं ध्वनिरपि। पुंसः सांज्ञिति अस्फुटं सत्। शिशिरे हेमन्ते गतेऽपि कण्ठे स्खलितं भग्नं चलोऽभवं शङ्के यत् स्मरः कामोऽपि चकितो भीत सन्। चकितः शङ्कितो भीत इति त्रिकाण्डशेषः। तूणादिषुधेरर्द्धमाकृष्टं शरं बाणं संहरति। त्यागयति। अत्र शङ्के इत्युत्प्रेक्षां दर्शयति। शङ्कं द्योतकम्। मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश इति। शार्दूलविक्रीडितं वृत्तम्॥

मिश्र॥ णत्थि एत्थ सन्देहो महाप्पहावो क्खु राएसी। (२१)

प्रथमा॥ अज्ज कदिचिदिअसाइं मित्तावसुना रट्टिएण भट्टिणो पादमूलं पेसिदा अज्जो इध पमदवणे चित्तकम्मं अप्पिदुं ता आगन्तुअदाए ण सुदपुव्वो अह्मेहिं एसो वुत्तन्तो। (२२)

कञ्चु॥ तेन हि न पुनरेवं प्रवर्त्तितव्यम् (२३)।

उभे॥ सकौतूहलम्॥ अज्ज जइ इमिणा जणेन सोदव्वं ता कधेदु अज्जो किं निमित्तं भट्टिणा वसन्तुच्छवो पडिसिद्धोत्ति। (२४)

मिश्र॥ उच्छवप्पिआ क्खु राआणो होन्ति ता एत्थ गुरुणा कारणेण होदव्वं। (२५)

---

(२१) मिश्रेति। णत्थीत्यादि। नास्त्यत्र सन्देहो महाप्रभावः खलु राजर्षिः। अत्र चूतादिप्रकरणे शासनप्रमाणीकरणे। खलु इत्यर्थः॥

(२२) प्रथमेति। अज्जेत्यादि। आर्य्यं कतिचिद्दिवसानि मित्रावसुना राष्ट्रियेण भर्त्तुः पादमूलं प्रेषिते आर्य्ये इह प्रमदवने चित्रकर्मार्पयितुं तदागन्तुकतया न श्रुतपूर्व्वम् आवाभ्यामेष वृत्तान्तः। मित्रावसुना तन्नाम्ना। राष्ट्रियेण राजश्यालेन। राजश्यालस्तु राष्ट्रिय इत्यमरः। पादमूलं पदान्तिकम्। मूलं शिफाद्ययोः। मूलविन्तेऽन्तिके चा नेति मेदिनी। प्रयोजनमाह इहेति। चित्रकर्म अर्पयितुं चित्रविन्यासमाचाभ्यां कारयितुम्। आगन्तुकतया आहार्य्यतया अनित्यस्थायितयेति यावत्। स्यादागन्तुकमाहार्य्यमिति त्रिकाण्डशेषः। श्रुतं श्रवणं पूर्व्वं यस्य स श्रुतपूर्व्वः॥

(२३) कञ्चु इति। न प्रवर्त्तितव्यं प्रवृत्तिर्न कर्त्तव्या॥

(२४) उभे इति। सकौतूहलं सयुश्रूषम्। अज्जेत्यादि। आर्य्यं यद्यनेन जनेन श्रोतव्यं तत् कथयत्वार्य्यः। किं निमित्तं भर्त्त्रा वसन्तोत्सवः प्रतिषिद्ध इति। श्रोतव्यं श्रवणार्हम्। तत् तदा॥

(२५) मिश्रेति। उच्छवेत्यादि। उत्सवप्रिया खलु राजानो भवन्ति तदत्र गुरुणा कारणेन भवितव्यम्। भवितव्यमिति भावे तव्य॥

कञ्चु ॥ स्वगतम् ॥ बहुलीभूतोऽयमर्थः तत् किं न कथ्यते । (२६)

प्रकाशम ॥ अस्ति भवत्योः कर्णपथमायातं शकुन्तलाप्रत्यादेशकौलीनम् । (२७)

उभे ॥ अज्ज सुदं रट्ठिअमुहादो अङ्गुलीअदंसणं जाव । (२८)

कञ्चु ॥ तेन हि स्वल्पं कथयितव्यम् । यदैवाङ्गुरीयदर्शनादनुस्मृतं देवेन सत्यमूढपूर्व्वा रहसि मया तत्रभवती शकुन्तला मोहात्प्रत्यादिष्टेति तदाप्रभृत्येव पश्चात्तापमुपगतो देवः । तथाहि (२९)

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्योपान्तविवर्त्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडावनम्रश्चिरम् ॥ (३०)

---

(२६) कञ्चु इति । स्वगतमप्रकाशम् । अनतिस्पष्टमिति यावत् । अयमर्थोऽभिधेयो बहुलीभूतः क्रमेण बहुलीभूतः तत् तदा किं न कथ्यते न कथनीयम् ॥

(२७) प्रकाशमिति । सुस्पष्टमित्यर्थः । शकुन्तलाया प्रत्यादेशस्य निराकृतेः कौलीनं लोकवादः । स्यात् कौलीनं लोकवादे इत्यमरः । भवत्योः कर्णपथमायातं श्रुतिगोचरमस्ति । यद्यामूलात् कथयितव्यं तदुपेक्ष्यं यदि त्वपरिष्टं किञ्चित् तदा कथयिष्यामीत्यभिप्रेत्य प्रश्नीयम् ॥

(२८) उभे इति । अज्जेत्यादि । श्रुतं राष्ट्रियमुखादङ्गुरीयदर्शनं यावत् । "अङ्गुरीयदर्शनं धीरराजश्रुत्वेति शेषः ॥

(२९) कञ्चु इति । स्वल्पमवशिष्टमिति शेषः । कथयति यदैवेति । अङ्गुरीयदर्शनाद्धेतोः "सत्यमसंशयं मया रहसि निर्ज्जने ऊढपूर्व्वा परिणीतपूर्व्वा तत्रभवती शकुन्तला मोहात् विस्मरणात् प्रत्यादिष्टा निराकृतेति" यद्‌अनुस्मृतं तदाप्रभृति तत्कालमारभ्यैव देवो राजा पश्चात्तापमुपगतः प्राप्तः ॥

(३०) रम्यमिति । रम्यं मनोरमं वस्तु द्वेष्टि नाभिनन्दति तथा पुरा प्राक् यथा आसीत् तथा प्रत्यहं प्रकृतिभिरमात्यैः न सेव्यते उपास्यते । प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोरिति मेदिनी । तथा उद्गता निद्रा यस्य स तथोक्तः सन् । शय्याया उपान्तयोः कोणयोः

मिश्र ॥ पिअं मे पिअं । (३१)

कञ्चु ॥ अप्रमात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः । (३२)

उभे ॥ जुज्जदि । (३३)

नेपथ्ये ॥ एदु एदु भअं । (३४)

कञ्चु ॥ कर्णं दत्त्वा ॥ अये इत एवाभिवर्त्तते देवः तद्गच्छतं स्वकर्मानुष्ठानाय । (३५)

उभे ॥ तह । इति निष्क्रान्ते । (३६)

ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च । (३७)

---

विवर्त्तनैः पार्श्वपरिवर्त्तनेन यातायातैः करणैः यया रात्री विगमयति यापयति । तथा दाक्षिण्येन सर्व्वासु समरागितया यदा अन्तःपुरेभ्यः पत्नीभ्यः उचितामनुपयुक्तां वाचं ददाति तदा गोत्रेषु नामसु स्खलति । गोत्रन्तु नाम्नि चेत्यमरः । स्खलितं स्तबकुल्लवानामप्रयोगः चिरं क्रीडया अवनम्रो अवनतशिराश्च भवति । दक्षिणनायक उक्तो यथा । एकाश्रितो-ऽनुकूलः समरागो दक्षिणस्तु सर्व्वासु । शठ एकत्रैव रतो बहिरन्यत्र प्रियोऽप्रियो गूढ-मीति । शार्दूलविक्रीडितं वृत्तम् ॥

(३१) मिश्रेति । पिअमित्यादि । प्रियं मे प्रियम् । विरहवेदनोपदर्शितप्रियसखी-प्रणयापगमादिति भावः ॥

(३२) कञ्चु इति । प्रभवतो निरङ्कुशात् वैमनस्यादुन्मस्कत्वात् । प्रत्याख्यातो निराकृतः ॥

(३३) उभे इति । जुज्जदि युज्यते ॥

(३४) नेपथ्य इति । एदु एदु भअं एतु एतु भवान् ॥

(३५) कञ्चु । इतोऽत्र । अभिवर्त्तते आयाति । गच्छतमिति चेट्यौ प्रति । स्वक-र्म्मानुष्ठानाय चित्रकर्म्मार्पणाय ॥

(३६) उभे इति । तह तथा ॥

(३७) तत इति । सुगमम् ॥

कञ्चु ॥ राजानं विलोक्य ॥ अहो सर्व्वास्ववस्थासु रामणीयकमाकृतिविशेषाणाम् । तथाह्येवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः । य एषः (३८)

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।
चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ (३९)

---

(३८) कञ्चु इति । सर्व्वास्ववस्थासु दौस्थ्यावस्थास्वपि । रमणीयस्य भावो रामणीयकं रमणीयता । आकृतिविशेषाणां विशिष्टानामाकृतीनाम् । हेतुमाह तथाहीति । वैमनस्यपरीत उत्कण्ठायुक्त । प्रियं प्रीतिकरं दर्शनमवलोकनं यस्य स प्रियदर्शन । य एष इति क्षीणोपि नालक्ष्यत इति श्लोकीयेनान्वितम् ॥

(३९) प्रत्यादिष्टेति । प्रत्यादिष्टो निराकृतो विशेषमण्डनविधिर्नानाभूषणपरिधानं येन स तथोक्त । तथा काञ्चनं हिरण्मयं श्लथं शिथिलं शोकशोषादिति भाव । शिथिल प्रश्लथः श्लथ इति जटाधर । एकमेव वलयं वामप्रकोष्ठे वामकूर्परादधो बिभ्रत् धारयन् । तथा श्वासैर्निश्वासमारुतैरुपरक्तो व्यसनार्त्तं पीडां गत इति यावत् । अधरो यस्य स । एतेन श्वासानां दीर्घत्वमुष्णत्वञ्च व्यञ्जितम् । उपरक्तं व्यसनार्त्ते राहुग्रस्तेन्दुसूर्य्ययोरिति मेदिनी । तथा चिन्तया यज्जागरणं तेन प्रताम्रे अतिशोणिते नयने यस्य स तथोक्तो य एष देव संस्कारेण शाणादिना मलापकरणेन उल्लिखित तनूकृतः । स्यादुल्लिखितसत्कीर्णे तनूकृते च वाच्यवदिति मेदिनी । महामणिर्महार्घ रत्नमिव क्षीणोपि शोकशोषतां गतोपि मणिपक्षे क्षुद्रोपि आत्मनस्तेजोगुणै प्रभावगरिम्णा दीप्तिगरिम्णा च नालक्ष्यते क्षीणतया नावधार्य्यते । तेन प्रभावे दीप्तौ चेत्यमरः । अनानन्ददशानां चिन्ताख्यो दर्शिता । तत्र वात्स्यायन । दृश्मन सङ्गसङ्कल्पा जागरः तनुता रति । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दशेति । पूर्णोपमालङ्कार । वृत्तं शार्दूलविक्रीडितम् ॥

मिश्र॥ राजानं विलोक्य॥ ठाणे क्खु पच्चादेसविमाणिदावि इमस्स किदे सउन्तला किलिस्सदि। (४०)

राजा॥ ध्यानमन्दं। परिक्रम्य। (४१)

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम्।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम्॥ (४२)

मिश्र॥ एवं ईदिसाइं तवस्सिणीए भागधेआइं। (४३)

विदू॥ अपवार्य्य॥ हुं भूओवि लङ्घिदो एसो सउन्तलावादेण ण आणे कधं चिकिच्छिदव्वो भविस्सदि। (४४)

---

(४०) मिश्रेति। विलोक्येति कथं किमिदं स्यादिति भावः। ठाणे इत्यादि। स्थाने खलु प्रत्यादेशविमानितापि अस्य कृते शकुन्तला क्लिश्यति। प्रत्यादेशेन प्रत्याख्यानेन विमानितावमानितापि शकुन्तला अस्य राजर्षेः कृते अर्थे यत् क्लिश्यति क्लेशमनुभवति तत् स्थाने युक्तम्। युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। श्रीमत्तमपरायणमिति भावः॥

(४१) राजेति। ध्यानमन्दं चिन्तालसम्॥

(४२) प्रथममिति। सारङ्गवत् हरिणवदक्षिणी यस्याः सा तया। सक्थ्यक्ष्णः स्वाङ्गे इति षच्। षित्वादीप्। प्रियया शकुन्तलया प्रथममादौ प्रतिबोध्यमानं बोधाय व्यापार्यमाणमपि सुप्तं मोहाभिभूतम् इदं हतहृदयं सम्प्रति इदानीम् अनुशयदुःखाय अनुतापकष्टाय विबुद्धं स्फुटितमतं भवतीति शेषः। अथानुशयो दीर्घद्वेषानुतापयोरित्यमरः। इयमार्या जातिः॥

(४३) मिश्रेति। एवमित्यादि। नन्वीदृशानि तपस्विन्या भागधेयानि। नन्विति अवधारणे ईदृशान्येवेत्यर्थः। तपस्विन्या अनुकम्पार्हाया शकुन्तलाया इत्यर्थः॥

(४४) विदू इति। हुमित्यादि। हुं भूयोऽपि लङ्घित एष शकुन्तलावातेन न जाने कथं चिकित्सितव्यो भविष्यति। हुं वितर्के प्रश्ने वा। हु वितर्के परिप्रश्ने इत्यमरः। भूयोऽपि पुनरपि। लङ्घितोऽभिभूतः। शकुन्तलावातेन शकुन्तला शकुन्तलेति वातव्याधिना॥

कञ्चु ॥ उपसृत्य ॥ जयति जयति देवः, देव प्रत्यवेक्षिताः प्रमदवनभूमयः यथाकाममध्यास्तां विनोदस्थानानि देवः । (४५)

राजा ॥ वेत्रवति मद्वचनादमात्यपिशुनं ब्रूहि अद्य चिरप्रबोधान्न सम्भावितमस्माभिर्धर्म्मासनमध्यासितुम् यत्प्रत्यवेक्षितमार्य्येण पौरकार्य्यं तत्पत्रमारोप्य प्रस्थाप्यतामिति । (४६)

प्रती ॥ जं देवो आणवेदि । इति निष्क्रान्ता । (४७)

राजा ॥ पार्व्वतायन त्वमपि स्वनियोगमशून्यं कुरु । (४८)

कञ्चु ॥ यदाज्ञापयति देवः । इति निष्क्रान्तः । (४९)

---

(४५) कञ्चु इति । प्रत्यवेक्षिताः सावधानमीक्षिताः । यथाकामं यथाभिलाषम् । अध्यास्तामुपविशतु । विनोदस्थानानि विरहयापनस्थानानि । अधिशीङ्स्थासेत्युपादानादधिकरणस्य कर्म्मत्वम् ॥

(४६) राजेति । वेत्रवतीति प्रतीहार्य्याः सम्बोधनम् । मद्वचनात् राज्ञोच्यत इत्युक्ता इति तात्पर्य्यम् । अमात्यो मन्त्री चासौ पिशुनस्तन्नामा चेत्यमात्यपिशुनस्तम् । मन्त्री धीसचिवोऽमात्य इत्यमरः । चिरप्रबोधादतिजागरणात् । धर्म्मासनं धर्म्माधिकरणगतविचारासनम् । तथाच मनुः । धर्म्मासनमधिष्ठाय सम्वीताङ्गः समाहितः । प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेदिति । प्रत्यवेक्षितं दृष्टम् । आर्य्येण भवता । पौरकार्य्यं पुरजनसम्बन्धि कर्म्म । राज्यकार्य्यस्यामात्यावेक्षणीयत्वं राज्ञस्तु पौरकार्य्यावेक्षकत्वमिति भावः । पत्रमारोप्य पत्रारूढं कृत्वा । प्रस्थाप्यतां प्रेर्य्यताम् । इति सूचीत्यन्वयः । अत्र मनुः । अमात्यमुख्यं धर्म्मज्ञं प्राज्ञं दान्तं कुलोद्गतम् । स्थापयेदासने तस्मिन् खिन्नः कार्य्येक्षणे नृणामिति ॥

(४७) प्रतीति । जमित्यादि । यद्देव आज्ञापयति । सुगमम् ॥

(४८) राजेति । पार्व्वतायन कञ्चुकिन् । स्वनियोगं स्वाधिकारम् । अशून्यं शून्यं न कुरु । स्वाधिकारं गच्छेत्यर्थः ॥

(४९) कञ्चु इति । सुगमम् ॥

कञ्चु ॥ उपसृत्य ॥ जयति जयति देवः, देव प्रत्यवेक्षिताः प्रमद-वनभूमयः यथाकाममध्यास्तां विनोदस्थानानि देवः। (४५)

राजा॥ वेत्रवति मद्वचनादमात्यपिशुनं ब्रूहि अद्य चिरप्रबोधान्न सम्भावितमस्माभिर्धर्म्मासनमध्यासितुम् यत्प्रत्यवेक्षितमार्य्येण पौरकार्य्यं तत्पत्रमारोप्य प्रस्थाप्यतामिति। (४६)

प्रती॥ जं देवो आणवेदि। इति निष्क्रान्ता। (४७)

राजा॥ पार्व्वतायन त्वमपि स्वनियोगमशून्यं कुरु। (४८)

कञ्चु॥ यदाज्ञापयति देवः। इति निष्क्रान्तः। (४९)

---

(४५) कञ्चु इति। प्रत्यवेक्षिता सावहितमीक्षिता। यथाकामं यथाभिलाषम्। अध्यास्तामुपविशतु। विनोदस्थानानि विरहयापनस्थानानि। अधिशीङ्स्थासेद्रुपादानादधिकरणस्य कर्म्मत्वम्॥

(४६) राजेति। वेत्रवतीति प्रतीहार्य्याः सम्बोधनम्। मद्वचनात् राज्ञोच्यत इत्युक्त्वा इति तात्पर्य्यम्। अमात्यो मन्त्री चासौ पिशुनस्तन्नामा चेत्यमात्यपिशुनस्तम्। मन्त्रीधीसचिवोऽमात्य इत्यमरः। चिरप्रबोधादतिजागरणात्। धर्म्मासनं धर्म्माधिकरणगतविचारासनम्। तथाच मनुः। धर्म्मासनमधिष्ठाय संवीताङ्गः समाहितः। प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेदिति। प्रत्यवेक्षितं दृष्टम्। आर्य्येण भवता। पौरकार्य्यं पुरजनसम्बद्धं कर्म्म। राज्यकार्य्यस्यामात्यावेक्षणीयत्वं राज्ञस्तु पौरकार्य्यावेक्षकत्वमिति भावः। पत्रमारोप्य पत्रारूढं कृत्वा। प्रस्थाप्यतां प्रेर्य्यताम्। इति ब्रूहीत्यन्वयः। अत्र मनुः। अमात्यमुख्यं धर्म्मज्ञं प्राज्ञं दान्तं कुलोद्गतम्। स्थापयेदासने तस्मिन् खिन्नः कार्य्येक्षणे नृणामिति॥

(४७) प्रतीति। जमित्यादि। यद्देव आज्ञापयति। सुगमम्॥

(४८) राजेति। पार्व्वतायन कञ्चुकिन्। स्वनियोगं स्वाधिकारम्। अशून्यं कुरु शून्यं न कुरु। स्वाधिकारं गच्छेत्यर्थः॥

(४९) कञ्चु इति। सुगमम्॥

राजा ॥ दैहयमेव हृदयाश्वासनं तत्तद्देवादेशय माधवीलतामण्डपम्। (५७)

विदू ॥ इदो इदो एदु भवं। इत्युभौ परिक्रामतः। (५८)

मिश्रकेशी ॥ अनुगच्छति। (५९)

विदू ॥ एसो मणिसिलापट्टसणाहो माहवीलदामण्डवो विविक्तदाए उवआररमणीअदाए णिसग्गमारुदेण अ साअदेण विअ पडिच्छदि तुमं ता पविसिअ णिसीददु भवं। (६०)

---

फलके मे स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति। चतुरस्तुमध्ये। भवता मेधाविनी इत्यादिष्टा मन्त्रिवन्वय। च्याहत्रपरिचारिका सततसन्निहितपरिचारिका। लिपिकरी लेखननिपुणा। मेधाविनी स्मृतिमती या न विस्मरिष्यतीति भावः। चादेयमाह माधवीत्यादि। अतिवाहयिष्यामि यापयिष्यामि। तत्रैत्यानयेत्यनेन सम्बद्धम्। चित्रफलके चित्रार्थदारुमयपट्टके। स्वहस्तलिखिता स्वहस्तचित्रिताम्। प्रतिकृतिं प्रतिमूर्त्तिम् ॥

(५७) राजेति। दैहयमेव चित्रदर्शनादिकमेव हृदयाश्वासनं मनोनिर्वृतिकारणम्। तथाचोक्तम्। वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वप्नसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोपि गदित इति। चादेशय दर्शय ॥

(५८) विदू इति। इदो इत्यादि। इत इत एतु भवान्। सुगमम् ॥

(५९) मिश्रेति। सुगमम् ॥

(६०) विदू इति। एसो इत्यादि। एष मणिशिलापट्टसनाथो माधवीलतामण्डपो विविक्ततया उपचाररमणीयतया च निसर्गमारुतेन स्वागतेनेव प्रतीच्छति त्वां तत्प्रविश्य निषीदतु भवान्। मणीति। मणिभूता रत्नभूता या शिला तस्याः पट्ट पीठमासनमायस्तद्युक्तः। पट्ट पेषणपाषाणे व्रणादीनाञ्च बन्धने। कक्षान्तरेऽपि राजादिमासनान्तरपीठयोरिति मेदिनी। विविक्ततया विजनतया उपचारेण विकीर्णकुसुमादिना रमणीयतया मनोज्ञतया च। मकरन्दोप-

अनुशयादनुरोदिमि चोत्सुकः
सुरभिमाससुखं समुपैति च ॥ (५३)

विदू ॥ भो वअस्स चिट्ठ दाव जाव इमिणा दण्डकट्ठेण कन्दप्पवाणं णासेमि । इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं ताड़यितुमिच्छति । (५४)

राजा ॥ सस्मितम् ॥ भवतु दृष्टं ब्रह्मवर्च्चसं सखे क्वेदानीमुपविष्टः प्रियायाः किञ्चिदनुकारिणीषु लतासु दृष्टिं विनोदयामि । (५५)

विदू ॥ णं भअदा आसण्णपरिचारिआ लिविअरी मेहाविणी आदिट्ठा माहवीलदाहरए इमं वेलं अदिवाहिस्सं तहिं चित्तफलए मे सहत्थलिहिदं तत्थभोदीए सउन्तलाए पडिकिदिं आणेहित्ति । (५६)

---

(५२) उपेति । अङ्गुलिमुद्रया साचराङ्गुरीयदर्शनेन । अङ्गुरीयकमूर्म्मिका साचराङ्गुलिमुद्रा स्यादित्यमरः । उपस्थिता जनिता स्मृतिः स्मरणं यस्य स तथोक्तोऽहम् उत्सुकोदर्शनाभिलाषी सन्निमित्तनिराकृतामकारणप्रत्याख्यातां प्रियतमां मनुलक्षीकृत्य अनुशयया दनुतापात् रोदिमि क्रन्दामि सुरभिमासस्य वसन्तमासस्य सुखञ्च समुपैति उपगच्छति । वसन्ते पुष्पसमयः सुरभिरित्यमरः । प्रियाविप्रयोगदुःखावकाशमासाद्यैव वसन्तमासागम इति रञ्जोपमालिता । चकारद्वयं वृत्तञ्च पूर्व्ववत् ॥

(५४) विदू इति । भो इत्यादि । भो वयस्य तिष्ठ तावत् यावदनेन दण्डकाष्ठेन कन्दर्पवाणं नाशयामि । दण्डकाष्ठेन लगुडेन । कन्दर्पवाणं चूताङ्कुरं । ताडयितुमाहन्तुम् ॥

(५५) राजेति । ब्रह्मणो वेदाध्ययनस्य तदर्थपरिपालनस्य च वर्च्चस्तेजो ब्रह्मवर्च्चसम् । ब्रह्महस्तिराजपल्याहर्व्वस इत्यमव्ययः । वेदास्तत्त्वं तपो ब्रह्मेति । तेज पुरीषयोर्वर्च्च इति । स्याद्ब्रह्मवर्च्चसं वेदाध्ययनर्द्धिरिति चामरः । क कुत्र । किञ्चिदनुकारिणीषु स्वल्पसादृश्यवतीषु । अतएवोक्तम् । वियोगावस्थासु प्रियजनसदृशानुभवनमिति । दृष्टिं विनोदयामि दृष्टिसुखमनुभवामि ॥

(५६) विदू इति । णमित्यादि । ननु भवता आसन्नपरिचारिका लिपिकरी मेधाविनी आदिष्टा माधवीलतामण्डपे इमां वेलामतिवाहयिष्यामि तत्र चित्र-

राजा ॥ ईदृशमेव हृदयाश्वासनं तत्तदेवादेशय माधवीलतागृहम्। (५७)

विदू ॥ इदो इदो एदु भवं। (उभौ परिक्रामतः) (५८)

मिश्रकेशी ॥ अनुगच्छति। (५९)

विदू ॥ एसो मणिसिलापट्टसणाहो माहवीलदामण्डवो विविक्तदाए उवआररमणीअदाए णिसग्गमारुदेण च साअदेण विअ पडिच्छदि तुमं ता पविसिअ णिसीददु भवं। (६०)

---

फलके मे स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति। मनुरत्नुप्रश्ने। भवता मेधाविनी इत्यादिष्टा मन्त्रित्यन्वयः। चातुरपरिचारिका सततसन्निहितपरिचारिका। लिपिकरी लेखननिपुणा। मेधाविनी स्मृतिमती या न विस्मरिष्यतीति भावः। आदेशमाह माधवीत्यादि। अतिवाहयिष्यामि यापयिष्यामि। तत्रेत्यानयेत्यनेन सम्बद्धम्। चित्रफलके चित्रार्थदारुमयपट्टके। स्वहस्तलिखिता स्वहस्तचित्रिताम्। प्रतिकृतिं प्रतिमूर्त्तिम् ॥

(५७) राजेति। ईदृशमेव चित्रदर्शनादिकमेव हृदयाश्वासनं मनोनिर्वृतिकारणम्। तथाचोक्तम्। वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वप्नसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोपि गदित इति। आदेशय दर्शय ॥

(५८) विदू इति। इदो इत्यादि। इतइत एतु भवान्। सुगमम् ॥

(५९) मिश्रे ति। सुगमम् ॥

(६०) विदू इति। एसो इत्यादि। एष मणिशिलापट्टसनाथो माधवीलतामण्डपो विविक्ततया उपचाररमणीयतया च निसर्गमारुतेन स्वागतेनेव प्रतीच्छति त्वां तत्प्रविश्य निषीदतु भवान्। मणीति। मणिभूता रत्नभूता या शिला तस्याः पट्ट पीठस्तत्सनाथस्तद्युक्तः। पट्ट पैषणपाषाणे व्रणादीनाञ्च बन्धने। कक्षान्तरेऽपि राजादिशासनान्तरपीठयोरिति मेदिनी। विविक्ततया विजनतया उपचारेण विकीर्णकुसुमादिना रमणीयतया मनोज्ञतया च। प्रकरणोप-

उभौ ॥ प्रविश्योपविष्टौ ॥ (६१)

मिश्र ॥ लदासंस्सिदा पेक्खिस्सं दाव पियसहीए (पडिकिदिं) तदो से भत्तुणो बहुमदं अणुराअं णिवेदइस्सं। इति तथा कृत्वा स्थिता । (६२)

राजा ॥ निश्वस्य ॥ सखे सर्व्वमिदानीं स्मरामि शकुन्तलायाः प्रथमदर्शनवृत्तान्तं यं कथितवानस्मि भवते। स भवान् प्रत्यादेशसमये मत्समीपगतो नासीत् किन्तु पूर्व्वमपि न त्वया कदाचित् सङ्कीर्त्तितं तत्रभवत्या नामादिकं कच्चिदहमिव विस्मृतवानसि। (६३)

---

कारश्च विकीर्णकुसुमादिष्विति शेष.। स्वागतेन कुशलप्रश्नेनेव। स्वागतं कुशलप्रश्न इति हारावली। निसर्गमारुतेन स्वाभाविकानिलेन मन्द वेगिनेत्यर्थ.। कटाक्षेन-त्वा प्रतीच्छति गृह्णाति। अत्र पवनस्य लतान्तरागतत्वेन शैत्यं विकीर्णकुसुमसम्पर्कात्सौगन्ध्यं निसर्गत्वाच्च मान्द्यं दर्शितम्। स्वागतेनेव निसर्गमारुतेनेत्युत्प्रेक्षा ॥

(६१) उभाविति। सुगमम् ॥

(६२) मिश्रेति। लदेत्यादि। लतासंश्रिता प्रेक्षिष्ये तावत् प्रियसख्या॰ प्रतिकृति ततोऽस्याभर्त्तुर्बहुमतमनुरागं निवेदयिष्यामि। लतासंश्रिता लताश्रिता। प्रियसख्या शकुन्तलायाः। ततस्तदनन्तरं भर्त्तुर्बहुमतं बहुमानयुक्तमनुरागमस्याः सम्बन्धे निवेदयिष्यामि। तथाकृत्वा लतामाश्रित्य ॥

(६३) राजेति। यं प्रथमदर्शनवृत्तान्तम्। कथितवानस्मि तदानीं मेवेति शेष.। स भवान् श्रुतवृत्तान्तो भवान्। प्रत्यादेशसमये प्रत्याख्यानसमये। पूर्व्वमपि शकुन्तलाया आगमनात् पूर्व्वमपि। सङ्कीर्त्तितमुल्लिखितम्। कच्चित् किम्। कच्चित् कामप्रवेदन इत्यमर'। कामप्रवेदनमभिलषितप्रश्न। तथा चानतिचिरेणैवातिविस्मरणादात्मनोऽल्पमतित्वदोषतिरोधानाय माधव्यस्यापि विस्मरणमिष्टमस्येति भाव॰ ॥

मिश्र॥ अदो ज्जेव महीवदिं पणम्मि सहिअआओ सहाआओ ण विरहिदव्वाओ। (६४)

विदू॥ ण विसुमरामि किन्तु सव्वं कहिअ अवसाणे उण तुए भणिदं परिहासविअप्पिओ एसो ण भूदत्थोत्ति मएवि मन्दबुद्धिणा तथा ज्जेव गहिदं अथवा भविदव्वदा क्खु एत्थ बलवदी। (६५)

मिश्र॥ एवक्खेदं। (६६)

राजा॥ ध्यात्वा॥ सखे परित्रायस्व माम्। (६७)

विदू॥ भो वअस्स किं एदं तुह उववण्णं ण कदावि सप्पुरिसा सोअचित्ता होन्ति णं पवादेवि णिक्कम्पा ज्जेव गिरिओ। (६८)

---

(६४) मिश्रेति। अदो इत्यादि। अतएव महीपतिमपि. क्षणमपि सहृदयाः सहाया न विरहितव्याः। सहृदया समनस्काः। विरहितव्या त्यक्तव्याः। रहत्यज् त्याग इति कविकल्पद्रुमः॥

(६५) विदू इति। णेत्यादि। न विस्मरामि। किन्तु सर्वं कथयित्वा अवसाने पुनस्त्वया भणितं परिहासविकल्पित एष न भूतार्थ इति। मयापि मन्दबुद्धिना तथैव गृहीतम् अथवा भवितव्यता बलवती। सर्वं शकुन्तलावृत्तान्तम्। एष वृत्तान्त अवसाने परिशेषे भूतार्थं सत्यार्थं। युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिष्विति अमरः। तथैव परिहासानिश्चिततयैव। गृहीतं ज्ञातम्। भविष्यतीति भवितव्यम्। सङ्गोः कभाव इत्युक्ते कर्त्तरि तव्य। तद्भावो भवितव्यता अवश्यम्भावितेत्यर्थः॥

(६६) मिश्रेति। एवखेदं एवमिदम्॥

(६७) राजेति। ध्यात्वा चिन्तयित्वा। परित्रायस्व रक्ष॥

(६८) विदू इति। भोइत्यादि। भो वयस्य किमेतत् तवोपपन्नं न कदापि सत्पुरुषा शोकचित्ता भवन्ति। ननु प्रवातेपि निष्कम्पाएव गिरयः। एतत् विरहव्यथाविकृतत्वं किं तव सम्बन्धे उपपन्नं युक्तम्। शोक इष्टवियोगदुःख

३०

राजा ॥ वयस्य निराकरणविक्लवायास्ते सख्यास्तामवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि (६६)

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं वाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम् ॥ (७०)

मिश्र ॥ अम्महे ईदिसी परवसदा इमस्स सम्पि सन्दावेदि । (७१)

विदू ॥ भो अत्थि मे तक्को केण उण तत्थभोदी आआससञ्चारिणा णीदेत्ति । (७२)

---

चित्ते येषां ते शोकचित्ताः । ननु यत । प्रशान्तेपि मनस्यमारूतेपि सति । गिरय पर्व्वता निष्कम्पाएव तदवस्थाएव ॥

(६६) राजेति । निराकरणेन प्रत्याख्यानेन विक्लवाया विह्वलायास्ते सख्याः शकुन्तलायास्तामवस्था दुरवस्थां अनुस्मृत्य स्मृत्वा बलवदतिशयेन अशरणोऽरक्षितोऽस्मि । हि यस्मात् । सा शकुन्तला ॥

(७०) इत इति । इतो मत्सकाशात् प्रत्यादिष्टा निराकृता तदनु स्वजनं शार्ङ्गरवादिकमनुगन्तुं व्यवसिता कृताध्यवसाया तदनु गुरुसमे गुरुवन्माननीये गुरोः कण्वस्य शिष्ये शार्ङ्गरवे तिष्ठेत्युच्चैर्वदति सति स्थिता निवृत्तगमना सा शकुन्तला क्रूरे निष्ठुरे मयि वाष्पप्रकरेणाश्रुसमूहेन कलुषामनच्छाम । वाष्पो नेत्रजलोष्मणोरिति विश्वः । प्रकरस्तु पुमान् कल्पे विकीर्णकुसुमादिष्विति मेदिनी । दृष्टिं यत् पुनरर्पितवती दत्तवती तत् सविषं विषाक्तं शल्यं शेल इति प्रसिद्धं अस्त्रमिव मां दहति ज्वालां नयति । इदं शिखरिणी नाम वृत्तम् ॥

(७१) मिश्रेति । अम्महे इत्यादि । अहो ईदृशी परवशता अस्य मामपि सन्तापयति । परवशता शकुन्तलायत्तचित्तता ॥

(७२) विदू इति । भो इत्यादि । भो अस्ति मे तर्कः केन पुनस्तत्रभवती

राजा ॥ वयस्य कः पतिव्रता तामन्य परामर्ष्टुमुत्सहते मेनका किल सख्यास्ते जन्मप्रतिष्ठेति तत्सखीजनादस्मि श्रुतवान् तत्सहचरीभिस्तया वा नीतेति हृदयमाशङ्कते। (७३)

मिश्र ॥ सम्मोहेवि विह्मअणीओ क्खु दिंमस्स पडिवोधो। (७४)

विदू। भो जइ एव्वं ता समस्सद्दु भवं अत्थि क्खु समागमो कालेण तत्थभोदीए। (७५)

राजा ॥ कथ मिव। (७६)

विदू ॥ ण क्खु मादापिदरा भत्तिविओअदुक्खिदं दुहिदरं चिरं पेक्खिदुं पारेन्ति। (७७)

---

ध्याकाशसञ्चारिणा नीतेति। ध्याकाशसञ्चारिणेति। सोमरातेन ज्योतिपदाभिधेयखेचरशब्दस्याभिहितत्वात्तदागमोऽस्येव इदानीं केन तनेति प्रश्न। इतीति तर्कोऽस्तीति सम्बन्ध ॥

(७३) राजेति। पतिव्रता साध्वीम्। परामष्टं स्प्रष्टुम। उत्सहते अध्यवस्यति। जन्मप्रतिष्ठा जन्मस्थानम्। प्रशंसितोऽयथ। प्रतिष्ठा गौरवचित्तो। स्थाने च याग-निम्नताविति मेदिनी। तत्सखीमुखात् शकुन्तलासखीमुखात्। तत्सहचरीभि मेनका-सखीभि। तया मेनकया। तयावेति पाठ क्वचिद्दृश्यते। नीता स्वस्थानं प्रापिता॥

(७४) मिश्रेति। सम्मोहेवीत्यादि। सम्मोहेपि विस्मयनीय खलुस्य प्रतिबोध। सम्मोहेपि प्रियावियोगशोकपि। विस्मयनीयो विस्मयजनक। प्रतिबोधोऽनुभव॥

(७५) विदू इति। भो इत्यादि। यद्येव तत समाश्वसितु भवान् अस्ति खलु समागम कालेन तत्रभवत्या। एव यदि मेनकया तत् सख्या वा उपनयनञ्चेत्। समाश्वासितु आश्वास गच्छ। खलु यस्मात्। समागम संयोगसम्भव ॥

(७६) राजेति। सुगमम्॥

(७७) विदू इति। णेत्यादि। न खलु मातापितरौ भर्तृवियोगदुःखिता दुहितरं अचिर प्रेक्षितु पारयत। माता च पिता च तौ मातापितरौ। इतोऽन्या तत्र त्वइतिद्वा। मातापितराचीत्यथ। चिर दीर्घकाल। पारयत शक्नुत ॥

राजा ॥ अङ्गुरीयकं विलोक्य ॥ अये इदं तदसुलभस्थानभ्रंशि शोचनीयम्। (८१)

तव सुचरित अङ्गुरीय नूनं प्रतनु ममेव विभाव्यते फलेन।
अरुणनखमनोहरासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु॥ (८२)

मिश्र ॥ जइ अण्णहत्थगदं भवे तदो सच्चं सोअणीअं भवे सहि दूरे वट्टसि एआइणी ज्जेव कण्णसुहाइं अणुभवेमि। (८३)

विदू ॥ भो इयं णाममुद्दा केण उद्देसेण भअवदा तत्थभोदीए हत्थसंसग्गं पाविदा। (८४)

मिश्र ॥ ममम्मि कोदूहलेण वावारिदो एसो। (८५)

---

भिति भावः। अवश्यम्भविष्यन्तीत्यवश्यम्भाविनो अर्थाः अचिन्तनीयोऽनिर्वचनीयः गमागम आगमो येषां ते तथोक्ता भवन्ति॥

(८१) राजेति। अये इति स्मरणे। अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि चेति मेदिनी। असुलभं दुर्लभं यत् स्थानं प्रियाया अङ्गुलिरूपं तस्मात् भ्रंशि पतितमतएव शोचनीयं दुःखानुभवार्हं तदङ्गुरीयकमिदम्। अङ्गुरीयपदेनैव तस्य स्मरणात्॥

(८२) तवेति। हे अङ्गुरीय तव सुचरितं सुकृतं ममेवाल्पेन फलेन नूनं निश्चितं प्रतनु अस्वल्पं विभाव्यते निश्चीयते। यत् यस्मात् तस्याः प्रियायाः अरुणैर्लोहितैर्नखैर्मनोहरासु अङ्गुलिषु लब्धं पदं स्थानं येन तत् तथोक्तं सत् च्युतं भ्रष्टमसि। सुचरितातिरेकेण तु स्थितिरनपभ्रंशिकाङ्गुलीष्वभविष्यदिति भावः। इदं पुष्पिताग्रा नाम वृत्तम्। तदुक्तम्। अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा इति॥

(८३) मिश्रेति। जइ इत्यादि। यद्यन्यहस्तगतं भवेत् तदा सत्यं शोचनीयं भवेत्। सखि दूरे वर्त्तसे एकाकिन्येव कर्णसुखान्यनुभवामि। अन्यहस्तगतं महाराजेतरस्य हस्तगतम्। दम्पत्योः सुखदुःखरूपत्वादिति भावः। शकुन्तलामुद्दिश्याह सखीति। न त्वं श्रोतव्यं शृणोषीति भावः॥

(८४) विदू इति। भो इत्यादि। भो इयं नाममुद्रा केनोद्देशेन भवता तत्रभवत्या हस्तसंसर्गं प्रापिता। नाममुद्रा नाम्नाङ्किताङ्गुरीयम्। उद्देशेनाभिसन्धिना॥

(८५) मिश्रेति। ममेत्यादि। ममापि कौतूहलेन व्यापारित एषः। अपिः प्रश्ने। किं मम कौतूहलेन अवणेच्छया एष राजवयस्यो व्यापारितः वचनव्यापारं कारितः। आत्म-

राजा ॥ वयस्य श्रूयताम् । तदा स्वनगराय तपोवनात् प्रस्थितं मां प्रिया सवाष्पमाह स किमच्चिरेणार्य्यपुत्त्रः पुनरस्माकं स्मरिष्यतीति । (८६)

विदू ॥ तदो-तदो । (८७)

राजा ॥ अथैना मुद्राभङ्गुल्यां निवेशयता मया प्रत्यभिहिता । (८८)

विदू ॥ किं त्ति । (८९)

राजा ॥

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम् ।
तावत् प्रिये मदवरोधनिदेशवर्त्ती
नेता जनस्तव समीपमुपैष्यतीति ॥ (९०)

---

जन्या भवदिच्छा इच्छाजन्या कृतिर्भवदित्यनेनात्मजन्याया इच्छाया नरव्यापाररूपायाः कृतेश्च सामानाधिकरण्येनैव कार्य्यकारणभावस्य प्रतिपादितत्वात् तयोर्वैयधिकरण्यप्रदर्शनेनात्रासङ्गत्या अलङ्क्रियते । यदुक्तं दर्पणे कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिरिति ॥

(८६) राजेति । तदा परिणयात् परम् । स्वनगराय हस्तिनापुराय । गत्यर्थमन्येत्यनेन चतुर्थी । सवाष्पं साश्रु । किमच्चिरेण कियद्विलम्बेन । अस्माकमिति स्मृत्यर्थकर्म्मणि षष्ठी ॥

(८७) विदू इति । तदो तदो ततस्ततः ॥

(८८) राजेति । अथ तस्या वचनानन्तरम् । मुद्रा साक्षराङ्गुरीयम् । निवेशयता प्रवेशयता प्रत्यभिहिता प्रत्युक्ता ॥

(८९) विदू इति । कि त्ति किमिति । किमभिहितेत्यर्थं ॥

(९०) राजेति । एकैकमिति । हे प्रिये अत्र आश्रमे दिवसे दिवसे प्रतिदिनं मदीयमेकैकमेकमेकं नामाक्षरं अङ्गुरीयगतमिति शेष । गणय यावत् यदा अन्तं चरमाक्षरं गच्छसि गणनया प्राप्स्यसि । यावत्पुराभ्या भव्ये इति भविष्यति लट् । तावत् तदा मदवरोधस्य ममान्तःपुरस्य निदेशे आज्ञायां वर्त्तते य, स निदेशवर्त्ती भृत्यो जन, कञ्च-

तच्च दारुणात्मना मया मोहान्नानुष्ठितम् । (८१)

मिश्र ॥ रमणीओ क्खु अवही विहिणा विसंवादिदो । (८२)

विदू ॥ भो कधं लोहिदमच्छस्स वडिसं विअ सुहप्पविट्टं एदं आसी । (८३)

राजा ॥ शचीतीर्थे सलिलं वन्दमानायास्ते सख्या हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् । (८४)

विदू ॥ जुज्जदि । (८५)

मिश्र ॥ अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो इमस्स राएसिणो परिणए सन्देहो जादो अधवा ण ईदिसो अणुराओ अहिण्णाणं अवेक्खदि ता कधंविअ एदं । (८६)

---

भोति यावत् । नेता त्वामन्त पुरं प्रापयिष्यन् तत्र समीपमुपैष्यति आगमिष्यति । नेतेति भविष्यति तृण् । इति मत्यभिहितेति सम्बन्धः । वसन्ततिलकं नाम वृत्तम् ॥

(८१) तच्चेति । दारुणो भीषण आत्मा यस्य स तेन मया मोहात् भ्रमात् तत् आनयनं नानुष्ठितम् न कृतम् ॥

(८२) मिश्रेति । रमणीओ इत्यादि । रमणीय खल्ववधिर्विधिना विसंवादित । अवधिरन्त.पुरानयनकालसीमा । विसंवादितो विप्रलब्ध वञ्चित इति यावत् । विप्रलम्भो विसंवाद इत्यमर ॥

(८३) विदू इति । भो इत्यादि । भोः कथं रोहितमत्स्यस्य वडिशमिव सुखप्रविष्टमेतदासीत् । वडिशं मत्स्यवेधन मित्यमर । एतदङ्गुरीयकम् ॥

(८४) राजेति । शचीतीर्थे गङ्गावतारस्य शचीघट्टे । वन्दमानाया. सप्रणामं सगर्वपूर्वकं नमन्त्या ॥

(८५) विदू इति । जुज्जदि युज्यते ॥

(८६) मिश्रेति । अदो इत्यादि । अत. खलु तपस्विन्या शकुन्तलाया अधर्मभीरोरस्य राजर्षे परिणये सन्देहो जातः । अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते तत्कथ-

राजा॥ उपालप्स्ये तावदिदमङ्गुरीयकम्। (९७)

विदू॥ स्वगतम्॥ भो अहम्मि दाव एद दण्डकट्ठं उवालहिस्सं कधं उज्जुअस्स मे कुडिलं तुमं सि त्ति। (९८)

राजा॥ तदश्रुत्वैव। (९९)

कथं नु तं कोमलबन्धुराङ्गुलिं
करं विहायासि निमग्नमम्भसि। (१००)

अथवा। (१०१)

---

मिवेतत्। अत खलु अभिज्ञानभूताया अङ्गुलिमुद्राया विरहादेव। तपस्विन्या अनुकम्पार्हाया शकुन्तलाया परिणये उपयमविषये अधर्माद्भीरो भयशीलस्य अस्य राजर्षेः सन्देहोजात। एतदनुमानस्यायुक्तत्वमनुभूयाह अथवेति। ईदृश इदानीं दृश्यमान। प्रागप्येवमेवासीदिति भाव। अभिज्ञान स्मृतिहेतुम। अपेक्षते स्मारयितुमिति शेषः। तत् तस्मात् एतत् विस्मरण केषमिव कीदृशम्। अनधिकारप्रश्न॥

(९७) राजेति। उपालप्स्ये निन्दिष्यामि। तावत् तस्मादित्यर्थ॥

(९८) विदू इति। भो इत्यादि। भो अहमपि तावदेतद्दण्डकाष्ठमुपालप्स्ये कथम् ऋजुकस्य मे कुटिल त्वमसीति। तावत तदा। ऋजुकस्य सरलस्य। मे मम सम्बन्धे। कुटिल वक्रम। इति उपालप्स्ये इत्यन्वितम्॥

(९९) राजेति। तद्विदूषकवाक्यम्। एवकार प्रतिवचन सुदूरं निरस्यति॥

(१००) कथमिति। नु भो कथं कोमला सुकुमारा बन्धुरा उन्नतानता न चिपिटा इत्यर्थ। अङ्गुलयो यस्य स तम। बन्धुरन्तून्नतानतमित्यमर। तदुक्तं सामुद्रके। दीर्घाङ्गुलीभिः कुलटा कृशाभिरतिनिःस्वना। ह्रस्वाभि स्याद्ध्रस्वायुर्भग्नाभिर्भग्नवर्त्मिनी। चिपिटाभिर्भवद्दासी विरलाभिर्दरिद्रिणीति। तथा। हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते। मृदु मध्योन्नतं रक्तं तल पाथ्योरस्न्ध्रकमिति। त करं प्रियाया पाणिं विहाय त्यक्त्वा अम्भसि सलिले निमग्न पतितमसि॥

(१०१) मन्दोऽस्मिन् इत्येवमुत्तरमभिप्रेत्याह अथवेति॥

अचेतनं नाम गुणं न वीक्षते
मयैव कस्मादवधीरिता प्रिया ॥ (१०२)

मिश्र ॥ सअं ज्जेव पडिवण्णो जं अस्सि वत्तुकामा । (१०३)

विदू ॥ भो सव्वधा अहं बुभुक्खाए मारिदव्वो । (१०४)

राजा ॥ अनादृत्य ॥ प्रिये प्रत्यादेशपरित्यागादनुशयदग्धहृदय-स्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन । (१०५)

प्रविश्य चित्रफलकहस्ता चटी ॥ भट्टा इअं चित्तगदा भट्टिणी ।

इति चित्रफलकं दर्शयति । (१०६)

---

(१०२) अचेतनकमुत्तरमाह अचेतनमित्यादि द्वितीयार्द्धेन । नाथ सम्बोध्ये । अचेतनं चेतनारहितं वस्तु गुणं पदार्थविशेषप्राशस्त्यं न वीक्षते नालोकयति । अन्यथा लोकेषु मध्ये मयैव कस्माद्धेतोः प्रिया प्रीतिकरी रमणी अवधीरिता प्रत्याख्याता । नान्येन केनापि तथाविधा प्रत्याख्यायत इति भावः । एतेनात्मनोऽप्यचेतनत्वं दर्शितम् । वंशस्थविलं वृत्तम् ॥

(१०३) मिश्रेति । सअमित्यादि । स्वयमेव प्रतिपन्नो यदस्मि वक्तुकामा । अहं यद्वक्तुकामा प्रतिविवक्षुरस्मि तत् नाचेतनस्य गुणदर्शित्वमितीत्यर्थः । स्वयमेव प्रतिपन्नो अवगतवान् स्वीकृतवानिति यावत् । पदेऽस्मिन् गत्यर्थत्वादुपसर्गसत्ताद्वाधेपि गत्यर्थादिति कर्त्तरि क्तः ॥

(१०४) विदू इति । भो इत्यादि । भो सर्वथाहं बुभुक्षया मारयितव्यः । सर्वथा बाढम् । सर्वथा हेतुशाठ्ययो रिति मेदिनी । भोक्तुमिच्छा बुभुक्षा तया क्षुधया कर्त्र्या मारयितव्यो विनाशयितव्यः ॥

(१०५) राजेति । अनादृत्य विदूषकवाक्यं श्रुतमश्रुतं कृत्वा । अनुशयेति । अनुशयेनानुतापेन दग्धं हृदयं मनो यस्य सः ॥

(१०६) प्रविश्येति । चित्रफलकहस्ता चित्रपटहस्ता । भट्टेति । भर्त्तरियं चित्रगता भट्टिनी । चित्रगता चित्रस्था । भट्टिनी अकृताभिषेका ते पत्नी । देवी कृताभिषेकायां सितरासु च भट्टिनी इत्यमरः ॥

राजा ॥ विलोक्य ॥ अहो रूपमालेख्यगतायामपि प्रियायाः । तथाहि (१०७)

दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धुद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥ (१०८)

विदू ॥ विलोक्य ॥ साअ पअस्स साअ जं तए मउरो भङ्गिणीए दंसिदो भावाणुप्पवेसो खलदि विअ मे दिट्ठी णिण्णुदण्णदेसेसुं किं बहुणा सत्ताणुप्पवेससङ्काए आलवणकोदूहलं मे जणअदि । (१०९)

---

(१०७) राजेति । आलेख्यगताया चित्रगताया अपि प्रियाया रूपं अहो आश्चर्यं । रूपोत्कर्षं दर्शयितुमाह तथाहीति ॥

(१०८) दीर्घेति । दीर्घेणाकर्णगामिना अपाङ्गेन नेत्रयोरन्तेन विसारि प्रसारि विस्तारवदिति यावत् नेत्रयुगलं यत्र तत् तथा । विस्तृत्वरो विसृमरः प्रसारी च विसारिणीत्यमरः । लीलया विलासेन अञ्चिता मनोरमा भ्रूलता यत्र तत् तथोक्तम् । दन्तान्तर्दन्तमध्ये परिकीर्णो व्याप्तो यो हासकिरणः हासजनितधवलिमा तदात्मकज्योत्स्नया विलिप्तो अधरो यस्मिन् तत् । कर्कन्धुद्युतिरिव बदरीफलकान्तिरिव पाटलः श्वेतरक्तो य ओष्ठस्तेन रुचिरं मनोज्ञम् । बिम्बोष्ठीतिवत् कर्कन्धुमन्तोऽपि पक्वं फलमभिधत्ते । श्वेतरक्तस्तु पाटल इत्यमरः । विभ्रमेण शृङ्गारभावविकारविशेषेण शोभया वा लसति क्रीडतीति विभ्रमलसत् । विभ्रमः शृङ्गारभावजातक्रियाविशेषके । भ्रान्तावपिच शोभायामिति मन्त्राव्धिः । लसश्लिषि क्रीडे इति कविकल्पद्रुमः । प्रोद्भिन्नाकान्तिर्लावण्यं येन स प्रोद्भिन्नकान्तिः । लावण्यप्रकाशक इत्यर्थः । तथाभूतोद्रवः स्वेदबिन्दुर्यत्र तत् तथाभूतं तस्याः शकुन्तलाया एतद्दृश्यमानं तत् प्रागनुभूतं मुखं चित्रेऽपि आलेख्यगतमपि आलपति आभाषत इव । आलापाभाषणं मालाप इत्यमरः । शार्दूलविक्रीडितं वृत्तम् ॥

(१०९) विदू इति । विलोक्य चित्रपटमिति शेषः । साअ इत्यादि । साधु वयस्य साधु यथया मधुरो भङ्गिन्या दर्शितो भावानुप्रवेशः स्खलतीव मे दृष्टिर्निम्नतम्रदेशेन कि

मिश्र॥ अह्मो एषा राएसिणो वत्तिआलेहणिउणदा जाणे पिअसही मे अग्गदो वट्टदित्ति। (११०)

राजा॥

यद्यत् साधु न चित्रे स्यात् क्रियते तत्तदन्यथा।
तथापि तस्या लावण्यं लेखया किञ्चिदन्वितम्॥ (१११)

तथाहि। (११२)

अस्यास्तुङ्गमिव स्तनद्वयमिदं निम्नेव नाभिः स्थिता
दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि।

---

अङ्गना सत्त्वानुप्रवेशभङ्ग्या आलपनकौतूहलं मे जनयति। साधुत्वे हेतुमाह यदित्यादि। भङ्गिन्याः शकुन्तलायाः। मधुरो लोकप्रियः। स्वादुप्रियौ तु मधुराविति अमरः। भावानुप्रवेशो भावसम्बन्धः। दर्शितचित्रणयेति शेषः। निम्नतमप्रदेशेषु गुह्यभागेषु स्तनादिष्वित्यर्थः। मे मम दृष्टिः स्खलति वास्तविकत्वबुद्ध्या न पततीत्यर्थः। सत्त्वानुप्रवेशभङ्ग्या प्राणसम्बन्धभङ्ग्या। 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः। आलपनकौतूहलं आलापवासनाम्॥

(११०) मिश्रेति। अह्मो इत्यादि। अहो राजर्षेर्वर्त्तिकालेखानिपुणता जाने प्रियसखी मे अग्रतो वर्त्तत इति। राजर्षेः राजश्रेष्ठस्य वर्त्तिकाभिर्वर्णवर्त्तिभिर्लेखायां चित्रलेखायां निपुणता कौशलं अहो आश्चर्यम्। जाने मन्ये किमित्याकाङ्क्षायामित्यन्-अन्वेति॥

(१११) राजेति। यद्यदिति। यद्यद्रूपं चित्रे साधु अविकलं न स्यात् तत्तदन्यथा अन्यविधं क्रियते सर्व्वैरिति शेषः। तथापि तथाव्यवहारस्य चित्रनिपुणानां सर्व्वेषां स्वभावसिद्धत्वेऽपि तस्याः शकुन्तलायाः किञ्चित् किमपि लावण्यं अङ्गानां सविशेषरूपं लेखया वर्णविशेषरेखया अन्वितं सम्बद्धम्॥

(११२) तथाहीति। हि यस्मात्तथारेखायोगात् एकमेव भित्ति श्लोकीयचरणद्वयोक्तेनान्वयः। तृतीयचतुर्थचरणयोः रूपान्तरप्रदर्शनाय हेत्वन्तरनिर्देशात्॥

विदू॥ भो तिण्णिआ आदिदिओ दीसन्ति सव्वाओ ज्जेव दंसणी-आओ ता कदमा एत्थ तत्थभोदी सउन्दला। (११७)

मिश्र॥ अणभिण्णो क्खु एसो सहीए रूवस्स मोहचक्खु इअं क्खु ण से गदा पच्चक्खदं। (११८)

राजा॥ त्वं तावत् कतमां तर्कयसि। (११९)

विदू॥ निर्वर्ण्य॥ तक्केमि जा एसा सिढिलबन्धणुब्वन्तकुसुमेण केसहत्थेण वद्धस्सेअविन्दुणा वअणेण विसेसदो णमिदसाहिं वाहु-लदाहिं उस्सुलिदणीविणा वसणेण अ ईसीपरिस्सन्ता विअ अवि-सेअसिणिद्धदरपल्लवस्स बालचूदरुक्खस्स पासे आलिहिदा एसा तत्थभोदी सउन्दला इदराओ सहीओत्ति। (१२०)

---

यदुक्त दयितेना। अर्थान्तरमुक्तेन किञ्चित्तत्सदृशं फलम्। सदृशा निदर्शित यदि सा स्यात्रिदर्शनेति। सत्सम्भवात्। असत् असम्भवात्। वसन्ततिलकं नाम वृत्तम्॥

(११७) विदू इति। भो इत्यादि। भोस्तिस्र आकृतयो दृश्यन्ते सर्वा एव दर्शनीयाः तत्कतमात्र तत्रभवती शकुन्तला। दर्शनीया अवश्यमीक्षणीया रूपवत्य इत्यर्थ। कतमा आसां मध्ये का। किं यत्तदेकात्त्यादिति बहूनामेकनिर्धारणे डतम॥

(११८) मिश्रेति। अणेति। अनभिज्ञः खल्वेष सख्या रूपस्य मोघचक्षुः इयं खलु नास्य गता प्रत्यक्षताम्। अनभिज्ञ इदन्तयाननुभवात्। मोघ निरर्थकं चक्षुर्यस्य स मोघचक्षुः। मोघं निरर्थकमित्यमरः। उत्तरत्र खलु प्रश्नार्थः। किमियमस्य प्रत्यक्षतां न गता इत्यर्थ॥

(११९) राजेति। कतमामासां मध्ये काम्।

(१२०) विदू इति। निर्वर्ण्य निरीक्ष्य। निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षण-मित्यमरः। तर्क्कमीत्यादि। तर्कयामि यैषा शिथिलबन्धनोद्भ्रान्तकुसुमेन केशहस्तेन बद्धस्वेद-बिन्दुना वदनेन विशेषतो नमिताभ्यां शाखाभ्यां बाहुलताभ्याम् उच्छ्वसितनीविना वसनेन च ईषत् परिश्रान्तेव अभिषेकस्निग्धतरपल्लवस्य बालचूतवृक्षस्य पार्श्वे आलिखिता एषा तत्र-भवती शकुन्तला। इतरे सख्याविति। शिथिलबन्धनेन बन्धनशैथिल्येन उद्भ्रान्तानि शुक्लानि कुसुमानि येन स तेन केशहस्तेन केशकलापेन विशिष्टा। ईषीमा विशेषणे। एवमन्यत्रापि।

अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं
प्रेम्णा मन्मुखमीषदीक्षत इव स्मेरा च वक्तीव माम् ॥ (११३)

मिश्र ॥ सरिसं एव्वं पच्चादावगुरुणो सिणेहस्स । (११४)

राजा निश्वस्य । (११५)

साक्षात् प्रियामुपगतामपहाय पूर्वं
चित्रार्पितामहमिमां बहुमन्यमानः ।
स्रोतोवहां पथि निकाममजलामतीत्य
जातः सखे प्रणयवान् मृगतृष्णिकायाम् ॥ (११६)

---

(११३) अस्या इति। समायामबन्धुरायामपि भित्तौ फलके। उत्तरलितयेल्लित-मिदम्। अस्याः शकुन्तलायाः इदं स्तनद्वयं तुङ्गमिव उच्चपदालम्बमानम्। उच्चप्रांशू-न्नतोदग्रोच्छ्रिता स्तुङ्गे इत्यमरः। नाभिर्निम्ना गभीरेव स्थिता। तथा वलयत्र त्वक्-तरङ्गाग्र विषमोन्नता नोन्नता दृश्यन्ते आख्यायन्ते। रेखोपदर्शितविशेषरूपं निर्दिश्य इदानीं हेमन्तरजनितविशेषरूपं दर्शयति अङ्गे चेत्यादिना। चकारः स्निग्धप्रभावादित्यन्ते योजनीयः। तथाच स्निग्धस्य तैलाक्तवर्णस्य प्रभावात् मनोज्ञ इवो रक्ते गात्रे। अङ्गं गात्रे प्रतीकोपाययोरिति मेदिनी। इदं दृश्यमानं मार्दवं कोमलता चिरं स्थायिभावेन प्रतिभाति प्रकाशते तथा प्रेम्णा प्रणयेन मन्मुखं ईषदल्पमीक्षते पश्यतीव नयनतारयोः स्निग्धयोगादिति भावः। एवं स्मेरा स्मदुहास्या सती मां वक्ति किमपि व्याहरतीव च ओष्ठयोः स्नेहादिति भावः। शार्दूलविक्रीडितं वृत्तम्॥

(११४) मिश्रेति। सरिसमित्यादि। सदृशमेवं पश्चात्तापगुरोः स्नेहस्य। एवं चित्र-गतायाः अपि बहुमानम्। पश्चात्तापेन गुरोः प्रवृद्धस्य स्नेहस्य प्रेम्णः सदृशम्॥

(११५) राजेति। निश्वस्य दीर्घमिति शेषः॥

(११६) साक्षादिति। उपगतामुपस्थितां साक्षाद्व्यक्तिगतां प्रियां पूर्वं प्रागपहाय त्यक्त्वा चित्रार्पितामालिखितामिमां कृतकप्रियां बहुमन्यमान आद्रियमाणोऽहं पथि निकाम-मजलां पर्याप्तजलां स्रोतोवहां नदीमतीत्य अतिक्रम्य मृगतृष्णिकायां मरीचिकायां नदीवदाभासमानायामिति भावः। प्रणयवान् अनुरागी जातः। मृगतृष्णा मरीचिका इत्य-मरः। अत्र पूर्वार्धोक्तस्य परार्धोक्तवाक्येन बिम्बप्रतिबिम्बभावनिदर्शनालङ्कारः।

विदू ॥ भो तिणिआ आइदिओ दीसन्ति सव्वाओ ज्जेव दंसणी-आओ ता कदमा एत्थ तत्थभोदी सउन्तला । (११७)

मिश्र ॥ अणहिणो क्खु एसो सहीए रूवस्स मोहचक्खु इअं क्खु ण से गदा पच्चक्खदं । (११८)

राजा ॥ त्वं तावत् कतमा तर्कयसि । (११९)

विदू ॥ निब्वर्ण्य ॥ तक्केमि जा एसा सिढ़िलबन्धणुव्वन्तकुसुमेण केसहत्थेण वड्ढसेअविन्दुणा वअणेण विसेसदो णमिदंसआहिं वाहु-लदाहि उन्नलिदणीविणा वसणेण अ ईसीपरिस्सन्ता विअ अवि-सेअसिणिद्धरपल्लवस्स वालचूअरुक्खस्स पास्से आलिहिदा एसा तत्थभोदी सउन्तला इदराओ सहीओत्ति । (१२०)

---

यद्गत दण्डिना । अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम् । सदसद्वा निदर्श्येत यदि सा स्यान्निदर्शनेति । सत्सम्भवत् । असत् असम्भवत् । वसन्ततिलकं नाम वृत्तम् ॥

(११७) विदू इति । भो इत्यादि । भोस्तिस्र आकृतयो दृश्यन्ते सर्वा एव दर्शनीया तत्कतमात्र तत्रभवती शकुन्तला । दर्शनीया अवश्यमीक्षणीया रूपवत्य इत्यर्थ । कतमा आसां मध्ये का । किं यत्तदेकान्यादिति बहूनामेकनिर्धारणे डतम ॥

(११८) मिश्रेति । अणेति । अनभिज्ञ खल्वेष सख्योरूपस्य मोघचक्षु इयं खलु नास्य गता प्रत्यक्षताम् । अनभिज्ञ इदन्तयाननुभवाच्च । मोघं निरर्थकं चक्षुर्यस्य स मोघचक्षु । मोघ निरर्थकमित्यमर । उत्तरत्र खलु प्रश्नार्थः । किमियमस्य प्रत्यक्षता न गता इत्यर्थः ॥

(११९) राजेति । कतमामासां मध्ये काम् ।

(१२०) विदू इति । निब्वर्ण्य निरीक्ष्य । निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षण मित्यमर । तक्केमीत्यादि । तर्कयामि यैषा शिथिलबन्धनोद्वान्तकुसुमेन केशहस्तेन बद्धस्वेद-बिन्दुना वदनेन विशेषतो नमितांसकाभ्यां बाहुलताभ्याम् उच्छ्वसितनीविना वसनेन च ईषत् परिश्रान्तेव अभिषेकस्निग्धपरपल्लवस्य वालचूतवृक्षस्य पार्श्वे आलिखिता एषा तत्र-भवती शकुन्तला । इतरे सख्याविति । शिथिलबन्धनेन बन्धनशैथिल्येन उद्वान्तानि मुक्तानि कुसुमानि यत्र स तेन केशहस्तेन केशकलापेन विशिष्टा । वलीया विशेषणे । एवमन्यत्रापि ।

राजा ॥ निपुणो भवान् अस्त्यत्र ममापि भावचिह्नम् । (१२१)
स्विन्नाङ्गुलिविनिवेशाद्रेखा प्रान्तेषु दृश्यते मलिना ।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्णकोच्छ्वासात् ॥ (१२२)

चेटीं प्रति ॥ चतुरिके अर्द्धलिखितमेतद्विनोदस्थानमस्माभिः तद्गच्छ वर्त्तिकास्तावदानय । (१२३)

चेटी ॥ अज्ज माढव्व अवलम्ब चित्तफलअं जाव आगच्छह्म । (१२४)

---

पाश॰ पक्षश्च हस्तश्च कलापार्थाः कचात्परे इत्यमरः । विशेषत इति । विशेषतोऽतिशयान्वितो नम्रोन्नतांसौ स्कन्धौ याभ्यां ते ताभ्याम् । उच्छ्वसितनीविना विश्लथितनीविना । नीवी कटीवस्त्रबन्धः । स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि चेत्यमरः । अभिषेकेति । अभिषेकेण सलिलावर्जनेन स्निग्धश्चिक्कणोऽतिमसृणः पल्लवो यस्य स तस्य । चिक्कणं मसृणं स्निग्धमित्यमरः । एतेन स्नानावसानमात्रतोऽङ्कितत्वमिति । श्रान्तोत्क्लान्तावस्था चित्रितेति गम्यते ॥

(१२१) राजेति । निपुणोऽभिज्ञः । प्रवीणे निपुणोऽभिज्ञविज्ञनिष्णातशिक्षिता इत्यमरः । अत्र आलिखितायामस्यामत्याम् । भावचिह्नम् भावस्य सात्त्विकभावस्य स्वेदादेश्चिह्नम् । तदङ्कम् । स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृता इति ॥

(१२२) पूर्वोक्तमेव सात्त्विकभावचिह्नं दर्शयति स्विन्नेति । स्विन्नायाः स्वेदवत्या अङ्गुलेर्निवेशादर्पणात् प्रान्तेषु पार्श्वेषु मलिना रेखा दृश्यते तथा वर्णकस्य रङ्गस्य उच्छ्वासात् स्फीतभावात् कपोलात् गण्डात् पतितमश्रु नेत्रवारि च इदं लक्ष्यं निरीक्ष्यम् । *तत्र स्वेदाश्रू सात्त्विकभावौ दर्शितौ । इत्यभावो भाति ॥*

(१२३) चेटीमिति । राजाहेति शेषम् । एतद्विनोदस्थानं चित्तविनोदनस्थानमालेख्यमित्यर्थः । ततश्चित्रं कर्मोत्सुके । अस्माभिरर्द्धलिखितमसम्यक् लिखितम् । वर्त्तिका वर्णकवर्त्तिः ।

(१२४) चेटीति । अज्जेत्यादि । आर्य्य माधव्य अवलम्बस्व चित्रफलकं यावदागच्छामि । अवलम्बस्व धारय । यावदागमनकाल आगमनपर्य्यन्तम् ॥

राजा ॥ अहमेवावलम्बे। इति यथोक्तं करोति। (१२५)

चेटी ॥ निष्क्रान्ता। (१२६)

विदू ॥ भो किं एत्थ अवरं आलिहिदव्वं। (१२७)

मिश्र ॥ जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहिदुकामोत्ति तक्केमि। (१२८)

राजा ॥ सखे श्रूयताम्। (१२९)

कार्य्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णचमरा गौरीगुरोः पावनाः।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ (१३०)

---

(१२५) राजेति। यथोक्तं करोति अवलम्बते ॥

(१२६) चेटीति। सुगमम् ॥

(१२७) विदू इति। भो इत्यादि। भोः किमत्र अपरमालिखितव्यम्। आलिखितव्यम् चित्रितव्यम् ॥

(१२८) मिश्रेति। जो इत्यादि। यो यः प्रियसख्या अभिमतः प्रदेशस्तं तमालिखितुकाम इति तर्कयामि। तर्कयामि तस्य तस्याङ्कनादिति शेषः ॥

(१२९) राजेति। श्रूयतां यदालिखितव्यमिति शेषः ॥

(१३०) कार्य्येति। सैकतेषु सिकतामयपुलिनेषु लीनानि उपविष्टानि हंसमिथुनानि हंसयुग्मानि यस्याः सा तथोक्ता। सिकता वालुका। सिकताः स्युर्वालुकापीति। सैकतं सिकतामयमिति अमरः। मालिनी नाम्नी स्रोतोवहा नदी कार्य्या आलेख्या तां मालिनी अभितः उभयतः। तस्याः समीपे वा। समीपोभयतः शीघ्रसाकल्याभिमुख्येऽभित इत्यमरः। अभ्य भवपरिसवत इत्युक्तेभिकसमयेति द्वितीया। गौर्य्याः पार्वत्या गुरोः पितुर्हिमालयस्य निषण्णा अवस्थिताश्चमरा मृगविशेषा येषु ते। चमरं चामरेऽस्त्री तु मञ्जरीमृगभेदयोरिति मेदिनी। पावनाः पवित्रताहेतवः पादाः प्रत्यन्तपर्व्वताः कार्य्याः। पादाः प्रत्यन्तपर्व्वता इत्यमरः। तथा शाखासु लम्बितानि वल्कलानि तपस्विनां वसनभूतानि यस्य

विदू॥ (स्वगतम्) जधा मन्तेदि तधा तक्केमि पूरिदव्वं अणेण चित्तफलअं आकिदिविहिं लम्बकुच्चाणं वक्कलपरिहाणाणं ताव-साणं त्ति। (१३१)

राजा॥ वयस्य अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं लेखितुं विस्मृतमस्माभिः। (१३२)

विदू॥ किं विअ। (१३३)

मिश्र॥ वणवासस्स कण्णआभावस्स अ जं सरिसं भविस्सदि। (१३४)

---

स तथोक्तस्य तरोरधस्तात्‌ कृष्णमृगस्य कृष्णसारस्य शृङ्गे विषाणे वामनयनं सव्यमतिसुन्दरं वा नेत्रम्। वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे इति विश्वः। कण्डूयमानां कण्डूं खर्जनं कुर्वतीम्। कण्डूः खर्जूः कण्डूया इत्यमरः। नमस्तपोभरिव इति क्यङ्। महादित्वादात्मनेपदम्। मृगीं हरिणीम्‌ निर्मातुं आलिखितुमिच्छामि। शार्दूलविक्रीडितं वृत्तम्॥

(१३१) विदू इति। स्वगतं मनसिस्थम्। जधेत्यादि। यथा मन्त्रयति तथा तर्कयामि पूरयितव्यमनेन चित्रफलकमाकृतिभिर्लम्बकूर्चानां वल्कलपरिधानानां तापसाना-मिति। यथा यत्प्रकारं मन्त्रयति निवेदयति तथा तेन प्रकारेणाहमिति तर्कयामि किमित्याह पूरयितव्यमित्यादि। अनेन राज्ञा लम्बकूर्चानां दीर्घश्मश्रूणां कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतवे इति मेदिनी। वल्कलपरिधानानां तापसानामाकृतिभि-श्चित्रफलकं पूरयितव्य मिति॥

(१३२) राजेति। प्रसाधनं वेशरचनम्। आकल्पवेषौ नेपथ्यप्रतिकर्मप्रसाधनमित्यमरः। अभिप्रेतं लेख्यतयावधारितम्॥

(१३३) विदू इति। किं विअ किमिव॥

(१३४) मिश्रेति। वणेत्यादि। वनवासस्य कन्यकाभावस्य च यत् सदृशं भविष्यति। वनवासोपयुक्तं तद्विन्यस्तमिति मिथ्येव। कन्यकाभावस्वरूपमाभरणम्। वनवासरूपं तच्च पुष्पादिमण्डनमिति भावः॥

राजा ॥

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेशरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥ (१३५)

विदू ॥ किण्णु क्खु तत्तभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं आवारिअ चकिदचकिदा विअ ट्ठिदा । (१३६)

सावधानं दृष्ट्वा ॥ आ ही ही भो एसो दासीए पुत्तो कुसुमरसपाडच्चरो दुट्ठमहुअरो तत्तभोदीए वअणकमलं अहिलसदि । (१३७)

---

(१३५) राजेति । कृतमिति । सखे कर्णे अर्पितं न्यस्तं बन्धनं सूत्रग्रन्थिर्यस्य तत् तथोक्तं तथा आगण्डं कपोलपर्यन्तं विलम्बी केशरः शिखा यस्य तत् तथाभूतं शिरीषं शिरीषपुष्पं न कृतं न लिखितम् । एवं स्तनान्तरे स्तनयोरभ्यन्तरे शरच्चन्द्रस्य शरदिन्दोर्मरीचिवत् कोमलं सुकुमारं मृणालसूत्रम्वा मृणालतन्तुच किम्वा मृणालरचितहारश्च न रचितम् न चित्रितम् । अन्ये सूत्रपदं मालामभिधत्ते अक्षसूत्रादिवत् । शा इत्युक्ते । वंशस्थविलं नाम वृत्तम् ॥

(१३६) विदू इति । किण्णित्यादि । किन्नु खलु तत्रभवती रक्तकुवलयशोभिना अग्रहस्तेन मुखमावार्य्य चकितचकितेव स्थिता किन्नु खल्वस्या वितर्कगर्भः प्रश्नो द्योत्यते । रक्तकुवलयमिव रक्तोत्पलमिव शोभत इति रक्तकुवलयशोभी तेन । स्यादुत्पलं कुवलयमित्यमरः । अग्रहस्तेन हस्ताग्रेण पाणिनेत्यर्थः । आवार्य्य आच्छाद्य । चकितचकिता भीतभीता । अतिभीतेत्यर्थः । चकितः शङ्कितो भीत इति त्रिकाण्डशेषः ॥

(१३७) सावधानमिति । समनोभिनिवेशमित्यर्थः । आइत्यादि । आ ही ही भो एष दास्याः पुत्रः कुसुमरसपाटच्चरो दुष्टमधुकरस्तत्रभवत्या वदनकमलमभिलषति । आः कोपे पीड़ायां च । हीहीति विस्मये हासे वा । हीहीशब्दो विस्मयहासयोरिति मेदिनी । दास्याःपुत्रो नीचः । कुसुमरसस्य पाटच्चरश्चौरः ॥

राजा ॥ ननु वार्य्यतामेष धृष्टः । (१३८)

विदू ॥ भो तुमं ज्जेव अविणीदाणं सासिदा इमस्स वारणे पहवसि । (१३९)

राजा ॥ युज्यते । अयि भोः कुसुमलताप्रियातिथे किमत्र परिपतनखेदमनुभवसि । (१४०)

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वां विना पिबति ॥ (१४१)

मिश्र ॥ अदिअत्थं क्खु वारिदो । (१४२)

विदू ॥ भो पडिसिद्धवामा क्खु एषा जादी । (१४३)

---

(१३८)। राजेति। वार्य्यता निवार्य्यताम् धृष्टो निर्लज्ज. ॥

(१३९) विदू इति। भोइत्यादि। भो त्वमेव अविनीतानां शासिता अस्य वारणे प्रभवसि। अविनीतानां दुराचारिणाम्। प्रभवसि प्रभुर्भवसि ॥

(१४०) राजेति। युज्यते तदेव युक्तम्। अयिरनुनये। अयि मन्नाहनयोस्तथा सम्बोधनेमिचेति मेदिनी। कुसुमेति। कुसुमयुक्ता लता कुसुमलतास्तासां प्रियातिथे प्रीतिवर्द्धनातिथिभूत। किं कथम्। परिपतनखेदं उड्डीयोपवेशनदुःखम्। नेयं कुसुमलतेति भाव. ॥

(१४१) प्रथम म्परिपतनव्यर्थतां प्रदर्श्य पतनार्हां भूमिं विलोभनया प्रदर्शयति एषेति। कुसुमे पुष्पे निषण्णा स्थिता सती पतिव्रता अतएवानुरक्ता सानुरागा एषा मधुकरी तृषितापि मकरन्दं पिपासुरपि भवन्तं प्रतिपालयति प्रतीक्षते खलु यस्मात् त्वां विना मधु पुष्परसं न पिबति। मधु चौद्रे जले चीरे मद्ये पुष्परसे इति विश्व । इयमार्य्या ॥

(१४२) मिश्रेति। अदीत्यादि। अत्यर्थं खलु वारित । पर्य्याप्तं वारित इत्यर्थ ॥

(१४३) विदू इति। भो इत्यादि। भो प्रतिषिद्धवामा खल्वेषा जाति । प्रतिषिद्धा निषिद्धा वासौ वामा प्रतिकूला चेति प्रतिषिद्धवामा। निषिद्धा सती निषेधप्रतिकूलाचारिणीत्यर्थ । वामो वल्गुप्रतिपयोरित्यमर.। किम्वा प्रतिषिद्धेन प्रतिषेधेन वामा भावे क्त.। एषा जातिर्मधुकरजाति. ॥

राजा ॥ सकोपम् ॥ भो न मे शासने तिष्ठसि श्रूयतां तर्हि सम्प्रति हि । (१४४)

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं दशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ (१४५)

विदू ॥ भो एव्वं तिक्खदण्डस्स दे कधं ण भाइस्सदि । (१४६)

विहस्यात्मगतम् ॥ एसो दाव उम्मत्तो अहम्मि एदस्स सङ्गेण ईदिसो ज्जेव संवुत्तो । (१४७)

राजा ॥ निवार्य्यमाणोऽपि कथं स्थित एव । (१४८)

---

(१४४) राजेति । शासने आदेशे । तिष्ठसि वर्त्तसे । सम्प्रति हि सम्प्रत्येव । हि हेताववधारणे इत्यमरः ॥

(१४५) अक्लिष्टेति । बालो अचिरोद्गतश्चासौ तरुपल्लवश्चेति सः । अक्लिष्टो अम्लानो यो बालतरुपल्लवस्तमिव लोभनीयम् अतिसुकुमारमिति यावत् अतएव मया रतोत्सवेषु निधुवनोत्सवेषु सदयमेव नतु दृढमिति भावः । पीतं चुम्बितं प्रियायाः शकुन्तलाया बिम्बाधरं पक्वबिम्बिकाफलवदधरं भ्रमर त्वं चेद्दशसि तदा बध्यतेऽस्मिन्निति बन्धनं कारागृहं कमलस्य उदरमभ्यन्तरमेव बन्धनं तत्र तिष्ठतीति स तथा भूतं कारयामि । कश्चित्तु कमलोदरस्यैव बन्धनं कमलोदरबन्धनं तेन तिष्ठतीति स तं पुटकनिक्षिप्तमिति यावदिति व्याचष्टे तन्न उत्तरत्र विदूषकवचसोऽसङ्गतेर्दुष्परिहरत्वात् । वसन्ततिलकं नाम वृत्तम् ॥

(१४६) विदू इति । भो इत्यादि । भो एवं तीक्ष्णदण्डस्य ते कथं न भेष्यति तीक्ष्णोऽतिदुःसहो दण्डो यस्य स तस्य । ते तव सम्बन्धे ॥

(१४७) विहस्येति । एसो इत्यादि । एष तावदुन्मत्तः अहमप्येतस्य सङ्गेन ईदृश एव संवृत्तः । एष राजा । सङ्गेन सहचारेण । ईदृश उन्मत्त इव ॥

(१४८) राजेति । स्थित एव भ्रमर इति शेषः ॥

राजा ॥ ननु वार्य्यतामेष धृष्टः । (१३८)

विदू ॥ भो तुमं ज्जेव अविणीदाणं सासिदा इमस्स वारणे पहवसि । (१३९)

राजा ॥ युज्यते । अयि भोः कुसुमलताप्रियातिथे किमत्र परिपतनखेदमनुभवसि । (१४०)

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वां विना पिबति ॥ (१४१)

मिश्र ॥ अदिश्चत्थं क्खु वारिदो । (१४२)

विदू ॥ भो पडिसिद्धवामा क्खु एषा जादी । (१४३)

---

(१३८) । राजेति । वार्य्यतां निवार्य्यताम् धृष्टो निर्लज्जः ॥

(१३९) विदू इति । भोइत्यादि । भो त्वमेव अविनीतानां शासिता अस्य वारणे प्रभवसि । अविनीतानां दुराचारिणाम् । प्रभवसि प्रभुर्भवसि ॥

(१४०) राजेति । युज्यते तदेव युक्तम् । अयिरत्नुनये । अयि प्रश्नानुनयोस्तथा सम्बोधनेऽपिचेति मेदिनी । कुसुमेति । कुसुमयुक्ता लता कुसुमलतास्तासां प्रियातिथे प्रीतिवर्द्धनातिथिभूत । किं कथम् । परिपतनखेदं उड्डीयोपवेशनदुःखम् । नेयं कुसुमलतेति भावः ॥

(१४१) प्रथम मरिपतनव्यर्थतां प्रदर्श्य पतनार्हां भूमिं विलोभनया प्रदर्शयति एषेति । कुसुमे पुष्पे निषण्णा स्थिता सती पतिव्रता अतएवानुरक्ता सानुरागा एषा मधुकरी तृषितापि मकरन्दं पिपासुरपि भवन्तं प्रतिपालयति प्रतीक्षते खलु यस्मात् त्वां विना मधु पुष्परसं न पिबति । मधु क्षौद्रे जने क्षीरे मद्ये पुष्परसे इति विश्वः । इत्यमार्य्या ॥

(१४२) मिश्रेति । अदीत्यादि । अत्यर्थं खलु वारित । पर्य्याप्तं वारित इत्यर्थः ॥

(१४३) विदू इति । भो इत्यादि । भो प्रतिषिद्धवामा खल्वेषा जातिः । प्रतिषिद्धा निषिद्धा सा असौ वामा प्रतिकूला चेति प्रतिषिद्धवामा । निषिद्धा सती निषेधप्रतिकूला चारिणीत्यर्थः । वामो वल्गु प्रतिपयोरित्यमरः । किम्वा प्रतिषिद्धेन प्रतिषेधेन वामा भावे क्तः । एषा जातिर्मधुकरजातिः ॥

इति बाष्पं विसृजति ॥ (१५५)

मिश्र ॥ पुव्वापरविरुद्धो अपुव्वो एसो विरहमग्गो । (१५६)

राजा ॥ वयस्य कथमेवमविश्रामं दुःखमनुभवामि । (१५७)

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ (१५८)

मिश्र ॥ सव्वधा पमज्जिदं तुए पच्चादेसदुक्खं पिअसहीए पच्चक्खं ज्जेव सहीजणस्स । (१५९)

---

कान्ता शकुन्तला पुनरपि चित्रीकृता अनुभवप्रमादचित्रमयी स्थिता चित्रमयी कृता । आर्य्येयम् ॥

(१५५) इतीति । बाष्पं नेत्रजलम् ॥

(१५६) मिश्रेति । पुव्वेत्यादि । पूर्व्वापरविरुद्धोऽपूर्व्व एष विरहमार्गः पूर्व्वापरैर्भूतभाविभिर्विरुद्धो विद्विष्टः सेवनाविषय इति यावत् । विरोधो विद्वेष इत्यमरः । अत एव अपूर्व्वोऽभिनवः । एष विरहमार्गो विरहावस्थाप्रकारः । तथाचेदृशप्रकारो न भूतो न भविष्यतीति भावः ॥

(१५७) राजेति । अविश्राममनवरतम् ॥

(१५८) प्रजागरादिति । प्रजागरादतिजागरणात् तस्याः प्रियायाः स्वप्नसमागमः स्वप्नावस्थायां सङ्योगः खिलीभूतः संक्षिप्तीभूतः । प्रायेण न भवतीत्यर्थः । खिलं भवेदप्रहते सारसंक्षिप्तयोरिति विश्वः । बाष्पस्तु नेत्रजलम् पुनरेनां चित्रगतामपि द्रष्टुं न ददाति अवकाशमिति शेषः । तथाच तच्चित्रं कर्म्म स्वपनसमये दर्शनमपीत्युक्तं विरहविनोदनमपास्तमिति भावः ॥

(१५९) मिश्रेति । सव्वधेत्यादि । सर्व्वथा प्रमार्ज्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य । सर्व्वथा । अयम् । सखीजनस्य मम प्रत्यक्षं समक्षमेव प्रियसख्याः शकुन्तलायाः प्रत्यादेशदुःखं प्रत्याख्यानजनितदुःखं त्वया प्रमार्ज्जितं क्षालितम् ॥

मिश्र ॥ अज्जो धीरम्पि जणं रसो विआरेदि । (१४९)

विदू ॥ प्रकाशम् ॥ भो चित्तं क्खु एदं । (१५०)

राजा ॥ कथं चित्रम् । (१५१)

मिश्र ॥ अहम्पि दाणिं अवगदत्था किं उण जधाचिन्तिदाणुसारी एसो । (१५२)

राजा ॥ किमिदमनुष्ठितं पौरोभाग्यम् । (१५३)

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥ (१५४)

---

(१४९) मिश्रेति । अज्जो इत्यादि । अज्जो धीरमपि जनं रसो विकारयति । रसः प्रवासविप्रलम्भाख्य शृङ्गार । विकारयति अन्यथयति । मिश्रकेश्या अपीदानीं भ्रमरे प्राचिकृत्यविरस्येव पतङ्गस्य तत्रापसारणे राज्ञ प्रयासाधिक्यदर्शनात् एतदुक्तम् इति बोध्यम् । अत्राह । विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मत । यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ । स च पूर्व्वरागमानप्रवासकरुणात्मकश्चतुर्धा स्यादिति । तथा । प्रवासो भिन्नदेशत्व कार्य्याच्छापाच्च सम्भ्रमादिति च ॥

(१५०) विदू इति । प्रकाश सुस्पष्टम् । भो इत्यादि । भोश्चित्रं खल्विदम् ।

(१५१) राजेति । सुगमम् ॥

(१५२) मिश्रेति । अहम्पीत्यादि ॥ अहमपीदानीमवगतार्था किं पुनर्यथा चिन्तितानुसार्य्येष । अहमपि इदानीमधुना अवगतो विदितोऽर्थः चित्रितभृङ्गरूप वस्तु यया सा तथोक्ता । अहमपि अधुना भृङ्गस्य चित्रतामवगच्छामि इत प्राक् ममापि ताच्चिकत्वबुद्धिरासीदिति भाव । यथा चिन्तितं अनुसरतीति यथाचिन्तितानुसारी तात्कालिकभृङ्गादिक मनसा यथा चिन्तयति तदनुसारेणानुशायीति स्वभम । एष राजा पुन किं किं वक्तव्य । तदेकान्तचिन्तावशात् तत्तुभ्रमो न वक्तव्यता जनयतीति भाव ।

(१५३) राजेति । पौरोभाग्यं दोषैकदर्शित्वम् । येन कर्म्मणामनुष्ठितेन केवल दोष एव जायते न कश्चित् गुणस्तत्मात्रमियत्वमित्यर्थः । दोषैकदृक् पुरोभागीत्यमर ॥

(१५४) दर्शनेति । तन्मयेन तन्मात्रविषयकेण हृदयेन मनसा साक्षात् प्रत्यक्षत इव दर्शनसुख प्रियाया इति शेष । अनुभवतो मे मम स्मृतिकारिणा परितोषकारिणा त्वया

इति बाष्पं विसृजति ॥ (१५५)

मिश्र ॥ पुव्वापरविरुद्धो अपुव्वो एसो विरहिमग्गो । (१५६)

राजा ॥ वयस्य कथमेवमविश्रामं दुःखमनुभवामि । (१५७)

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।

बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ (१५८)

मिश्र ॥ सव्वधा पमज्जिदं तए पच्चादेसदुक्खं पिअसहीए पच्चक्खं ज्जेव सहीजणस्स । (१५९)

---

कान्ता शकुन्तला पुनरपि विलोकिता अनुभवप्रसादचित्रमयी स्थिता चित्रमयी कृता । आर्य्येयम् ॥

(१५५) इतीति । बाष्पं नेत्रजलम् ॥

(१५६) मिश्रेति । पुव्वेत्यादि । पूर्व्वापरविरुद्धोऽपूर्व्व एष विरहिमार्गः पूर्व्वापरै भूतभाविभिर्विरुद्धो विद्विष्टः सेवनाविषय इति यावत् । विरोधो विद्वेष इत्यमरः । अत-एव अपूर्व्वोऽभिनवः । एष विरहिमार्गो विरहावस्थाचारः । तथाचैतद्याचारो न भूतो न भविष्यतीति भावः ॥

(१५७) राजेति । अविश्राममनारतम् ॥

(१५८) प्रजागरादिति । प्रजागरादतिजागरणात् तस्याः प्रियायाः स्वप्नसमागमः स्वप्नावस्थायां सम्प्रयोगः खिलीभूतः सच्छिद्रीभूतः । प्रायेण न भवतीत्यर्थः । खिल अवद्-प्रकृते सारसच्छिद्रयोरिति विश्वः । बाष्पस्तु नेत्रजलम् एनां चित्रगतामपि द्रष्टुं न ददाति अवकाशमिति शेषः । तथाच ततश्चित्रं कर्म्म स्वपनसमये दर्शनमपीत्युक्तं विरह-विनोदनमपास्तमिति भावः ॥

(१५९) मिश्रेति । सव्वधेत्यादि । सर्व्वथा प्रमार्ज्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य । सर्व्वथा । अपषम् । सखीजनस्य मम प्रत्यक्ष समक्षमेव प्रियसख्याः शकुन्तलायाः प्रत्यादेशदुःखं प्रत्याख्यानजनितदुःखं त्वया प्रमार्ज्जितं क्षालितम् ॥

चतुरिका ॥ प्रविश्य ॥ जेदु जेदु भट्टा वत्तिआकरण्डअं गेह्निअ इदो अहं पत्थिदह्मि । (१६०)

राजा ॥ ततः किम् । (१६१)

चेटी ॥ तं मे हत्थादो पिङ्गलिआवेदिआए देवीए वसुमदीए अहं ज्जेव अज्जउत्तस्स उवणइस्सं त्ति भणिअ सवलक्कारं गहीदं । (१६२)

विदू ॥ तुमं कधं विमुक्का । (१६३)

चेटी ॥ जाव देवीए लदाविडवलग्गं उत्तरीअञ्चलं पिङ्गलिआ मोआवेदि दाव णिव्वुविदो मए अप्पा । (१६४)

---

(१६०) चतुरिकेति। चतुरिका वर्त्तिकानयनाय नियुक्तपूर्व्वा चेटी। जेदु इत्यादि। जयति जयति भर्त्ता वर्त्तिकाकरण्डं गृहीत्वा इतोऽहं प्रस्थितास्मि। वर्त्तिकाकरण्डं वर्त्तिकास्थापनोपयोगिवंशादिकृतपेटकम्। करण्डोवंशादिकृतपेटके मधुकोषके इति शब्दाब्धि॰।

(१६१) राजेति सुगमम् ॥

(१६२) चेटीति। तमित्यादि। तन्मे हस्तात् पिङ्गलिकावेदितया देव्या वसुमत्या अहमेवार्य्यपुत्त्रस्य उपनेष्यामीति भणित्वा सबलात्कारं गृहीतम्। तत्‌वर्त्तिकाकरण्डकम्। पिङ्गलिका अपरा चेटी तया वेदितया चित्रकर्म्मणे वर्त्तिकाकरण्डकं भर्त्तारंनियं नयतीति निवेदितया। गृहीतं हस्तादिति सम्बन्धः ॥

(१६३) विदू इति। तुममित्यादि। त्वं कथं विमुक्ता। विमुक्ता देव्येति-शेष ॥

(१६४) चेटीति। जावेत्यादि। यावद्देव्याः लताविटपलग्नमुत्तरीयाञ्चलं पिङ्गलिका मोचयति तावन्निर्व्वृतो मयात्मा। लताविटपो लताविटपो लताविस्तार। विस्तारो विटपोऽस्त्रियामित्यमर। तत्र लग्नम्। उत्तरीयस्य अर्द्धप्रावरणस्य

राजा ॥ वयस्य उपस्थिता देवी बहुमानगर्व्विता च तद्भवानिमां प्रतिकृतिं रक्षतु । (१६५)

विदू ॥ अत्ताणम्पि किंत्ति ण भणासि । (१६६)

चित्रफलकमादायोत्थाय च ॥ जइ भवं अन्तेउरकूडवागुरादो मुच्चिस्सदि तदो मं मेहच्छण्णप्पासादे सद्दाविस्सदि एदं च तहिं गोवाएमि जहिं पारावदं उज्झिअ अण्णो कोवि ण पेक्खिस्सदि ।

इति द्रुतपदं निष्क्रान्तः ॥ (१६७)

---

अस्खलभन्तम् । क्लीवेऽस्खलस्य पश्चान्न इति शब्दाब्धिः । भिक्षुकिका मोचयतीति द्वयोरेवानवकाशो दर्शितः । निह्नुतोऽपलपितः गोपायितः इति यावत् । निह्नवः पुंसि निकृताविश्वासापलापयोरिति मेदिनी ॥

(१६५) राजेति । बहुमानगर्व्विता बहुमानेनातिसम्मानेन गर्व्विता सदर्पा ।

(१६६) विदू इति । अत्ताणमित्यादि । आत्मानमपि किमिति न भणसि । आत्मानमिति रक्षेति शेषः । तथाचात्मानमपि रक्ष इति किं कथं न भणसीत्यर्थः । देवीसमागतावात्मरक्षापि न सुकरा तत्र युक्तं ममात्मरक्षणमिति भावः ।

(१६७) चित्रेति । जइ इत्यादि । यदि भवानन्तःपुरकूटवागुरातो मोक्ष्यते तदा मां मेघच्छन्नप्रासादे शब्दायिष्यते इदञ्च तत्र गोपायामि यत्र पारावतं उज्झित्वा अन्यः कोपि न प्रेक्षिष्यते । अन्तःपुरं देवी सैव कूटवागुरा यन्त्रमयमृगबन्धनोपायः तस्या मोक्ष्यते स्वयं मुक्तिं गमिष्यति । कर्म्मकर्त्तरि प्रयोगोयम् । कूटं यन्त्रेऽस्त्रे राशावित्ति विश्वः । वागुरा मृगबन्धिनीत्यमरः । एतेन राजनि मृगत्वं व्यङ्ग्यम् । मेघच्छन्नप्रासादे मेघच्छन्नात्स्वदिगन्तलोकनप्रासादे । शब्दायिष्यते आमन्त्रयिष्यते । इदं चित्रफलकं । पारावतमिति तत्र पारावता एवोपविशन्तीति भावः । द्रुतपदं द्रुतं वेगवत् पादविहरणं यत्र तत् तथोक्तम् । क्रियाविशेषणम् ॥

मिश्र॥ अज्जो अस्ससंकन्तहिअओवि पढमसम्भावणं रक्खदि त्थिरसोहिदो दाव एसो। (१६८)

प्रविश्य पत्रहस्ता प्रतीहारी॥ जेदु जेदु देवो। (१६९)

राजा॥ वेत्रवति न खल्वन्तरे त्वया दृष्टा देवी। (१७०)

प्रती॥ देव दिट्ठा पत्तहत्थं मं पेक्खिअ पडिणिउत्ता। (१७१)

राजा॥ कार्य्यज्ञा देवी कार्य्योपरोधं मे परिहरति। (१७२)

प्रती॥ देव अमच्चो विण्णवेदि अज्ज रज्जकज्जस्स बहुलदाए एक्कं ज्जेव मए पोरकज्जं पच्चवेक्खिदं तं देवो पत्तारोविदं पच्चक्खीकरेदु त्ति। (१७३)

---

(१६८) मिश्रेति। अज्जो इत्यादि। आर्य्यो अन्यसंक्रान्तहृदयोपि प्रथमसम्भावनं रक्षति स्थिरसौहृदस्तावदेष। अन्यसंक्रान्तहृदय शकुन्तलाप्रहितमना। प्रथमसम्भावनं प्रथमकृतबहुमानम। स्थिरसौहृद अविचलितप्रेमा॥

(१६९) प्रविश्येति। जेदु इत्यादि। जयति जयति देव॥

(१७०) राजेति। खलु प्रश्ने। अन्तरे पथिमध्ये त्वया किं देवी न दृष्टा॥

(१७१) प्रतीति। देवेत्यादि। देव दृष्टा पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता। मा भवन्तमुपगच्छतीमिति शेष। प्रतिनिवृत्ता प्रतिगता॥

(१७२) राजेति। कार्य्यज्ञा कार्य्यगौरवज्ञा। कार्य्योपरोधं कार्य्यविरोधं। परिहरति न जनयति॥

(१७३) प्रतीति। देवेत्यादि। देव अमात्यो विज्ञापयति अद्य राज्यकार्य्यस्य बहुलतया एकमेव मया पौरकार्य्यं प्रत्यवेक्षितं तद्देव पत्रारोपितं प्रत्यक्षीकरोत्विति। पौरकार्य्यराज्यकार्य्ययोर्नगरप्रान्ताभ्यां विभागेन प्रत्यवेक्षणीयत्वादाह अद्येति। पत्रारोपित लिपिगतम्। प्रत्यक्षीकरोतु अनुभवतु। इति विज्ञापयति॥

राजा ॥ दूतः पत्रं दर्शय। (१७४)

प्रती ॥ उपनयति। (१७५)

राजा ॥ वाचयति ॥ विदितमस्तु देवपादानां धनवृद्धिर्नाम वणिक् वारिपथोपजीवी नौव्यसनेन विपन्नः, स चानपत्यः, तस्य चानेककोटिसङ्ख्यं वसु, तदिदानीं राजस्वतामापद्यते, इति श्रुत्वा देवः प्रमाणमिति। (१७६)

---

(१७४) राजेति सुगमम् ॥

(१७५) प्रतीति। उपनयति पत्रमुपस्थापयति ॥

(१७६) राजेति। वाचयति पठति। तदेवाह विदितमित्यादि। देवपादानामित्यत्र पादशब्दः सम्मानातिरेकं सूचयति। कामुकस्येति वर्त्तमानकालेन कर्त्तरि षष्ठी। वणिक् पण्याजीवः। वाणिजो वणिक्। पण्याजीव इत्यमरः। वारिणि पन्था वारिपथो नदीमार्गः। पथ्यप्र इत्य.। तेन जीवति वाणिज्येन वर्त्तत इति वारिपथोपजीवी। नौव्यसनेन नावो व्यसनेन विपदा मज्जनेनेति यावत्। व्यसनं विपदि भ्रंशे इत्यमरः। विपन्नो मृतः। न पतति वंशो येन जातेनेत्यपत्यं सकुल्यपर्य्यन्तः। अनपत्यः सकुल्यपर्य्यन्तरहितः। अनेका बह्व्यः कोटयः सङ्ख्या यस्य तदनेककोटिसंख्यम्। वसु धनं अस्तीति शेषः। रिक्थमृक्थं धनं वस्वित्यमरः। तत् धनम्। राजस्वतां राजस्वामिकताम्। आपद्यते आप्नोति यस्मात् अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्। तदभावे सकुल्यः स्यादाचार्य्यः शिष्य एव वा। सर्व्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः। त्रैविद्याः शुचयो दान्ता एवं धर्म्मो न हीयते। अहार्य्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः। इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृप इति मनुवचने श्रुततयाचार्य्यशिष्ययोरसम्भवेन त्रैविद्यब्राह्मणाधिकारस्य ब्राह्मणधनगोचरत्वस्य पारिशेषिकत्वेन तद्धने राज्ञ एवाधिकारः प्रतीयत इति भावः। देवो राजा प्रमाणं कर्त्तव्यतानिश्चयकृत्। प्रमाणं हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृष्वित्यमरः। भवत्विति शेषः। इति देवपादानां विदितमस्त्विति योजना ॥

सविषादम् ॥ कष्टं खल्वनपत्यता, वेत्रवति महाधनतया बहुपत्नीकेनानेन भवितव्यं तदन्विष्यतां यदि काचिदापन्नसत्त्वास्य भार्य्या स्यात् । (१७७)

प्रती ॥ दाणिं ज्जेव साकेदअस्स सेट्ठिणो दुहिदा णिव्वुत्तपुंसवणा तस्स जाआ सुणीअदि । (१७८)

---

(१७७) सविषादमिति । सखेदमित्यर्थः । कष्टं दुःखहेतुः । महाधनतया बहुधनतया । बह्व्यः पत्न्यो यस्य स तेन बहुपत्नीकेन । इतः क इति कः । भवितव्यमिति भावे तव्यः । आपन्नसत्त्वा गर्भिणी । आपन्नसत्त्वा स्याद्गुर्व्विण्यन्तर्वत्नी च गर्भिणीत्यमरः । नन्ववधारितपत्नीकत्वेऽपि नृपः कथं गर्भमन्विष्यति तस्य-त्यैव स्वाधिकारसाधनाया निरसनीयत्वात् । यदाह बृहस्पतिः । यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति । जीवत्यर्द्धशरीरे स्वं कथमन्यः समाप्नुयात् । सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः । अपुत्रस्य प्रमीतस्य पत्नीतद्भागहारिणीति । तथा । तत्सपिण्डा बान्धवा वा ये तस्याः परिपन्थिनः । हिंस्युर्धनानि तान्राजा चौरदण्डेन शासयेदिति । अत्र समाधीयते । राजान्ताधिकारिद्वयायां मनुना पत्न्यधिकारो नाभ्यभावि. अतो बृहस्पत्यादिसम्मतमपि मनुविरुद्धं तदन्तर्भावमनङ्गीकृत्य तात्कालिकं वर्णयति कविः कृतयुगे मन्वनुमतधर्म्मस्यैव धर्म्मसाधनत्वात् यदाह पराशरः । कृते तु मानवो धर्म्मस्त्रेतायां गौतमः स्मृतः । द्वापरे शङ्खलिखितः कलौ पाराशरः स्मृत इति । अतएव मदीयोन्नताधिकारे नारदः । अन्यत्र ब्राह्मणात् किन्तु राजा धर्म्मपरायणः । तत् स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृत इति ॥

(१७८) प्रतीति । दाणिमित्यादि । इदानीमेव साकेतपुरस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना तस्य जाया श्रूयते । इदानीमेव श्रूयत इत्यन्वयः । श्रेष्ठिनः कुलोत्तमशिल्पिनः । कुलिकस्तु कुलश्रेष्ठी श्रेष्ठी कुलश्रेष्ठिनि शिल्पिनामित्यमरः । निवृत्तं समाप्तं पुंसवनं द्वितीयसंस्कारो यस्याः सा निर्वृत्तपुंसवना । पुंसवनसंस्कारस्य गर्भाधानमध्ये पुंसः सवनं अस्मात् पुरेति याज्ञवल्क्येन षष्ठे

राजा ॥ स खलु गर्भः पितृरिक्थमर्हति गत्वैवममात्यं ब्रूहि । (१७९)

प्रती ॥ जं देवो आणवेदि । इति प्रस्थिता । (१८०)

राजा ॥ एहि तावत् । (१८१)

प्रती ॥ प्रतिनिवृत्य ॥ एसाह्मि । (१८२)

राजा ॥ किमनेन सन्ततिरस्ति नास्तीति । (१८३)

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्मन्त इति घुष्यताम् ॥ (१८४)

---

स्यन्दते तत इत्युक्तस्यन्दनमासपूर्व्वत्वेन तृतीयमासकर्त्तव्यतयोपदेशाद्गर्भावस्थितगर्भत्वं दर्शितम् अथवा पुंसवनसंस्कारेण गर्भस्य पुत्रीकरणश्रुतेरिदमुक्तम् ॥

(१७९) राजेति । स खलु स एव । पित्र्यं पितृत आगतं पितुरिदं वा । पितृ यत् । ऋक्थो ये इति ऋतोरेफ । पितोऽनिरयेत्युक्तो गांदाघो वडि । ऋक्थं धनम् । अर्हति अधिकरोति । तथाच गौतम । उत्पत्त्यैवार्थे स्वामित्वाल्लभेतेति ॥

(१८०) प्रतीति । अभिलाादि । यद्देव आज्ञापयति ॥

(१८१) राजेति । एहीति पुनरागमनायादेशोयम् ॥

(१८२) प्रतीति । प्रतिनिवृत्य पुनरेत्य । एसाह्मि एषास्मि ॥

(१८३) राजेति । सन्ततिरस्तिनास्तीत्यनेन किं प्रयोजनमितिशेष । तथाच गर्भोऽस्तिका सन्ततिरस्तीति तस्याः एवास्मिन्नधिकारो न राज्ञ सन्ततेरसद्भावे तु राज एवाधिकार स्यादित्येव प्रचारेणालमिति भाव ॥

(१८४) तत् किं कार्य्यमित्यत आह येनेति । प्रजा जना येन येन स्निग्धेन स्नेहवता । स्निग्ध स्नेहयुते चिक्कणेपि स्यादिति मेदिनी । बन्धुना स्वजनेन पित्रादिनेति यावत् । बन्धुस्वजना समा इत्यमरः । वियुज्यन्ते विरहन्ते पापात् ऋते पापं विना यदि पापं इत्यर्थः । तासां प्रजानां स स बन्धु दुष्मन्त इति घुष्यतां उच्चैरुच्यताम् । घुषिर् इत्नुवौशिपद्दे इति कविकल्पद्रुम । विशब्द

प्रती ॥ एदं णाम घोसइदव्वं । इति निष्क्रम्य पुनः प्रविश्य । (१८५)

देव काले पविट्टं विअ अहिणन्दिदं देवस्स सासणं महाजणेण । (१८६)

राजा ॥ दीर्घमुष्णञ्च निश्वस्य ॥ एवं भोः सन्ततिविच्छेदनिरवलम्बना मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ते ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः । (१८७)

प्रती ॥ पडिहदं अमङ्गलं । (१८८)

---

छन्दैः शब्दः । पुर्म्योर्त्रिरैति विकल्पाच्चञ्चिः । घोष्यतामित्यपि क्वचित्पाठः । एतेनैतदुक्तम्भवति यत् स्थितायामप्यसन्ततावर्थजातमधुना मदायत्तमेव यथान्यः कोपि तन्नापहरेदिति । तथाच मनुः । बालदायादिकं रिक्थं तावद्राजानुपालयेत् । यावत् स स्यात्समावृत्तो यावच्चातीतशैशव इति ॥

(१८५) प्रतीति । एदमित्यादि । एतन्नाम घोषयितव्यम् । नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने इत्यमरः ॥

(१८६) देवेत्यादि । देव काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनं महाजनेन । काले यथाकालम् । प्रवृष्टं वर्षणम् । अभिनन्दितं समादृतम् । शासनमाज्ञा । महाजनेन साधुवर्गेण ॥

(१८७) राजेति । मूलपुरुषस्य धनिनो अवसाने निधने सम्पदोऽर्थाद्याः सन्ततेरपत्यस्य विच्छेदात् अभावात् निरवलम्बना अस्वामिकाः सत्यः परमित्थं यथा धनवृद्धेरपरमासत्सम्पदो राजानमुपस्थापयत्तथा इत्यर्थः । परमन्यमुपतिष्ठन्ते उपगच्छन्ति । अन्ते नाशे । अन्तोनाशेद्वयो र्मृत्युरित्यमरः । पुरुवंशश्रियः पुरुवंशसम्पदः । अथ सम्पदि सम्पत्तिः श्रीश्च लक्ष्मीश्चेत्यमरः । वृत्तान्तः प्रकारः । वृत्तान्तः स्यात् प्रकरणे प्रकारे कार्त्स्न्यवार्त्तयोरित्यमरः ॥

(१८८) प्रतीति । पडिहदं अमङ्गलं प्रतिहतममङ्गलम् । प्रतिहतं भवतु प्राप्तप्रतिघातमस्त्विति शेषः ॥

राजा ॥ धिङ्मामुपनतश्रेयोऽवमानिनम् । (१८९)

मिश्र ॥ असंसअं पिअसहीं ज्जेव हिअए कदुअ निन्दिदो अणेण अप्पा । (१९०)

राजा ॥

संरोपितेऽप्यात्मनि धर्म्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
२६ कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥ (१९१)

मिश्र ॥ अपरिच्चत्ता दाणिं दे भविस्सदि । (१९२)

चेटी ॥ जनान्तिकम् ॥ अज्ज एदं पत्तं पेसअन्तेण किं विआरिदं अमच्चेण पेक्ख दाव भट्टिणो वाहजलप्पवाहो संवुत्तो अधवा ण

---

(१८९) राजेति । उपनतमुपगतं श्रेयो मङ्गलं सशकुन्तलारूपमित्यर्थः । अवमन्यते यस्तं मां धिक् । श्रेयो धर्मो मङ्गलञ्चेति विश्वः ॥

(१९०) मिश्रेति । असंशयमित्यादि । असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा । हृदये कृत्वा अभिसन्धाय स्मृत्वा वा । अनेन राज्ञा ॥

(१९१) राजेति । संरोपितेऽपीति । काले यथाकालमुप्तबीजा कृतबीजवपना अतएव महते विपुलाय फलाय शस्याय कल्पिष्यमाणा भविष्यन्ती वसुन्धरा भूमिरिव कुलस्य प्रतिष्ठा गौरवं स्थितिर्वा यस्यः सा तथोक्ता धर्मपत्नी धर्मतः परिणीता पत्नी आत्मनि स्वस्मिन् संरोपितेऽपि गर्भभावेन तस्यामाहितेऽपि सति । आत्मा वै जायते पुत्त्र इति श्रुतेः । मया नाम त्यक्ता । नाम कुत्सने । अत्रोपमालङ्कारः । वृत्तमुपजातिः ॥

(१९२) मिश्रेति । अपरीत्यादि । अपरित्यक्तेदानीं ते भविष्यति । पुनः संघाते त्वयेति भावः ॥

एसो सोअ बुद्धिपुव्वअं पडिवज्जिस्सदि ता मेहच्छणागारट्ठिदं णिव्वाणसमत्थं अज्जमाहव्वं गेह्णिअ आअच्छ । (१८३)

प्रती ॥ सुट्ठु दे भणिदं । इति निष्क्रान्ता । (१८४)

राजा ॥ अहो दुष्मन्तस्य संशयमारूढाः पिण्डभाजः । कुतः । (१८५)

अस्मात् परं बत यथाश्रुतिसंश्रितानि
को नः कुले निवपनानि करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुसेकमुदकं पितरः पिबन्ति ॥ (१८६)

---

(१८३) चेटीति । अज्जेत्यादि । आर्य्य एतत् पत्रं प्रेषयता किं विचारितमनात्मन प्रेमस्य तावत् भर्त्तुर्वाष्पजलप्रवाह सद्वृत्त अथवा नैव शोकं बुद्धिपूर्व्वकं परिवर्ज्जयिष्यति तन्मेघच्छन्नागारस्थित निर्व्वापणसमर्थमार्य्यमाधव्य गृहीत्वा आगच्छ । आर्य्ये इति प्रतीहार्य्या आमन्त्रणम् । किं निन्दायाम् । किं कुत्सायां वितर्के चेति मेदिनी । वाष्पजलप्रवाहोऽश्रुप्रवृत्ति । प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिण इति मेदिनी । अथवेति । अथशब्दोऽनन्तरार्थे वाशब्दश्च समुच्चये तथाच अनन्तरमेवेत्यर्थः । बुद्धिपूर्व्वकमात्मविवेचनया । परिवर्ज्जयिष्यति निराकरिष्यति । निर्व्वापणसमर्थं शोकनिर्व्वापणक्षमम् ॥

(१८४) प्रतीति । सुट्ठु इत्यादि । सुष्ठु त्वया भणितम् ॥

(१८५) राजेति । अहो इति शोके विषादे वा । अहोऽधिगर्थे शोके च करुणार्थविषादयोरिति मेदिनी । दुष्मन्तस्य पिण्डं भजन्ते सेवन्ते इति पिण्डभाजः पितरः । डाञ्जति ण्विः । अथवा मेतत्परमयं पिण्डो कथमुते न भवति सन्देहमारूढाः प्राप्ताः । तद्दर्शयति कुत इति ॥

(१८६) अस्मादिति । बत खेदे अस्माद्दुष्मन्तात्परं कोऽस्माकं कुले यथाश्रुति यथाविधि संहितानि अनुसंहितानि निवपनानि पिण्डोदकदानानि । पितृदान

मिश्र ॥ हद्धी हद्धी सदि क्खु दोवे ववधाणदोसेण अन्धआरं अणुहोदि राएसी। (१९७)

चेटी ॥ भट्टा अलं सन्दाविदेण वअत्थो ज्जेव पहू अवरासु देवीसु अणुरूवपुत्तजम्मेण पुव्वपुरुसाणं अणिणो भविस्सदि। (१९८)

आत्मगतम् ॥ ण मे वअणं पडिच्छदि अणुरूवं वि ओसधं आदङ्कं णिवत्तेदि। (१९९)

---

निवाप आदित्यमरः। क करिष्यति इति एवं चिन्तयित्वा पितरो मम पूर्व्वजाः प्रसूतिविकलेन तनयरहितेन। प्रसूति स्तनयोस्तत्योस्तथा दुहितरि स्नुतेति विश्वः। मया प्रषिक्तं त्वकमुदकं तर्पणजलं नूनं निश्चितं धौत आक्षालितोऽश्रुसेको बाष्पबिन्दुर्येन, तत् यथास्यात्तथा पिबन्ति। अधरपतितो नयनविगलिताश्रुबिन्दुर्येनोदकपानेन क्षालितो भवति तादृशं पिबतीत्यर्थः। उदकविशेषणत्वे तथाभूतं कृत्वा पिबतीत्यर्थः। वसन्ततिलकं वृत्तम्॥

(१९७) मिश्रेति। हद्धीत्यादि। हा धिक् हा धिक् सति खलु दोषे व्यवधानदोषेणान्धकारमनुभवति, राजर्षिः। एतेनैतदुक्तम्भवति यत् सत्यप्यात्मजे स्थानान्तरगतत्वेन अनपत्यता मन्यते महाराज इति॥

(१९८) चेटीति। भट्टेत्यादि। भर्त्तरलं सन्तापितेन वयस्य एव प्रभुरपरासु देवीषु अनुरूपपुत्त्रजन्मना पूर्व्वपुरुषाणामनृणो भविष्यति। सन्तापितेन सन्तप्तीकृतेन आत्मनेति शेषः। वयस्योयुवा। वयस्यस्तरुणो युवत्यमरः। प्रभुर्भवानित्यर्थः। अपरासु शकुन्तलेतरासु। देवीषु कृताभिषेकमहिषीषु। अनुरूपपुत्त्रजन्मना आत्मसदृशपुत्त्रोत्पत्त्या। पूर्व्वपुरुषाणां पितॄणाम्। अनृणः ऋणशून्यः। तदाह शङ्खलिखितपठीनसियमाः। यत्र क्वचन जातेन पिता पुत्त्रेण नन्दति। तेन चानृणतां याति पितॄणां पिण्डदेन वै इति। विष्णुधर्म्मोत्तरञ्च। श्राद्धेन प्रजया चैव पितॄणामनृणोऽभवदिति॥

(१९९) आत्मगतमिति। अन्यतिस्रवमित्यर्थः। णेत्यादि। न मे वचनं प्रतीच्छति। अनुरूपमपि औषधमातङ्कं निवर्त्तयति। प्रतीच्छति गृह्णाति।

राजा ॥ मोकनाटितकेन । (२००)

आमूलशुद्धसन्तति कुलमेतत् पौरवं प्रजावन्धेत्र ।
मय्यस्तमितमनार्य्ये देश इव सरस्वतीस्रोतः ॥ (२०१)

इति मोहमुपागत. ॥ (२०२)

---

अपिरत्र सम्भावनायाम् । तथाच सम्भावयामि अनुरूपमुपयुक्तमौषधमातङ्कं रोगं निरस्त्येयति निवारयतीत्यर्थं । रुक्तापशङ्कास्वातङ्क इत्यमरः । अत्रायमाशयः । अयोग्यतया मद्वचनं न प्रतीष्टं माधव्यवचनन्तु मत्तेय्यं प्रयुक्तं सम्भावयामि तत्खलुवेन सन्तापं शमयितु मलमिति ॥

(२००) राजेति । मोकनाटितकेन मोकरूपतया ॥

(२०१) आमूलेति । प्रजावन्धेत्र सन्ततिरहिते देशपचे जनशून्ये पर्व्वतारण्यादिमात्रे इति यावत् । प्रजा स्यात्सन्ततो जने इत्यमर । अतएव अनार्य्ये अप्रशस्ते पचे अगम्ये । अहिंगत्यामित्यस्य रूपम् । मयि आमूलमादित शुद्धा अविच्छिन्ना सन्तति पुत्र-पौत्रादिपरम्परा पचे धारा यस्य तत् । सन्तति पङ्क्तौ गोत्रे पारम्पर्य्ये पुत्रपौत्राणामिति मेदिनी । पौरवं पुरुसम्बन्धि पचे भूयिष्ठमेव । प्रभूतं पुरुभूयिष्ठमित्यमरः । स्वार्थे ष्णः । एतत्कुलं तथाभूते देशे तथाभूतं सरस्वत्या नद्या स्रोत इव अस्तमदर्शन मितं गतम् । अस्तमदर्शन इत्यमर. । अत्रालङ्कार उपमा सा च पूर्णा श्रौती च । तदुक्तं दर्पणे । साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयो. । सा पूर्णा यदि सामान्यधर्मो औपम्य-वाचि च । उपमेयश्चोपमानं भवेद्वाच्यमियं पुनः । श्रौती यथेववाशब्दा इवार्थे यत्र वा वतिरिति । आर्य्या जाति. ॥

(२०२) इतीति । मोहं मूर्च्छाम् । मूर्च्छा तु कश्मल मोह इत्यमरः । एतेनोपान्त्य-दशा वर्णिता । चरमदशायास्तु प्रत्युज्जीवनसम्भावनामन्तरेणावर्णनीयत्वाचादतो प्रतिषेधाश्च इतएव विरहवर्णनानिवृत्ति. ।' तदुक्तम् । अनुरागस्तदनु मनस. सङ्कतिभावना च व्यावृत्ति. स्यात्तदनु विषयग्रामतश्चेतसोपि । निद्राच्छेदस्तदनु तनुता निस्त्रपत्वं ततोऽनू-न्मादो मूर्च्छा तदनु मरणं स्युर्दशा प्रक्रमेणेति । अपरञ्च । रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते । जातप्रायन्तु तद्वाच्यं चेतसा काङ्क्षितं तथा । वर्ण्यतेपि यदि प्रत्युज्जीवनं स्याददूरत इति ॥

चेटी ॥ ससम्भ्रमम् ॥ समस्ससदु समस्ससदु भट्टा । (२०३)

मिश्र ॥ किं दाणिं ज्जेव णिव्वुदं करेमि अधवा सुदं मए सउन्तलं समस्सासन्तीए देवजणणीए सुहादो जणभाअस्सुस्सुआओ देवाओ ज्जेव तह अणुचिट्ठिस्सन्ति जह सो भट्टा अचिरेण धम्मपदिणीं तुमं अहिणन्दिस्सदि त्ति ता ण जुत्तं मे एत्थ विलम्बिदुं जाव इमिणा वुत्तन्तेण पिअसहीं सउन्तलं समस्सासेमि । इत्युद्भ्रान्तकेन निष्क्रान्ता । (२०४)

नेपथ्ये ॥ भो अव्वह्मण्णं अव्वह्मण्णं (२०५)

राजा ॥ प्रत्यागतचेतनः कर्णं दत्त्वा ॥ अये माधव्यस्येवार्त्तनादः । (२०६)

चेटी ॥ सो णाम माधव्वो तवस्सी पिङ्गलिआमिस्सिआहिं चेडिआहिं चित्तफलअहत्थो पाविदो भवे । (२०७)

---

(२०३) चेटीति । ससम्भ्रम सत्वरम् । समेत्यादि । समाश्वसितु समाश्वसितु भर्त्ता ॥

(२०४) मिश्रेति । किमित्यादि । किमिदानीमेव निर्वृतं करोमि अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या देवजनन्या सुखात् यज्ञभागसमुत्सुका देवा एव तथा अनुष्ठास्यन्ति यथा स भर्त्ता अचिरेण धर्मपत्नीं त्वामभिनन्दिष्यतीति तन्न युक्तं मे अत्र विलम्बितुं यावदनेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि । निर्वृतं सुस्थम् । करोमि शकुन्तलावृत्तान्तनिवेदनेनेति शेषः । देवजनन्या अदिते । यज्ञभागाय समुत्सुकाः समुत्कण्ठिताः । एतेन सत्यराजके भूमण्डले अभोग्ययज्ञभागलोपादेवानां तदनुष्ठानसम्भावना दर्शयति । अभिनन्दिष्यति आदरिष्यते । अनेन यावद्वृत्तान्... न्तेय । उद्भ्रान्तकेन आकाशपथोद्गमनाभिनयेन ॥

(२०५) नेपथ्य इति । भो इत्यादि । भो अब्रह्मण्यमब्रह्मण्यम् । अवध्यवध-मित्यर्थः । अब्रह्मण्यमवध्योक्तावित्यमरः ॥

(२०६) राजेति । प्रत्यागतचेतन पुनरागतचेतन विगतमोह इत्यर्थः । अये इति सम्भ्रमे । आर्त्तनाद आपद्रवः ॥

(२०७) चेटीति । सोऽत्यादि । स नाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभि-

राजा ॥ चतुरिके गच्छ मद्वचनादनिषिद्धपरिजना देवीमुपालभस्व । (२०८)

चेटी ॥ निष्क्रान्ता । (२०९)

नेपथ्ये ॥ भूयः स एव शब्दः । (२१०)

राजा ॥ परमार्थतो भीतिभिन्नस्वरो ब्राह्मणः । कः कोऽत्र भोः । (२११)

प्रविश्य कञ्चुकी ॥ आज्ञापयतु देवः । (२१२)

राजा ॥ निरूप्यतां किमेवं माधव्यब्राह्मणः क्रन्दतीति । (२१३)

कञ्चु ॥ यावदवलोकयामि । इति निष्क्रम्य ससम्भ्रमं पुनः प्रविष्टः । (२१४)

राजा ॥ पार्व्वतायन न खलु किञ्चिदत्याहितम् । (२१५)

---

चेटिकाभिश्चित्रफलकहस्तः प्राप्तो भवतु । नाम सम्भावनायाम् । तपस्वी अनुकम्प्यः । पिङ्गलिकामिश्रिताभिः पिङ्गलिकामिलिताभिः ॥

(२०८) राजेति । मद्वचनात् राजा वक्तीत्युक्त्वा । अनिषिद्धा चित्रपीडनरूपादकार्य्यकरणादनिवारिता परिजना यया सा तथोक्ता देवीमुपालभस्व क एष ते आचार इति दुर्व्वाक्यं वद । दुर्व्वादं स्यादुपालम्भस्तत्र च स्तुतिपूर्व्वकः । सोल्लुण्ठनं सनिन्दस्तु वस्तुतः परिभाषणमिति जटाधरः ॥

(२०९) चेटीति । सुगमम् ॥

(२१०) नेपथ्य इति । भूयः पुनः स एव शब्दः अब्रह्मण्यमब्रह्मण्यमितिशब्दः ॥

(२११) राजेति । परमार्थतो वस्तुतः । भीतिभिन्नः भीत्या पृथग्विधः स्वरो यस्य स तथोक्तः । ब्राह्मणो माधव्यः । भोः अत्र कः कः अस्तीति शेषः ॥

(२१२) प्रविश्येति । सुगमम् ॥

(२१३) राजेति । निरूप्यतां निर्णीयताम् । किं कथम् । एवं क्रन्दतीति सम्बन्धः ॥

(२१४) कञ्चु इति । यावत् यद्यवधि ॥

(२१५) राजेति । खलु प्रश्ने । अत्याहितं महाभयम् । अत्याहितं महाभीतिरित्यमरः ॥

कञ्चु ॥ नैवम् । (२१६)

राजा ॥ ततः कुतोऽयं वेपथु । तथाहि (२१७)

प्रागेव जरसा कम्पः सविशेषस्तु सम्प्रति ।

आविष्करोति सर्व्वाङ्गमश्वत्थमिव मारुतः ॥ (२१८)

कञ्चु ॥ परित्रायतां सुहृदं महाराजः । (२१९)

राजा ॥ कस्मात् परित्रातव्यः । (२२०)

कञ्चु ॥ महतः कष्टात् । (२२१)

राजा ॥ अये भिन्नार्थमभिधीयताम् । (२२२)

कञ्चु ॥ योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो नाम । (२२३)

---

(२१६) कञ्चु इति । नैवं न किञ्चिन्महद्भयमित्यर्थं ॥

(२१७) राजेति । ततो महाभीत्यभावात् । अय सातिशय । वेपथ कम्प । तथा दर्शयितुमाह तथाहीति ॥

(२१८) प्रागिति । जरसा वार्द्धक्येन । जरस जरेति जरायब्दस्य जरसादेश । प्रागेव इत पूर्व्वमेव कम्पोऽश्वयवसन्दो जात इतिशेष । सम्प्रति अधुना तु सविशेष सातिशय सन् मारुत प्रबलो वायुरश्वत्थं महावृक्षमिव सर्व्वाङ्गमाविष्करोति प्रकाशते अश्वत्थमिति सर्व्वाङ्गमितिच देशाध्वकालभाव वाढेरित्यधिकरणस्य कर्मत्व मारुतोऽश्वत्थ इव कम्प. सर्व्वस्मिन्नङ्गे प्रकाशत इत्यथ । कर्म्माविवक्षया धातोर्व्यापारपरत्वानङ्गीकारे चाकर्म्मकत्वात् । यथोक्तं किञ्चित्निर्व्विक्लेदना च प्रचेरयं करोतेच निष्पत्तिनिष्पादनाच आदो तत्तुल्य पचतीत्यादीति । अतएवोक्तम् । धातोरर्थान्तरे वृत्तेधात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षात कर्म्मणोऽकर्म्मिकाः क्रिया इति । अत्रोपमालङ्कार ॥

(२१९) कञ्चु इति । परित्रायतां परिरक्षतु । सुहृद माधव्यम् ॥

(२२०) राजेति । सुगमम् ॥

(२२१) कञ्चु इति । कष्टात् कष्टात् । सात्कष्टं लच्छमाभीतमित्यमरः ॥

(२२२) राजेति । भिन्नार्थं स्पष्टार्थम् । क्रियाविशेषणम् ॥

(२२३) कञ्चु इति । दिगवलोकनाय प्रासादो दिगवलोकनप्रासादः ॥

राजा॥ किन्तत। (२२४)

कञ्चु॥

तस्याग्रभागाद्गृहनीलकण्ठै-
रनेकविश्रामविलङ्घ्यशृङ्गात्।
सखा प्रकाशेतरमूर्त्तिना ते
केनापि सत्त्वेन निगृह्य नीतः॥ (२२५)

राजा॥ सहसोत्थाय॥ आः ममापि सत्त्वैरभिभूयन्ते गृहाः।
अथवा बहुप्रत्यवायं भूपत्वम्। (२२६)

अहन्यहन्यात्मन एव तावत्
ज्ञातुं प्रमादस्खलितं न शक्यम्।
प्रजासु कः केन पथा प्रयातो-
त्यशेषतः कस्य पुनः प्रभुत्वम्॥ (२२७)

---

(२२४) राजेति। तस्य किं कि वृत्तम्॥

(२२५) कञ्चुकीति। तस्येति। गृहनीलकण्ठैः पालितमयूरैः। मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुगित्यमरः। अनेकविश्रामैरुत्तरोत्तरभागेषु अनेकशो विश्रामैः विलङ्घ्यमासाद्यं शृङ्गं शिखरं यस्य तस्मात् अत्युच्चादिति यावत्। शृङ्गं प्रभुत्वे शिखरे इति मेदिनी। तस्य मेघच्छायागारस्याग्रभागात् अपर्यंखिन्दात् प्रकाशेतरमूर्त्तिना विद्याविशेषप्रच्छन्नाकृतिना केनापि सत्त्वेन पिशाचादिना। सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोरिति विश्वः। तव सखा माधव्यो निगृह्य पराभूय नीतः स्थानान्तरं प्रापितः। वृत्तमुपजातिर्नाम॥

(२२६) राजेति। आः कोपे। ममापि सततसदनुष्ठानपरस्यापि। अभिभूयन्ते आक्रम्यन्ते। गृहा इति पुंलिङ्गबहुवचनान्ता। गृहाः पुंसि च भूम्न्येवेत्यमरः। बहवः प्रत्यवाया विहितानुष्ठानजनितादृष्टविशेषा यस्य स तत् बहुप्रत्यवायम्॥

(२२७) अहनीति। अहन्यहनि प्रत्यहमात्मन एव प्रमादेनानवधानतया स्खलितं विध्यतिक्रमस्तावत् ज्ञातुं निर्णेतुं न शक्यं प्रजासु विषयवासिजनेषु पुनः को जनः केन

नेपथ्ये ॥ अविधावेहि भो अविधावेहि । (२२८)

राजा ॥ आकर्ण्य गतिभेदं रूपयन् ॥ सखे न भेतव्यं न भेतव्यम् ।(२२९)

नेपथ्ये ॥ भो कधं ण भाइस्सं एसो मं कोवि पच्चामोडिअ सिरोधरं इक्खुं विअ भग्गत्थिं करिदुमिच्छदि । (२३०)

राजा ॥ सदृष्टिक्षेपम् ॥ धनुर्धनुः । (२३१)

प्रविश्य धनुर्हस्ता प्रतीहारी ॥ जअदु जअदु भट्टा एदं ससरं सरासणं हत्थावारवोअ । (२३२)

राजा ॥ सशर धनुराधत्ते । (२३३)

---

यया वर्त्मना प्रयासि गच्छसि क्व किमाचरसीत्यर्थं । अशेषत साकल्येन इति यावत् निरूपयितुं कस्य प्रभुत्व शक्ति कस्यापि नेत्यर्थं । तथाच प्रजाकृतादधर्म्मैवाचरणादनृपस्याधर्मभागित्वम् । यथाह मनु । सर्व्वतो धर्म्मषड्भागो राज्ञो भवति रक्षत । अधर्म्मादपि षड्भागो भवत्यस्य ह्यरक्षतइति । वृत्तमुपजाति ॥

(२२८) नेपथ्य इति । अवीत्यादि । अभिधाव भो अभिधाव । अभिधाव मन्मोरभिमुखं धाव ॥

(२२९) राजेति । गतिभेदं धावनम् ॥

(२३०) नेपथ्य इति । भो इत्यादि । भोः कथ न भेष्यामि एष मा कोपि प्रत्यामोट्य शिरोधरामिक्षुमिव भग्नास्थि कर्त्तुमिच्छति । एष कोपि अनिर्णीत । शिरोधरां ग्रीवां प्रत्यामोट्य पश्चाद्भ्रमयित्वा इक्षुमिव मा भग्नास्थि खण्डित कर्त्तुमिच्छति । ग्रीवायां शिरोधि कन्धरेत्यपीत्यमर ॥

(२३१) राजेति । सदृष्टिक्षेपं धनुरर्थं दृष्टि निक्षिप्य । धनुर्धनु त्वरया धनुरानयेत्यर्थं ॥

(२३२) प्रविश्येति । जअदु इत्यादि । जयति जयति भर्त्ता एतत्सशर शरासनं हस्तावारकच । हस्त आघातात् वारयति ज्याघर्षणात्त्रायत इति हस्तावारक ॥

(२३३) राजेति । सुगमम् ॥

नेपथ्ये ॥

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्।
आर्त्तानां भयमपनेतुमात्तधन्वा
दुष्मन्तस्तव शरणं भवत्विदानीम् ॥ (२३४)

राजा ॥ सक्रोधम् ॥ कथं मामेवोद्दिशति। आः तिष्ठ तिष्ठ कौणपापसद त्वमिदानीं न भवसि। (२३५)

चापमारोप्य ॥ प्रासादवातायन सोपानमार्गमादेशय। (२३६)

कञ्चु ॥ इतो इतो देवः। (२३७)

सर्वे सत्वरमुपसर्पन्ति। (२३८)

---

(२३४) नेपथ्य इति। एष इति। अभिनवमधुनैव निःसारितं कण्ठशोणितं कण्ठरुधिरमर्थयतीति तथोक्त एषोऽहं शार्दूलो व्याघ्रः पशुमिव चेष्टमानं पलायितुं यतमानं त्वां हन्मि। शार्दूलद्वीपिनौ व्याघ्रे इत्यमरः। आर्त्तानामापन्नानां भयमपनेतुं निराकर्त्तुं आत्तं गृहीतं धनुर्धन्वा येन स दुष्मन्त इदानीं तव शरणं रक्षिता भवतु। धनु पक्षेपि, धनुषोऽनङ् प्रायोशात् नाम्नीति वक्तव्यात् ङनु। धनुश्चापो धन्वशरासनकोदण्डकार्मुकमित्यमरः। प्रहर्षिणी नाम वृत्तमेतत्। तदुक्तम्। आद्यस्त्वेत्तियमथाष्टमं नवान्त्यं चोपान्त्यं गुरुविरतौ सुभाषिते स्यात्। विश्रामो भवति महेशनेत्रदिग्भिर्विप्रेया नतु सदति प्रहर्षिणी सेति ॥

मात॥ आयुष्मन्। (२४५)

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम्।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः॥ (२४६)

राजा॥ ससम्भ्रममस्त्रमुपसंहरन्॥ अये मातलिः स्वागतं देवराजसारथेः। (२४७)

विदू॥ भो मणस्सि इमिणा अहं पसुमारअं मारिदुं पाविदो भवं उण इमं साअदेण अहिणन्ददि। (२४८)

मात॥ सस्मितम्॥ आयुष्मन् श्रूयतां यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः। (२४९)

---

(२४५) मात इति। आयुष्मन् आयुः प्रशस्तिमन्॥

(२४६) कृता इति। हरिणा इन्द्रेण। यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिष्वित्यमरः। असुरास्तव शरव्यं शरमोक्षलक्ष्यं कृताः। लक्ष्यं लक्षं शरव्यञ्चेत्यमरः। एकेनैव शरपातेन निखिलानामसुराणां विनाशं प्रतिपादयितुं शरव्यमित्येकत्वं कृतं क्लीवत्वञ्च नियतत्वात् तत्र एको लक्ष्य पञ्चनौका भवसीतिवत् कृता इति बहुत्वम्। यथोक्तम्। प्रकृतेर्विकृतेश्चापि यत्रोक्तत्वं द्वयोरपि। वाचकं प्रकृतेस्तत्र व्यक्तानि विकृतेर्नवेति। इदं शरासनं धनुस्तेष्वसुरेषु विकृष्यतामाकृष्यतां न मयीति भावः। यतः सुहृज्जने मित्रजने सतां प्रधानपुरुषाणां प्रसादेन प्रसन्नतया सौम्यानि सुन्दराणि। सौम्यन्तु सुन्दरे सोमदैवत इत्यमरः। चक्षूंषि पतन्ति दारुणा भीषणाः शराः न पतन्ति। अर्थान्तरन्यासोऽलङ्कारः। वंशस्थविलं वृत्तम्॥

राजा ॥ अवहितोऽस्मि । (२५०)

मात ॥ अस्ति कालनेमिप्रसूतिर्दुर्ज्जयो नाम दानवगणः । (२५१)

राजा ॥ अस्ति श्रुतपूर्व्वो मया नारदात् (२५२)

मात ॥

सख्युस्ते स किल शतक्रतोरवध्य-
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ (२५३)

स भवानात्तशस्त्र एवेदानीं देवरथमारुह्य विजयाय प्रतिष्ठ-ताम् । (२५४)

---

(२५०) राजेति । अवहितः कृतावधानः ॥

(२५१) मातेति । कालनेमेरसुरविशेषस्य प्रसूतिः सन्ततिः । दुःखेन जीयत इति दुर्ज्जयः । ईषद्दुःसुष्विति खल् ॥

(२५२) राजेति । श्रुतं श्रवणमभूत् पूर्व्वमितःप्राक् यस्य स श्रुतपूर्व्वः । श्रुतमिति भावेऽतीते क्तः । एकदोभयप्राप्तौ कर्म्मण्येव न कर्त्तरीति नियमात् मयेति मत्कर्म्मण्येव षष्ठी न भवेति कर्त्तरि ॥

(२५३) मातेति । सख्युरिति । स किल दानवगणस्ते तव सख्युर्मित्रस्य शतं क्रतवोऽश्वमेधा यस्य स तस्य इन्द्रस्य । ऐन्द्रपदकामः शताश्वमेधेन यजेतेति श्रुतेः । अवध्यो वधानर्हः रणशिरसि समरमूर्द्धनि तस्य दानवगणस्य त्वं निहन्ता स्मृतः हन्तृतया स्मृतस्तव सर्व्वेति भेदः । तथाहि सप्त सप्तयोऽश्वा यस्य स सप्तसप्तिः सप्ताश्ववाहनः सूर्य्य इति यावत् । वाजिवाहार्व्वगन्धर्व्वहयसैन्धवसप्तयः इत्यमरः । नैशं निशासम्बन्धि यत् तिमिरमुच्छेत्तुं न प्रभवति न शक्नोति । चन्द्रस्तदपाकरोति निराकरोति । अत्र दृष्टान्तोऽलङ्कारः । प्रह-र्षिणी नाम वृत्तम् ॥

(२५४) स इति । स भवान् यस्मात् स्मृतो भवान् । आत्तशस्त्रः गृहीतास्त्रः । देवरथं व्योमयानम् । प्रतिष्ठतां गच्छतु । प्रतिष्ठानिर्णयप्रकाशे संमध्यमाद्यस्य इत्यात्मनेपदम् ॥

*राजा ॥* अनुगृहीतोऽस्मि अनया मघवतः सम्भावनया । अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् । (२५५)

*मात ॥ स्मितम् ॥* तदपि कथ्यते किञ्चिन्निमित्तादपि मनःसन्तापादायुष्मान् मया विक्लवो दृष्टः पश्चात् कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः (२५६)

ज्वलति चलितेन्धनोऽग्नि विप्रकृतः पन्नगः फणां कुरुते ।
तेजस्वी संक्षोभात्प्रायः प्रतिपद्यते तेजः ॥ (२५७)

*राजा ॥* युक्तमनुष्ठितं भवद्भिः । (२५८)

*विदूषकं प्रति ॥* वयस्य अनतिक्रमणीया दिवस्पतेराज्ञा तद्गच्छ परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि । (२५९)

---

(२५५) राजेति । सम्भावनया बहुमानेन । अथः प्रश्ने । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ इत्यमरः । किं कथम् । प्रयुक्तं कृतम् ॥

(२५६) मातेति । कथ्यते मयेति शेषः । किञ्चित् किमपि निमित्तं हेतुर्यस्य स तस्मात् मनःसन्तापात् मनस्तापात् । विक्लवः अस्वभावस्थः । तथा कृतवान् माधव्यमतीति शेषः ॥

(२५७) ज्वलतीति । चलितानि स्पन्दितानि इन्धनानि इध्मानि यस्य सः । इन्धनं त्वेध इध्ममेधः समित् स्त्रियामित्यमरः । चलितेति चलजगतौ मित्त्वे इति कविकल्पद्रुमोक्तस्य णिजन्तस्य रूपम् । मित्त्वात् ह्रस्वः । अग्निर्ज्वलति निर्व्वाणप्रायोऽपीति शेषः । विप्रकृतस्ताडितः सन् पन्नगः सर्पः फणां कुरुते सुप्तोऽपीति शेषः । एवं संक्षोभादुत्तेजनात् तेजस्वी पुमान् प्रायस्तेजः प्रतिपद्यते प्राप्नोति । अतस्तथाकृतवानस्मीति योगः । तेजस्तु वह्नौ दीप्तिः पन्नगपुरुषयोस्तु प्रभावः । तेजः प्रभावे दीप्तौ चेत्यमरः । अत्र तेजःप्रतिपत्तिरूपैकक्रियायाः पृथक् पृथक् निर्देशात् प्रतिवस्तूपमालङ्कारः यदुक्तं दर्पणे । प्रतिवस्तूपमा तु स्याद्वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति । आर्य्येयम् ॥

(२५८) राजेति । युक्तमुचितम् । अनुष्ठितं कृतम् ॥

(२५९) विदूषकमिति । अनतिक्रमणीया अनवहेलनीया । दिवस्पतेरिन्द्रस्य । परिगतः परिज्ञातोऽर्थो येन स तम् । अमात्यपिशुनमित्यस्य विशेषणम् । अर्थं परिज्ञाप्येत्यर्थः ।

त्वन्मतिः केवला तावत् प्रतिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन् कर्म्मणि व्याप्टतं धनुः ॥ (२६०)

विदू ॥ जं भवं आणवेदि । इति निष्क्रान्तः । (२६१)

मात ॥ आयुष्मान् रथमारोहतु । (२६२)

राजा ॥ तथा करोति । (२६३)

इति निष्क्रान्ताः सर्व्वे । षष्ठोऽङ्कः । (२६४)

---

(२६०) मन्त्रव्यमाश्च त्वदिति । राजमन्त्रिणोर्धनुर्मन्त्रीमयो· प्रजापालकत्वादाह केवला अन्यनिरपेक्षा त्वन्मतिस्तव बुद्धिस्तावत् प्रजाः प्रतिपालयतु अधिज्यं सगुणमिदं मदीयं धनुरन्यस्मिन् कर्म्मणि व्याप्टतमासक्तम् ॥

(२६१) विदू इति । जमित्यादि । यद्भवानाज्ञापयति ॥

(२६२) मातेति । सुगमम् ॥

(२६३) राजेति । सुगमम् ॥

(२६४) इतीति । इति एवं वृत्ते सतीत्यर्थः ॥

इति श्रीकृष्णनाथपञ्चाननकृतायामभिज्ञानशकुन्तलटीकायाम्

प्रबोधिकाख्यायां षष्ठाङ्कविवरणम् ॥

# अभिज्ञानशकुन्तलम् ।

## सप्तमोऽङ्कः ।

ततः प्रविशत्याकाशयानेन रथारूढो राजा मातलिश्च । (१)

राजा ॥ मातले अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये । (२)

मातलिः ॥ सस्मितम् ॥ आयुष्मन्नुभयथाप्यसन्तोषमवगच्छ । कुतः (३)

उपकृत्य हरेस्तथा भवान् लघु सत्कारमवेक्ष्य मन्यते ।
गणयत्यवदानसम्मिता भवतः सोऽपि न सत्क्रियामिमाम् ॥ (४)

---

(१) तत इति । आकाशयानेन आकाशपथेन । रथारूढो व्योमयानारूढः ॥

(२) राजेति । अनुष्ठित॰ पालितो निदेश आज्ञा येन स॰ । प्रेष्यादेशनिदेशाज्ञा नियोगः शासनन्तथेति धनञ्जयः । मघवतो महेन्द्रस्य । सत्क्रियाविशेषात् सम्मानातिशयात् आत्मानमनुपयुक्तं तथाभूतसत्कारानुपयुक्तं समर्थये अवधारयामि ॥

(३) मातलिरिति । उभयत्र नृपति महेन्द्रे च । असन्तोषमपरितोषम् । एकत्र सत्कारानुरूपोपकाराकरणावधारणात् अपरत्र उपकारानुरूपसत्काराकरणावधारणादिति भावः । तदवगमयितुं हेतुमुत्थापयति कुत इति ॥

(४) उपेति । भवान् हरेरिन्द्रस्य तथा अवध्यासुरवधात्मकमतिमहत् उपकृत्य अभीष्टं साधयित्वा सत्कारं महेन्द्रविहितसम्मानमवेक्ष्य आलोक्य लघु अल्पं मन्यते मद्गु-णतमपीति शेषः । स हरिरपि इमामागमनरथावतरणरूपां भवतः सत्क्रियां अवदानस्य

राजा ॥ मातले मा मैवं स खलु मनोरथानामपि दूरवर्त्ती यो विसर्ज्जनावसरे सत्कारः। मम हि दिवौकसां समक्षमर्द्धासनोपवेशितस्य। (५)

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा ॥ (६)

मात ॥ किमिव नायुष्मानमरेश्वरादर्हति। पश्य (७)

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम्।

---

भवत्कृतकर्म्मणः अस्मितां परिमितामनुरूपमस्मिति यावत् न गणयति न मन्यते। अन-दृत्यर्थः। अपदानं कर्म्मवृत्तमित्यमरः। एतद्वृत्तं सुन्दरीनाम। तदुक्तम् अयुजोर्यदि सो जगौ समे भभरावौ यदि सुन्दरी तदेति ॥

- (५) राजेति। विसर्ज्जनस्य अवसरे अवकाशे यः सत्कारः कृत इति शेषः। स खलु सत्कारो मनोरथानामभिलाषाणामपि दूरवर्त्ती अविषयः अनभिलषितपूर्व्व इत्यर्थः। हि यस्मात् दिवौकसां देवानां समक्षं प्रत्यक्षमर्द्धासने आसनार्द्धे उपवेशितस्य मम मन्दारमाला हरिणा पिनद्धेति श्लोकीयेन योगः ॥

(६) अन्तर्गतेति। अन्तिकस्थं समीपस्थं जयन्तं निजतनयम्। जयन्तः पाकशासनिरित्यमरः। अन्तर्गता मनोगता प्रार्थना मालाभिलाषो यस्य स तथाभूतमुद्वीक्ष्य निरीक्ष्य कृतस्मितेन कृतमृदुहास्येन हरिणा मघवता आमृष्टस्य स्पृष्टस्य वक्षो हरिचन्दनस्य उरसि लिप्तस्य सुरलोकसुलभचन्दनविशेषस्य अङ्कश्चिह्नं यस्यां सा तथोक्ता मन्दारमाला मम सम्बन्धे पिनद्धा परिधापिता। हरिचन्दनन्तु दिव्यं हिमं तदिन्द्रवर्ण्णकं मतुर्जे रिति राजनिर्घण्टः। वृत्तमिदमुपजातिर्नाम ॥

(७) मातलेति। अमरेश्वरादिन्द्रात् किमिव कथमायुष्मान् नार्हति नाधिकरोति मन्दारमालामिति शेषः ॥

तव शरैरधुना नतपर्वभिः
पुरुषकेशरिणश्च पुरा नखैः ॥ (८)

राजा ॥ तत्र खलु शतक्रतोरेव महिमा । पश्य (९)

सिध्यन्ति कर्म्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं प्राभविष्यदरुणस्तमसां वधाय
तञ्चेत् सहस्रकिरणो धुरि नाकरिष्यत् ॥ (१०)

---

(८) सखेति । अधुना इदानीं नतानि परिणतानि पर्व्वाणि ग्रन्थयो येषां नखपक्षे तु नतानि कुञ्चितानि पर्व्वाणि अङ्गुलिपर्व्वाणि यैस्ते तथोक्तैः । आविद्धं कुटिलं नतमित्यमरः । तव शरैर्बाणैः । दुर्जयदानवगणदलनादिति भावः । पुरा पूर्व्वस्मिन् पुरुषकेशरिणो नृसिंहस्य नतपर्व्वभिर्नखैश्च । हिरण्यकशिपोर्विदारणादिति भावः । इत्युभयैः कर्त्तृभिः सुखपरस्य सुखपरायणस्य हरेरिन्द्रस्य त्रिदिवं सुरपुरम् उद्धृतमपघारितं दानवरूपं कण्टकं यस्मात् तत् तथाभूतं कृतम् । अत· कथमायुष्मानमरेश्वरेणाभ्यर्चित । इदं द्रुतविलम्बितं नाम वृत्तम् ॥

(९) राजेति । शतक्रतोरिन्द्रस्य । महिमा गौरवम् ॥

(१०) सिध्यन्तीति । नियोज्याः किङ्कराः । नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारका इत्यमरः । महत्सु दुष्करेष्वपि कर्म्मसु यत् सिध्यन्ति । कृतार्था भवन्ति तं ईश्वराणां प्रभूणां सम्भावनाया बहुमानस्य गुणमवेहि अवगच्छ । अरुणः काश्यपिस्तमसां तिमिराणां वधाय नाशाय किं प्राभविष्यत् समर्थोऽभविष्यत् चेत् यदि सहस्रं किरणा यस्य स दिवाकरस्तमरुणं धुरि यानमुखे न अकरिष्यत् । धूः स्त्री क्लीबे यानमुखमित्यमरः । उभयत्र भव्यां सम्भवे यौति धी । अत्र पराद्धगतविशेषार्थेन पूर्व्वार्द्धगतः सामान्योऽर्थः समर्थ्यते तस्मादर्थान्तरन्यासोऽलङ्कारः स चात्र वैधर्म्येण । तदुक्तम् । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति । वसन्ततिलकं वृत्तम् ॥

मातलि ॥ सदृशमन्तवैतत्। (११)

श्लोकमनन्तरमतीत्य ॥ आयुष्मन् इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः। (१२)

विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु।
सञ्चिन्त्य गीतिक्षममर्थबन्धं दिवौकसस्त्वच्चरितं लिखन्ति ॥ (१३)

राजा ॥ मातले असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितोऽयं प्रदेशो मया तत्कतमस्मिन् पथि वर्त्तामहे मरुताम्। (१४)

---

(११) मातलिरिति। एतत् वचनं तव सदृशमुपयुक्तम्। गुरोरेव नम्रीभावौचित्यादिति भावः ॥

(१२) श्लोकमिति। नाकपृष्ठे सुरलोकोपरि प्रतिष्ठितस्य वर्त्तमानस्य। सौभाग्यं समधिकभाग्यवत्त्वम्। स्वर्लोकवासस्य भाग्याधीनत्वादिति भावः। सुन्दरेऽधिकभाग्येऽथ दुर्दिनेतरवासरे तुरीयांशे स्त्रीमतिश्च सुभग इति शब्दार्णवः। आत्मनो यशसः साधुवादस्य। जनोदाहरणं कीर्त्तिं साधुवादं यशो विदुः। वर्णं गुणावलिं ख्यातिमिति धनञ्जयः ॥

(१३) विच्छित्तीति। अमी दिवौकसो देवा गीतौ गाने क्षमा योग्यता यस्य स तं गानार्हं अर्थं बध्नाति धारयतीति अर्थबन्धः पदोच्चयं गीतमिति यावत्। सञ्चिन्त्य रचयित्वा सुरसुन्दरीणां सुरनारीणां विच्छित्तिशेषैरङ्गरागावशिष्टैर्वर्णैः रङ्गैः करणैः। विच्छित्ति रङ्गरागेऽपि हारविच्छेदयोरपीति विश्वः। कल्पलताया अंशुकेषु तदुद्भूतनिवसनेषु त्वच्चरितं तव चरित्रं लिखन्ति। वृत्तमुपजातिः ॥

(१४) राजेति। आत्मप्रशंसामनरयन्नाह मातले इति। असुराणां संप्रहारेषु युद्धेषु उत्सुकेन उद्यन्तेन सता। समप्रहाराभिसम्पातकलिसंस्फोटसंयुगा इत्यमरः। दिवं स्वर्गमधिरोहता आरोहता मया पूर्वेद्युः पूर्वस्मिन्नहनि अयं प्रदेशो न लक्षितो निरीक्षित अतु मरुतां आवहादिसप्तवायूनां कतमस्मिन् कस्मिन् पथि वयं वर्त्तामहे वर्त्तमानाः स्मः। तथाचोक्तम्। आवहः प्रवहश्चैव तथैवानुवहः परः। संवहोविवहश्चैव तदूर्ध्वं स्यात् परावहः। तथा परिवहश्चोर्द्ध्वं वायोर्वै सप्त नेमय इति ॥

मात ॥

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्त्तयति चक्रविभक्तरश्मिः।
तस्य व्यपेतरजसः प्रवहस्य वायो-
र्मार्गो द्वितीयहरिविक्रमपूत एषः॥ (१५)

---

(१५) मातेति। त्रिस्रोतसमिति। यः प्रवहो वायुर्गगनप्रतिष्ठो व्योमस्थाम्। प्रतिष्ठा गौरवे स्थितौ। स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोरिति मेदिनी। त्रिस्रोतसं गङ्गां मन्दाकिनीमिति यावत्। मन्दाकिनी वियद्गङ्गेत्यमरः। वहति धारयति। तथा च वायुपुराणम्। विभज्यमानसलिला। तेजसेनाविलेन सा। मेरोरन्तरकूटेषु निपपात चतुर्ष्वपीति। तैजसेन ज्योतिर्मण्डलेन प्रवहेनेति यावत्। तथा चक्रेण आवर्त्तनेन विभक्ताः सेविता गृहीता इति यावत् रश्मयः प्रग्रहा इव रश्मयः किरणा येन स तथोक्तः सन् ज्योतींषि नक्षत्राणि भचक्रमिति यावत् वर्त्तयति वहति। चक्रस्यावर्त्तनं मतमित्यनेकार्थध्वनिः। ज्योतिः प्रकाशे दृशि तारकासु ज्योतिर्दिनेशानलयोरपि स्यादिति विश्वः। रश्मिपदेनाभिधामूलव्यञ्जनया प्रग्रहाश्चापि बोध्यन्ते। तथा च पश्वादिरज्जुबद्धान् गृहीता ज्योतिषा याद्भ्रिकगतिं व्याहन्ति सुतरामहरहर्ज्योतींषि तस्यावर्त्तनवशात् भूमण्डलं भ्रमन्तीति भावः। चक्रं हि अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते। एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रयेति। किरणप्रग्रहौ रश्मी इत्यमरः। अत्र सूर्यसिद्धान्तः। भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः। पर्य्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रममिति। आक्षिप्तमाकृष्टम्। पर्य्येति भ्रमति। सिद्धान्तशिरोमणौ च। भूमेर्बहिर्द्वादशयोजनानि भूवायुरत्राम्बुदविद्युदाद्यम्। तदूर्ध्वगो यः प्रवहः स नित्यं प्रत्यग्गतिस्तस्य तु मध्यसंस्था। नक्षत्रकक्षा खचरैः समेता यस्मादतस्तेन समाहतोऽयम्। भपञ्जरः खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेनेति। विष्णुपुराणे च। यस्माज्ज्योतींषि वहति प्रवहस्तेन सम्मत इति। व्यपेतानि अपगतानि रजांसि धूलयो यस्मात् स तथोक्तस्य। भूवायोरुपरि वर्त्तमानत्वादिति भावः। रजोऽयं रजसा सार्द्धं स्त्रीपुष्पगुणधूलिष्वित्यजय। तस्य प्रवहस्य तथाम्नोवायोः द्वितीयेन हरेर्वामनस्य विक्रमेण पादनिक्षेपेण पूतः पवित्रः एष मार्गः। तदुक्तं वामनपुराणे। कृत्वा तु रूपं दितिजांश्च हत्वा

राजा ॥ अतः खलु मे सबाह्यान्तःकरणोऽन्तरात्मा प्रसीदति ।(१६)

रथाङ्गमवलोक्य ॥ मन्ये मेघपदवीमवतीर्णाः स्मः । (१७)

मातलिः ॥ आयुष्मन् कथमवगम्यते । (१८)

राजा ॥

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
र्हरिभिरचिरभासा तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ (१९)

---

प्रथमस्य पर्वाणि प्रथमक्रमेण । अहो महोदधेः सहिता महार्णवां जहार रत्नाकरपत्तनै-ष्टुंताम् । ततः घनानां विद्याधिरासं सोमार्कनक्षत्रैरभिमण्डितं नभः । देवो द्वितीयेन जगाम वेगात् क्रमेण देवप्रियलोकमीश्वरः । क्रमस्तृतीयो न यदास्य पूरितस्तदातिकोपा-त्तदुपक्रमस्य । पपात तस्मै भगवांस्त्रिविक्रमो मेरुप्रमाणे न तु विश्वेषेति । वसन्त-तिलकं वृत्तम् ॥

(१६) राजेति । अतो मन्दाकिनीवारिरजःशून्यवायुसम्पर्कात् । करणानीन्द्रि-याणि । बाह्यकरणैश्चक्षुरादिभिरन्तःकरणैर्मनःप्रभृतिभिश्च सहितः सबाह्यान्तःकरणः । मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरमिति वैदान्तिकाः । करणं साधकतमम् क्षेत्रगात्रे-न्द्रियेष्वपीत्यमरः ॥

(१७) रथाङ्गमिति । मन्ये अन्ये । मेघपदवीं मेघानां गमनपथम् । प्रवहादधो-ऽवस्थितमावहापरपर्यायं भूवायुमित्यर्थः । तदाह सिद्धान्तशिरोमणिः । भूमेर्बहिर्द्वादश-योजनानि भूवायुरत्राम्बुदविद्युदाद्याम् । तदूर्ध्वगो यः प्रवहः स नित्यं प्रत्यग्गतिरित्यादि ॥

(१८) मातेति । सुगमम् ॥

(१९) राजेति । अयमिति । शीकरैरम्बुकणैः क्लिन्ना आर्द्रा नेमिश्चक्रान्तभागो यस्य स तथोक्तस्ते तव रथः । आर्द्रं सार्द्रं क्लिन्नं क्लिमितमिति । चक्रं रथाङ्गं तस्यान्तो नेमिः स्त्री स्यात्प्रधिः पुमानिति चामरः । अरविवरेभ्यः चैतरन्ध्रेभ्यो निष्पतद्भिर्निर्गच्छ-द्भिः । अरविवरेभ्य इत्यत्र अरविवरेभ्य इति पाठे तु अराणाम नाभिनेमिवेधिनः सधाकालविकाठादिमव चक्रावयवविशेषास्तेषां मध्यान्तरा ये अवकाशास्तान्यरविवराणि

मात ॥ यथाज्ञापयति । अथकिम् । यथाज्ञापयत्यायुष्मान् । स्वाधिकारभूमौ वर्त्तिष्यते । (२०)

राजा ॥ अधोऽवलोक्य ॥ मातले वेगादवतरणादाश्चर्य्यदर्शनः संलक्ष्यते मनुष्यलोकः । तथाहि (२१)

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः ।
सन्तानं तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ (२२)

---

तेभ्यो निष्पतद्भिर्निर्गच्छद्भिरित्यर्थः । चक्रधीकरितनीरविन्दुलोभादिति भावः । चातकैः तथा अचिरभासां तडितां तेजसा दीप्त्या अनुलिप्तैः सम्पृक्तैश्चरिभिः स्वमालिभिरश्वैः वारीणि गर्भे मध्ये यस्य तत् वारिगर्भं तथाभूतमुदरं येषां ते तेषाम् । गर्भो ना भ्रूणे पनसकण्टके । कुक्षौ सन्धौ बालके च मध्ये गर्भोपितस्थले इति शब्दाब्धिः । घनानां मेघानामुपरि गतं गमनं पिशुनयति सूचयति । पिशुनौ खलसूचकावित्यमरः । इदं शार्दूलविक्रीडितं नाम वृत्तम् ॥

(२०) मातेति । स्वाधिकारभूमौ मर्त्यलोके ॥

(२१) राजेति । अवतरणादधोगमनात् । आश्चर्य्यं दर्शनं यस्य स आश्चर्य्यदर्शनः ॥

(२२) शैलानामिति । उन्मज्जतामुन्नमतां शैलानां गिरीणां शिखरात् शृङ्गात् मेदिनी भूमिरवरोहतीव अवतरतीव । प्राक्शैलानामपि मेदिनीमयत्वमेव आसीदिति भावः । स्कन्धानां मूलाच्छाखावधिभागानामुदयात् दर्शनात्पादपाः द्रुमाः पर्णानां पत्राणामभ्यन्तरेषु मध्येषु लीनतां प्रविष्टतां विजहति त्यजन्ति प्राक्पत्राच्छादितत्वबुद्धिरासीदिति बोध्यम् । तथा तनुभागेषु अविस्तृतभागेषु नष्टस्य दूरतया प्रागनुपलब्धस्य सलिलस्य जलस्य व्यक्त्या क्रमशः सामीप्यात् प्रकाशेन । नागः पलायनेऽपि स्यात्विधनानुपलम्भयोरिति मेदिनी । आपगाः सरितः स्रवन्ती निम्नगापगा इत्यमरः । विद्यादगारमागारमपगामापगामपीति द्विरूपकोषः । सन्तानं संघट्टनं योगमिति यावत् व्रजन्ति प्राप्नुवन्तीव । प्राक्तनुभागेषु सलिलादर्शनात् विच्छिन्नप्राया लक्षिता इति भावः । सन्तानः स्यादभिघने तथा सङ्घट्टनेऽपि चेति विश्वः । तथा उत्क्षिपता उन्नमता

मात । आयुष्मन् साधु दृष्टम् । (२३)

सबहुमानमवलोक्य ॥ अहो उदाररमणीया पृथिवी । (२४)

राजा ॥ मातले कतमोऽयं पूर्व्वापरसमुद्रावगाढ़ः कनकरसनिष्यन्दी सान्ध्य इव मेघः सानुमानालोक्यते । (२५)

मात ॥ आयुष्मन् एष खलु हेमकूटो नाम किंपुरुषपर्व्वतः परं तपस्विनां क्षेत्रम् । (२६)

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति ॥ (२७)

---

येनापि अनेन भुवनं भूयोभो मत्वार्द्धं मत्स्योपमायीयत इव पश्य । उत्प्रेक्षालङ्कारोऽयम् । शार्दूलविक्रीडितं वृत्तम् ।

(२३) मात इति । सुगमम् ॥

(२४) सबहुमानमिति । सादरमित्यर्थः । उदाररमणीया अतिरमणीया ॥

(२५) राजेति । पूर्व्वापरयोः पूर्व्वपश्चिमयोः समुद्रयोरवगाढ़ो मग्नः । अतिदीर्घ इति यावत् । कनकरसं स्वर्णद्रवं निष्यन्दयितुं स्रावयितुं शीलं यस्य सः । गुणे रागे द्रवे रस इत्यमरः । सान्ध्यः सन्ध्याकालीन आरक्ताभ इति यावत् । मेघ इवायं सानुमान् पर्व्वतः कतमः पर्व्वतेषु मध्ये क आख्यायते इत्यर्थः ॥

(२६) मातेति । हेममयाः कूटाः शृङ्गाणि यस्य स हेमकूटनामा । किंपुरुषपर्व्वतः किंपुरुषवर्षपर्व्वतः । परमुत्कृष्टम् । क्षेत्रं स्थानम् । पद्मपुराणम् । दक्षिणे भा[illegible] वर्षमुत्तरे लवणोदधेः । कुमारेव महाभाग तस्य सीमा हिमालयः । ततः किंपुरुषं वर्षं हेमकूटादधःस्थितः । हरिवर्षं ततो ज्ञेयं निषधोऽवधिरुच्यते इति ।

(२७) स्वायम्भुवेति । स्वयमात्मना भवतीति क्विप् । स्वयम्भूर्ब्रह्मा तस्यापत्यमिति स्वायम्भुवः । संज्ञापूर्व्वकत्वेन विधेरनित्यतया नोर्गुण इति अकारस्य न औकारः । सोऽस्मिन्निति उद्देश्यः । तस्मात् ब्रह्मणो मानसपुत्रान्मरीचेर्यः प्रजापतिः प्रजानाथः कश्यपइतियावत् । सुरर्षयो महात्मनः कश्यपस्य प्रजा-

राजा ॥ सादरम् ॥ तेन ह्यनतिक्रमणीयानि श्रेयांसि प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि । (२८)

मातलि ॥ आयुष्मन् प्रथमः कल्पः । (२९)

अवतरणं नाटयन् ॥ एतावतीर्णौ स्वः । (३०)

राजा ॥ सविस्मयम् ॥ मातले । (३१)

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्त्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्धति-
स्तवावतीर्णोऽपि न लक्ष्यते रथः ॥ (३२)

---

पतिरिति पाठम् । स भूर जज्ञे सुरासुराणां देवासुराणां गुरुः पिता सपत्नीकः पत्नीसहितः स प्रजापतिरस्मिन् हेमकूटे तपस्यति तपः करोति । तपस इति कल्यर्थे क्यः । तथाच विष्णुपुराणम् । यदास्य ताः प्रजाः सर्वा नाभ्यवर्द्धन्त धीमतः । अथान्यान् मानसान् पुत्रान् सदृशानात्मनोऽसृजत् । भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा । मरीचिं दक्षमत्रिञ्च वशिष्ठञ्चैव मानसानिति । महाभारतम् । मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः । प्रजज्ञिरे महाभागा दक्षकन्यासदंशेति ॥

(२८) राजेति । अनतिक्रमणीयानि अनवहेलनीयानि । श्रेयांसि मङ्गलानि । प्रदक्षिणीकृत्येति । दक्षिणो दक्षिणभागगतः । सम्मुखपार्श्वाद्दिगमनेऽपि यस्तया भवति स प्रकर्षेण दक्षिणतया प्रदक्षिण उच्यते अतथाभूतं तथाभूतं कृत्वा दक्षिणावर्त्तेन परिवेष्ट्येत्यर्थः । भगवन्तं माहात्म्यवन्तम् ॥

(२९) मातेति । प्रथमः कल्पो मुख्यकल्पः ॥

(३०) अवेति । अवतरणं नम्रतो गमनम् । एतौ आवामिति शेषः ॥

(३१) राजेति । सविस्मयं रथावतरणगुणविशेषज्ञानविस्मयम् ॥

(३२) गुणविशेषं दर्शयति । उपोढेति । नास्ति भूतले भूपृष्ठे स्पर्शो यस्य तथाभूततया रथस्य व्योमगामितयेत्यर्थः । रथाङ्गस्य चक्रस्य नेमयः प्रान्ताः ।

मात ॥ एतावानेव शतमन्योरायुष्मतश्च रथस्य विशेषः । (३३)

राजा ॥ मातले कतमस्मिन् प्रदेशे मारीचाश्रमः । (३४)

मात ॥ हस्तेन दर्शयन् ॥ पश्य । (३५)

वल्मीकार्द्धनिमग्नमूर्त्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ (३६)

---

चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यादित्यमरः । उपोढशब्दा जातशब्दा न तथा प्रवर्त्तमानस्तत्पतद्रजो भूमिस्थं न दृश्यते तद्युक्तमेवमस्तीति भावः । एतत्तु विस्मयकरं यत्तत्र रथोऽवतीर्णोऽधुना जातभूसंयोगोऽपि न लक्ष्यते अवतीर्णतया नानुभूयते यतो निवर्तते वेगेनावतरणादपि सकृद्धूलिरहितः । वंशस्थविलं वृत्तम् ॥

(३३) मातेति । शतमन्यो शतक्रतो । मन्युर्दैन्ये क्रतौ क्रुधीत्यमरः ॥

(३४) राजेति । कतमस्मिन् एषु स्थानेषु कस्मिन् । मरीचेरपत्यं मारीचः । तस्याश्रमो मठः ॥

(३५) मातेति । दर्शयन् आश्रमं निर्दिशन् ॥

(३६) वल्मीकेति । वल्मीके उपदिकाकृतमृत्कूटे अर्द्धनिमग्ना अर्द्धावगाढा मूर्त्तिस्तनुर्यस्य सः । तथा उरगस्य भुजङ्गस्य त्वक् निर्मोकः सैव सूत्रं तदन्तरमपरं यज्ञसूत्रं यद्वा यज्ञसूत्रस्थाने यस्य सः । पवित्रं यज्ञोपवीतं ब्रह्मसूत्रं द्विजायनीति त्रिकाण्डशेषः अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्यात्मसदृशेष्विति मेदिनी । तथा जीर्णस्य परिशुष्कस्य लताप्रतानस्य लताविस्तारस्य वलयेन वेष्टनेन कण्ठे अत्यर्थमतिशयेन सम्पीडितः तथा अंसौ स्कन्धौ व्याप्नोतीति अंसव्यापि । एवं शकुन्तानां पक्षिणां नीडैः कुलायैर्निचितं व्याप्तम् । कुलायो नीडमस्त्रियामित्यमरः । जटानां मण्डलं बिभ्रत् धारयन् तथा स्थाणुः कील इव अचलो निष्पन्दः । स्थाणु कीले

राजा ॥ विलोक्य ॥ नमोऽस्मै कष्टतपसे । (३७)

मात॰ ॥ संयतप्रग्रहं रथं कृत्वा ॥ एतावदितिपरिवर्द्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः । (३८)

राजा ॥ अहो स्वर्गादधिकतरं निर्वृतिस्थानम् अमृतह्रदमिवावगाढोऽस्मि । (३९)

मात॰ ॥ रथं स्थापयित्वा ॥ अवतरत्वायुष्मान् । (४०)

राजा ॥ अवतीर्य ॥ भवान् किमिदानीम् । (४१)

मात॰ ॥ समययन्त्रित एवायमास्ते रथः तद्वयमप्यवतरामः । (४२)

---

हरे पुमानिति मेदिनी । असौ मुनिर्यत्र अर्कबिम्बं रविमण्डलं अभिमुखीकृत्य स्थितस्तिष्ठति तत्र मारीचाश्रम इति शेषः । नीडैरित्यस्मात्पक्षिभिरित्युपादानात् धिक्समयेति द्वितीया । शार्दूलविक्रीडितं वृत्तम् ॥

(३७) राजेति । विलोक्य उक्तं तपस्विविशेषमिति शेषः । कष्टमतिदुःखापन्नं तपो यस्य स तस्मै ॥

(३८) मातलीति । संयतप्रग्रहं बद्धरज्जुकम् । एतावानिति शेषः । अदितीति । अदित्या मारीचवधूधर्म्मिण्या परिवर्द्धितो मन्दारवृक्षो यस्मिन् स तथोक्तम् ॥ प्रजापतेः कश्यपस्य ॥

(३९) राजेति । निर्वृतिस्थानं सुखस्थानम् । निर्वृतिः सुस्थतायां स्यादस्तगमनमोक्षयोरिति विश्वः । अमृतस्य सुधाया ह्रदमगाधजलाशयमवगाढोऽन्तर्निमग्न इवास्मि ॥

(४०) मातलीति । स्थापयित्वा स्थिरीकृत्य ॥

(४१) राजेति । अवतीर्णोऽपि केनचिदनावेदितमार्गो मन्दमन्दम् अनु मातलेरवतरणाभावात् भवानित्यादि । अत्र अवतरिष्यतीति शेषोऽन्वयतः नच अस्मानभूमिरिदं स्पष्टं प्रकटितः ॥

(४२) मातलीति । समयेन सङ्केतविशेषेण यन्त्रितः बद्धोचित एव । यन्त्रितो बद्धोऽत्र इति कल्पद्रुमः । अयं रथ आस्ते तिष्ठति न कदाचित् पदमपि

तथा कृत्वा ॥ दूत । दूत आयुष्मन् दृश्यन्तामत्रभवतामध्युषीया तपोवनभूमयः । (४३)

राजा ॥ ननु विस्मयादुभयमप्यवलोकयामि । (४४)

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ (४५)

---

चलतीति भावः । समयः शपथाचारकिद्धान्तेषु तथा विधि । क्रियाकारे च निर्देशे सङ्केते कालभाषयो रिति मेदिनी ॥

(४३) तथेति । सुगमम् ॥

(४४) राजेति । ननु भो उभयं तपोवनभूमयस्तव फलभूमयश्चेत्युभयम् ॥

(४५) निरुपाधिकेच्छाविषयत्वेन स्वर्गस्य तपःफलत्वादेतत्स्थानस्य तदुत्कर्षं दर्शयन् तपोऽनुष्ठाने विस्मयमुपपादयति प्राणानामिति । सन्तो विद्यमानाः कल्पवृक्षाः तपोमहिम्ना विविधभोगकल्पनक्षमवृक्षा देवतरुविशेषा वा यस्मिन् तत् तथोक्ते वने अनिलेन वायुना प्राणानां वृत्तिः स्थितिः उचिता अभ्यस्ता । अभ्यस्तेष्वपि उचितं न्याय्यमिति यादवः । काञ्चनपद्मानां काञ्चनानां पद्मानाञ्च हेममयपद्मानां वा रेणुभिः रजोभिः कपिशे पिङ्गले तोये पुण्या धर्म्याय पवित्रा अभिषेकक्रिया स्नानक्रिया । कडारः कपिशः पिङ्गपिशङ्गौ कद्रु पिङ्गलौ इत्यमरः । अभिषेकः स्नानमित्यपीति त्रिकाण्डशेषः । अत्र पद्मपुराणम् । हिरण्मयः शुभवान् दिव्यो मणिमयो गिरिः । तस्य पार्श्वे महद्दिव्यं शुभकाञ्चनवालुकम् । रम्यं बिन्दुसरो नामेति । रत्नशिलानां मणिमयोपलानां गृहेषु गुहारूपेषु अट्टालिकारूपेषु वा । ध्यानमन्यनिःस्पृहाध्यात्मचिन्तनम् । तदुक्तं विष्णुपुराणे । तद्रूपप्रत्ययैरेकसन्ततिश्चान्यनिःस्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृपेति । विबुधानां देवयोनीनां देवसम्बन्धिनीनां वा स्त्रीणां सन्निधौ सन्निकर्षे संयम इन्द्रियनिग्रहः । अन्यमुनयस्तपोभिर्धर्म्यामिताधिपैर्यद्वाञ्छन्ति

मात० ॥ उत्सर्पिणी खलु महतां प्रार्थना । (४६)

परिक्रम्य आकाशे ॥ इक्ष्वाकस्य किंव्यापारः सम्प्रति भगवान् मारीचः । (४७)

आकर्ण्य ॥ किं ब्रवीषि दाक्षायण्या पतिव्रतापुण्यमधिकृत्य पृष्टस्तदस्यै महर्षिपत्नीगणसहितायै कथयतीति । तत्प्रतिपाल्याव-सरः खलु प्रस्तावः । (४८)

राजानमवलोक्य ॥ अस्यामशोकच्छायायां तावदास्तामायुष्मान् यावत्त्वामहमिन्द्रगुरवे निवेदयामि । (४९)

---

कामयन्ते । अमी तपस्विनस्तस्मिन् स्थाने तपस्यन्ति तपः कुर्वन्ति । इतरेषां तपस्विनां काङ्क्षणीयभोगेष्वेतेषामनादर इति भावः । अत्र स्वर्गधर्मप्रदर्शनात् तुल्ययोगितालङ्कारः । यदुक्तं वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगितेति । शार्दूलविक्रीडितं वृत्तम् ॥

(४६) मात इति । उत्सर्पिणी उत्तरोत्तरमधिकाधिकश्रेयोविषया ॥

(४७) परीति । आकाशे शून्ये अप्रविष्टपुरुषाकाशायामपि रङ्गभूमौ तदुद्देशेनेत्यर्थः । एतेन नटनाकाशे दूरादेव सम्भाषणमाचरेदिति सूचयति प्रवेशनिष्क्रमणमात्रेषु रङ्गेषु तथाख्यपथस्यैव युक्तत्वात् । इक्ष्वाकस्य इक्ष्वाकुदाय । किं व्यापारः किंकर्मा । मरीचेरपत्यं मारीचः काश्यपः ॥

(४८) आकर्ण्येति । श्रुतिमभिनीयेत्यर्थः । किमिति । किम् "इति ब्रवीषि"-इत्यन्वयः । दक्षस्यापत्यं दाक्षायणी । नडादित्वात् फक् । तया अदित्या सहाः प्राधान्यात् । पतिव्रतापुण्यं साध्वीनां धर्मम् अधिकृत्य विषयीकृत्य । पृष्टः कोऽसीति जिज्ञासित । तत्पतिव्रतापुण्यम् । अस्यै दाक्षायण्यै । उद्देश्यतामात्रविवक्षायां चतुर्थी । तत् कथात् कर्म विवक्षायामप्रयत्नादिति यावत् । प्रतिपाल्यः प्रतीक्षणीयोऽवसरोऽवकाशो यस्य प्रस्तावस्य स । प्रस्तावो वक्ष्यमाणविषयप्रसङ्गः ॥

(४९) राजानमिति । आश्रमतरमिति शेषः । इन्द्रस्य गुरुः पिता इन्द्रगुरुः तस्मै मारीचायेत्यर्थः । निवेदयामि विज्ञापयामि ॥

राजा ॥ यथा भवान् मन्यते । इति स्थितः । (५०)

मातलिः निष्क्रान्तः ॥ (५१)

राजा ॥ निमित्तं सूचयित्वा । (५२)

मनोरथाय नाशंसे किं बाहो स्पन्दसे मुधा ।
पूर्व्वावधीरितं श्रेयो दुःखं हि परिवर्त्तते ॥ (५३)

नेपथ्ये ॥ मा क्खु चवलदं करेहि जहिं तहिं ज्जेव अत्तणो पदुदिं दंसेसि । (५४)

राजा ॥ कर्णं दत्त्वा ॥ अभूमिरियमविनयस्य तत् को नु खल्वेवं निषिध्यते । (५५)

शब्दानुसारेणावलोक्य सविस्मयम् ॥ अये को नु खल्वयमवरुध्यमान-स्तापसीभ्यामबालसत्त्वो बालः । (५६)

---

(५०) राजेति । यथेत्यादि । यथा भवतो मतमित्यर्थः ॥

(५१) मातलिरिति । सुगमम् ॥

(५२) राजेति । निमित्तं शुभलक्षणविशेषम् । दक्षिणबाहुस्पन्दनमित्यर्थः । निमित्तं हेतुलक्ष्मणोरित्यमरः । सूचयित्वा रूपयित्वा ॥

(५३) मनोरथेति । मनोरथाय अभिलषिताय वस्तुने शकुन्तलासमागमायेति यावत् । न आशंसे न प्रार्थये । तस्यासम्भाव्यत्वादिति भावः । हे बाहो त्वं मुधा वृथा किं स्पन्दसे स्फुरसि । व्यर्थके तु वृथा मुधेत्यमरः । तदुक्तं वसन्तराजे । स्पन्दो भुजस्येष्ट-समागमाय स्पन्दः करस्य द्रविणाप्तिहेतुरिति । हि यस्मात् पूर्व्वं प्राक् अवधीरितमव-ज्ञातं श्रेयः शुभं दुःखं सत्परिवर्त्तते प्रवर्त्तते न पुनः श्रेयोरूपेणेत्यर्थः । परिवर्त्तो विनि-मये कूर्म्मराजे प्रवर्त्तने इति मेदिनी ॥

(५४) नेपथ्य इति । मेत्यादि । मा खलु चपलतां कुरु यत्र तत्रैवात्मनः प्रकृतिं दर्शयसि । चपलतां चञ्चलताम् । प्रकृतिं स्वभावम् ॥

(५५) राजेति । अभूमिरस्थानम् । अविनयस्य दौर्ज्जन्यस्य । एवं निषिध्यते मा खलु चपलतां कुर्व्वित्यनेन निवार्य्यते ॥

(५६) शब्देति । अवरुध्यमानोऽवरुध्यमानः । अबालस्य महतस्येव सत्त्वं बलं स्वभावो

अर्द्धपीतस्तनं मातुरामर्द्दक्लिष्टकेशरम् ।
प्रक्रीडितुं सिंहशिशुं करेणैवावकर्षति ॥ (५७)

ततः प्रविशति यथानिर्दिष्टकर्म्मा तापसीभ्यां सह बालः । (५८)

बालः ॥ जिम्भ ले सिंहसावआ जिम्भ दन्ताइं दे गणइस्सं । (५९)

प्रथमा ॥ अविणीद किं णो अपच्चणिव्विसेसाइं सत्ताइं विप्पअरेसि हन्त वड्ढइ विअ दे संरम्भो ठाणे क्खु इसिजणेण सव्वदमणो त्ति किदणामहेओसि । (६०)

राजा ॥ किं नु खलु बालेऽस्मिन्नौरस इव पुत्त्रे स्निह्यति मे हृदयम् । (६१)

---

वा यस्य सः । सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोरिति विश्वः । बाल इति करेणावकर्षतीति श्लोकीयक्रियायामन्वेति ॥

(५७) अर्द्धेति । मातुः केशरिण्या अर्द्धमसम्पूर्णं पीतः स्तनो येन स तम् । आमर्द्देन विमर्द्दनेन क्लिष्टाः स्वस्ताः केशराः सटा यस्य स तम् । सिंहसटासु पुन्नागे बकुले नागकेशरे । केशरः पुंसीति त्रिकाण्डशेषः । सिंहशिशुं केशरिशावकं प्रक्रीडितुं करेणैव अवकर्षति आकर्षति ॥

(५८) तत इति । यथानिर्दिष्टं सिंहशावकाकर्षणं कर्म्म यस्य सः ॥

(५९) बाल इति । जिम्भेत्यादि । जृम्भस्व रे सिंहशावक जृम्भस्व । दन्तांस्ते गणयिष्यामि । जृम्भस्व मुखं व्यादेहि ॥

(६०) प्रथमेति । तापसीत्यर्थः । अवीत्यादि । अविनीत किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि हन्त वर्द्धत इव ते संरम्भः । स्थाने खलु ऋषिजनेन सर्व्वदमन इति कृतनामधेयोऽसि । अविनीत अशिक्षित । अपत्येभ्यो निर्गतो विशेषो येषां तानि अपत्यसदृशानीत्यर्थः । सत्त्वानि जन्तून् । सत्त्वमस्त्री तु जन्तुष्वित्यमरः । विप्रकरोषि पीडयसि । हन्तकारो विषादे । संरम्भ आटोपः दर्पं इति यावत् । आवेगाटोपसंरम्भा इति त्रिकाण्डशेषः । स्थाने युक्तम् । सर्व्वान् दमयते इति सर्व्वदमन इति योगादिति भावः ॥

(६१) राजेति । औरसे स्वयमुत्पादिते । तथाच मनुः । स्वक्षेत्रे संस्कृतायान्तु

विचिन्त्य ॥ नूनमनपत्यता मां वत्सलयति । (६२)

द्वितीया ॥ एसा तुमं केसरिणी लङ्घइस्सदि जइ से पुत्तअं ण मुञ्चिस्सदि । (६३)

बालः ॥ सस्मितम् ॥ अह्महे बलिअं क्खु भीदह्मि । इत्यधरं दर्शयति । (६४)

राजा ॥ सविस्मयम् । (६५)

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधोऽपेक्ष इव स्थितः ॥ (६६)

---

स्वयमुत्पादयेद्धि यम् । तमौरसं विजानीयात् पुत्रं प्रथमकल्पितमिति । स्निह्यति वत्सलं भवति ॥

(६२) विचिन्त्येति । विचार्येत्यर्थः । अनपत्यता सन्ततिविरहः । वत्सलयति सस्नेहीकरोति । स्निग्धस्तु वत्सलोऽस्य स्नेहयुक्तजने भवेदिति शब्दरत्नावली ॥

(६३) द्वितीयेति । तापसीत्यर्थः । एसेत्यादि । एषा त्वां केसरिणी लङ्घयिष्यति । यद्यस्याः पुत्रकं न मोक्ष्यसि । केसरिणी सिंही । लङ्घयिष्यति अभिभविष्यति । अल्पं पुत्रं पुत्रकम् ॥

(६४) बाल इति । अह्महे इत्यादि । अहो बलीयः खलु भीतोऽस्मि । अतिशयेन बलवदिति बलीयः । बृद्धार्हत्विना मिति बलीयोऽपि । क्रियाविशेषणम् । अधरं निम्नोष्ठम् ॥

(६५) राजेति । सुगमम् ॥

(६६) महत इति । एधः समिधमपेक्षते इत्येधोऽपेक्षः सन् । एधः समित्स्त्रियामित्यमरः । स्फुलिङ्गावस्थया कणमात्ररूपेण स्थितः । त्रिषु स्फुलिङ्गोऽग्निकण इत्यमरः । वह्निः प्रदीप्तोऽनल इव अयं बालो मे मम सम्बन्धे महतोऽनलस्य तेजसः प्रभावस्य पक्षे दीप्तेः बीजं कारणं प्रतिभाति प्रकाशते हेतुर्नाकारणं बीजमित्यमरः । अत्रोपमालङ्कारः ॥

प्रथमा॥ वच्छ एदं मुञ्च बालमइन्दश्चं अवरं दे कीलणश्चं दाइस्सं। (६७)

बाल॥ कहिं देहि णं। इति हस्तं प्रसारयति। (६८)

राजा॥ बालस्य हस्तं दृष्ट्वा॥ कथं चक्रवर्त्तिलक्षणमप्यनेन धार्य्यते। (६९)

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम्॥ (७०)

---

(६७) प्रथमेति। वच्छेत्यादि। वत्स एतं मुञ्च बालमृगेन्द्रकं अपरं ते क्रीड़नकं दास्यामि। बालमृगेन्द्रक सिंहशिशुम्। मृगाणां पशूनामिन्द्रो मृगेन्द्र। पशवोपि मृगा इति सिंहो मृगेन्द्र इति चामर। अपरमन्यत्। क्रीड्यतेऽनेनेति क्रीडनम्। तदेवेति क्रीड़नकम्॥

(६८) बाल इति। कहिमित्यादि। कुत्र देहि एतत्। कुत्र क्रीड़नकं कुत्रास्तीत्यर्थः। एतत् क्रीड़नकम्। प्रसारयति लिप्सयेति शेषः॥

(६९) राजेति। चक्रवर्त्तिलक्षणं राजलक्षणम्। अपिना न केवलं शौर्य्यातिशय इति समुच्चीयते। अनेन बालेन॥

(७०) प्रलोभ्येति। प्रलोभ्यस्य लोभनीयस्य वस्तुन क्रीड़नस्येति यावत् प्रणयेन प्रार्थनया प्रसारित प्रेरित। प्रणयास्त्वमी विश्रम्भयाच्ञाप्रेमाण इत्यमर। जालेन समूहेन संहत्या इति यावत् ग्रथिता निर्म्मिता अङ्गुलयो यस्मिन् स तथोक्त। संहताङ्गुलिरिति यावत्। जालं समूह आनाय इत्यमर। करः पाणि इद्ध उज्ज्वलो रागो रक्तिमा यस्या सा तया नवोषया प्रत्यग्रमात्रया उषसन्ध्यया भिन्नं विघटितम् अतएव अलक्ष्याणि आलोकातिशयाभावादननुभवनीयानि पत्राणां दलानामन्तराणि अवकाशा यस्य तत् एकमद्वितीयं पङ्कजं पद्ममिव प्रतिभाति प्रकाशते। तथाच यथाप्रसन्ध्यायां प्रथमसमुपस्थितायामेव विकचभाव प्राप्तस्य एकमात्रपङ्कजस्य निरन्तर दलाकारः प्रकाशते तथा-

द्वितीया ॥ सुव्वदे सुस्सू णं ण एसो सब्बो वाचामेत्तेण समस्सासि-ता गच्छ मम केरए उडए सङ्कोचणस्स इसिकुमारस्स वण्णचित्तिदो ,मट्टिआमोरओ चिट्ठदि तं से उवहर। (७१)

प्रथमा ॥ तह । इति निष्क्रान्ता ॥ (७२)

बाल ॥ दाव इमिणा ज्जेव कीलिस्सं। (७३)

तापसी ॥ विलोक्य हसन्ती ॥ णं सुस्सू णं। (७४)

राजा ॥ स्पृहयामि खलु दुर्ललितायास्मै । (७५)

---

लोकातिशयाभावेन दलानामवकाशा स्तथायमपि करः प्रकाशते,नलकूबिरस्येव इति तात्पर्य्यम्। जालेत्यादिना संहताङ्गुलित्वं पद्मसादृश्येनच रक्तत्वमायातम्। तयोश्च चक्र-वर्त्तिलक्षणत्वम्। तदाह गरुडपुराणम्। घनाङ्गुलिश्च सधनस्तस्तो रेखाश्च यस्य वै। क्ष्मापते करतलगा मणिबन्धे समुत्थिता इति। तथा लाक्षाभैरोश्वरास्तलैरिति। सामुद्र-कञ्च। यस्य पाणितलौ रक्तौ तस्य राज्यं विनिर्द्दिशेदिति। अत्र यद्यपि उषा रात्रेरव-साने इत्यव्यय एव अमरसम्मतस्तथापि अनव्ययोपि स्त्रीलिङ्ग उषाशब्दोऽन्यत्र द्रष्टव्य. तथाच उषा प्रभातं गोसर्गं इति स्वर्गवर्गे त्रिकाण्डशेष । मेदिन्याञ्च। रात्रिशेषे उषा-यान्तु केचिदाहुस्तदव्ययमिति। नवोषसेति पाठो दुष्ट एव उष.शब्दस्य नित्यक्लीवत्वात्। अत्रोपमालङ्कार.। वसन्ततिलकं वृत्तम् ॥

(७१) द्वितीयेति। सुव्वदे इत्यादि। श्रूयते शुश्रूषे नैष बालो वाङ्मात्रेण समाश्वसिति तद्गच्छ मदीये उटजे सङ्कोचनस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति तम-स्योपहर, एनं बालम्। समाश्वस्तिं निमन्त्रयितुम्। सङ्कोचनस्य तन्नाम्न । मृत्तिका-मयूर इति सम्बन्ध । वर्णचित्रितो विविधवर्णचित्रित.। अस्य सम्बन्धे उपहर उप-नय ॥

(७२) प्रथमेति। तथ तथा ॥

(७३) बाल इति। दावत्यादि। तावदनेनैव क्रीडिष्यामि। तावत् तेन् पर्य्यन्तम्। अनेन सिंहशावकेन ॥

(७४) तापसीति। इदानीमेकस्या निष्क्रमात् प्रथमाद्वितीयापदपरित्याग.। णमि-त्यादि। ननु शुश्रूनम्। नप्तुरतनये ॥

(७५) राजेति। दुर्ललिताय दुर्दान्ताय स्पृहिया अहर्णी ॥

निश्वस्य ॥

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा पुरुषीभवन्ति ॥ (७६)

तापसी ॥ साङ्गुलितर्ज्जनम् ॥ भो ण मं गणेसि । (७७)

पार्श्वमवलोक्य ॥ को एत्थ इसिकुमाराणं । (७८)

राजानं दृष्ट्वा । भद्दमुह एहि दाव मोआवेहि इमिणा दुम्मोक्ख-हत्थग्गहेण डिम्भएण बाधीअमाणं बालमइन्दअं । (७९)

---

(७६) निश्वस्येति। दीर्घमिति शेषः। आलक्ष्येति। अनिमित्तहासैरकारणहासैः आलक्ष्याणि ईषत् प्रेक्षणीयानि दन्तानां मुकुलानि कुड्मला येषां ते तान् तथा अव्यक्तैरस्फु-टितैः वर्णैः रमणीया मनोहरा वचसां वाक्यानां प्रवृत्तयो येषां ते तान् तथा अङ्काश्रयस्य अङ्कवासस्य प्रणयिनः प्रार्थिनः तनयान् आत्मजान् वहन्तो धन्याः सुकृतिनः। सुकृती पुण्यवान् धन्य इत्यमरः। तदङ्गानां तनयाङ्गानां रजसा पांशुना पुरुषी भवन्ति अपुरुषाः पुरुषा भवन्ति। पांशुर्ना न द्वयो रजः इत्यमरः। अजाततनयसम्बन्धाः पुरुषाकारा अपि क्लीबा इवेति भावः। परुषीभवन्तीति पाठे ये परुषीभवन्ति ते धन्या इत्यर्थः। अत्र स्वभावोक्तिरलङ्कारः। वसन्ततिलकं वृत्तम् ॥

(७७) तापसीति। सेति अङ्गुल्या तर्ज्जयन्तीत्यर्थः। भो इत्यादि। भो न मां गणयसि, गणयसि मन्यसे ॥

(७८) पार्श्वमिति। को इत्यादि। कोऽत्र ऋषिकुमाराणाम्। ऋषिकुमाराणामिति निर्द्धारणे षष्ठी।

(७९) राजानमिति। भद्रेत्यादि। भद्रमुख एहि तावत् मोचय अनेन दुर्मोक्षहस्त-ग्रहेण डिम्भकेन बाध्यमानं बालमृगेन्द्रकम्। दुर्मोक्षेति। दुर्मोक्षः कष्टेन मोचनीयो बलेन ग्रहो ग्रहणं यस्य स तेन। डिम्भकेन शिशुना। पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुरित्यमरः। बाध्यमानं पीड्यमानम् ॥

राजा ॥ सकेयुपगम्य सस्मितम् ॥ अयि भो महर्षिपुत्त्रक । (८०)

एवमाश्रमविरुद्धवृत्तिना संयमी किमिति जन्मतस्त्वया ।

सत्त्वसंश्रयसुखोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः ॥ (८१)

तापसी ॥ भद्दमुह ण क्खु एसो इसिकुमारओ । (८२)

राजा ॥ आकारसदृशं चेष्टितमेवास्य कथयति स्थानप्रत्ययात्तु वयमेवं तर्किणः । (८३)

यथाऽभ्यर्थितमनुतिष्ठन् बालकस्य स्पर्शमुपलभ्य स्वगतम् । (८४)

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रे सुखिता ममैवम् ।

का निर्वृतिं चेतसि तस्य कुर्याद्यस्यायमङ्गात्कृतिनः प्रसूतः ॥ (८५)

---

(८०) राजेति । सुगमम् ॥

(८१) एवमिति । एवमिदम्प्रकारा आश्रमविरुद्धा आश्रमानुपयुक्ता वृत्तिराचारो यस्य स तेन त्वया किमिति किं हेतुकम् इति शेषः । जन्मतः उत्पादक संयमी मुनि सत्त्व-संश्रय आत्मनिष्ठो गुणो विद्यातोजन्यादि चन्दनपक्षे शैत्यसौगन्ध्यादिर्यस्य स तथोक्तोऽपि स्वयं गुणवानपीत्यर्थः । सत्त्वं द्रव्ये गुणान्तरे । पिशाचादौ बले चित्ते स्वभावात्मसत्त्वविषु । आत्मनि व्यवसाये स्वे धने प्राणेषु सम्भ्रामिति मल्लाक्षि । कृष्णसर्पस्य शिशुना अर्भकेण चन्दनो मलयतरुरिव दूष्यते दोषं नीयते । चन्दनद्रुमकोटरेषु कालियसर्पशिशव स्थित्वा स्वगरलैस्तद्दोषमुत्पादयन्तीति लोकप्रसिद्धम् । अत्रोपमालङ्कारः । यदुक्तम् । साधर्म्य-मुपमाभेद इति । इदं रथोद्धता नाम वृत्तम् । तदुक्तम् । आद्यमन्तरमतस्तृतीयकं पञ्चमस्य नवमं तथान्तिमम् । दीर्घमिन्दुसखि यत्र जायते तां वदन्ति मुनयो रथोद्धता मिति ॥

(८२) तापसीति । भद्देत्यादि । भद्रमुख न खल्वेष ऋषिकुमारः । सुगमम् ॥

(८३) राजेति । आकारसदृशमाकारानुरूपम् । चेष्टितं कर्म । कथयति नायमृषि-कुमार इति प्रकाशयति । तदा कथं महर्षिपुत्त्रकेत्युच्यत इत्यत आह स्थानेति । स्थान प्रत्ययात् अमानुषीयं भूमिरस्या नैव मानुषकुमारः सम्भवतीति विश्वासात् । एवतर्किणः ऋषिकुमारतया विचारिणः ॥

(८४) यथेति । यथाभ्यर्थितं दुर्मोचहस्तग्रहाद्बालमृगेन्द्रमोचनम् ॥

(८५) अनेनेति । कस्यापि अन्यस्येत्यर्थः । कुलाङ्कुरेण वंशप्ररोहेण अनेन बालेन

तापसी ॥ उभौ विलोक्य ॥ अच्चरीअं अच्चरीअं (८६)

राजा ॥ आर्य्ये किमिव । (८७)

तापसी ॥ इमस्स बालअस्स असम्बन्धेवि भद्दमुहे संवादिणी आकिदि त्ति विह्मिदह्मि अविअ वामसीलोवि भविअ अपरिचिदस्सवि दे वअणेण पइदित्थो संवुत्तो । (८८)

राजा ॥ बालकमुपलालयन् ॥ आर्य्ये न चेन्मुनिकुमारोऽयं तत् कोऽस्य व्यपदेशः । (८९)

तापसी ॥ पौरवो त्ति । (९०)

राजा ॥ स्वगतम् ॥ कथमेकान्वयायोयमस्माकम् । अतः खलु मदनुकारीणमेनमत्रभवती मन्यते । (९१)

---

गात्रे स्पृष्टस्य मम एवंविधसुखकारा अनिर्वचनीयेति यावत् सुखिता । अयं बालो यस्य कृतिनो अङ्गात् प्रसूत तस्य जनस्य चेतसि कां निर्वृतिं किं सुखं कुर्य्यात् । निर्वृतिस्तु सुखे मोक्षे इति धरणिः । वृत्तमुपजातिः ॥

(८६) तापसीति । उभौ राजानं बालञ्च । अच्चरीअं आश्चर्य्यम् ॥

(८७) राजेति । सुगमम् ॥

(८८) तापसीति । इमस्सेत्यादि । अस्य बालकस्यासम्बन्धेपि भद्रमुखे संवादिनी आकृतिरिति विस्मितास्मि अपिच वामशीलोपि भूत्वा अपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्तः । असम्बन्धे सम्बन्धशून्ये । संवादिनी सदृशी । वामशील आश्रमविरुद्धस्वभावः । प्रकृतिस्थः स्वस्थः । वामो वल्गुप्रतीपयोरिति । शीलं स्वभावे सद्वृत्ते इति चामरः ॥

(८९) राजेति । उपलालयन् पाणिना स्पृशन् । व्यपदिश्यते विख्यायते अनेनेति व्यपदेशो वंश. ॥

(९०) तापसीति । पौरवोत्ति पौरव इति । व्यपदेश इति शेषः ॥

(९१) राजेति । स्वगतमनतिस्फुटम् । एकान्वयाय एकवंशः । वंशोऽन्ववाय इत्यमरः । मदनुकारिणं मत्सदृशाकृतिम् । मन्यते अनुभवति ॥

प्रकाशम्॥ अस्त्येतत् पौरवाणामन्त्यं कुलव्रतम्। (९२)

भवनेषु सुधासितेषु पूर्व्वं
क्षितिरक्षार्थमुशन्ति ये निवासम्।
नियतैकयतिव्रतानि पश्चात्
तरुमूलानि गृहीभवन्ति तेषाम्॥ (९३)

कथं पुनरात्मगत्या मानुषाणामेष विषयः। (९४)

तापसी॥ जधा भद्दमुहो भणादि किन्तु अच्छरासम्बन्धेण इमस्स बालअस्स जणणी इधज्जेव देवगुरुणो तवोवणे पसूदा। (९५)

---

(९२) प्रकाशमिति। एतत् वक्ष्यमाणम्। अन्त्यं शेषावस्थोचितम्। कुलव्रतं कुलक्रमागतो नियमः॥

(९३) तदेव निर्द्दिशति भवनेष्विति। ये पौरवाः पूर्व्वं प्रथमे वयसि सुधाधूपादिलेपलेपेन सितेषु धवलेषु भवनेषु सौधेष्विति यावत्। सुधा स्नुते स्नुहीमूर्व्वालेपगङ्गेष्टकासु चेति विश्वः। क्षितिरक्षार्थं भुवः पालनार्थं निवासमुशन्ति कामयन्ते तेषां पौरवक्षितिपानां पश्चाच्चरमे वयसि नियतमावश्यकतया विहितमेकं केवलं यतिव्रतं तापसव्रतं येषु तानि तरुमूलानि वृक्षमूलानि गृहीभवन्ति अगृहाणि गृहाणि भवन्ति वानप्रस्था भवन्तीत्यर्थः। एतत् कुलव्रतमस्तीत्यर्थः। औपच्छन्दसिकं नाम वृत्तम्॥

(९४) पूर्व्वोक्तवाक्याभ्यां पौरवाणां वानप्रस्थव्रतं तेन च पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वेति याज्ञवल्क्यवचने रागनिवृत्त्यनिवृत्तिभ्यां विकल्पोपदेशात् कस्यचिद्भार्य्यया सह प्रस्थितस्य सन्तानपरम्परया धर्म्मारण्येऽपि पौरवसन्ततिसम्भावनां दर्शयित्वा पश्चात्तु धर्म्मारण्यभूमौ तदयोग्यतया साश्चर्य्यं पृच्छति कथमिति। पुनस्तथ तेन किन्तु एष भूभागः कथं मानुषाणामात्मगत्या निजगमनेन निजगमनस्य वा विषयः। सुरलोकसुखभविमानयानमात्रासाद्यत्वात् कथमयमिमां भूमिमागत इति भावः॥

(९५) तापसीति॥ जधेत्यादि। यथा भद्रमुखो भणति किन्तु अप्सरः सम्बन्धेन एतस्य बालकस्य जननी इहैव देवगुरोस्तपोवने प्रसूता। भद्रमुखो यथा भणति मानुषाणामात्मगत्या अविषय एवैष भूभाग इत्यर्थः। अप्सरः सम्बन्धेन अप्सरः सङ्गकारेण ताभिरात्

राजा ॥ स्वगतम् ॥ हन्त द्वितीयमिदमाशाजननम् । (९६)

प्रकाशम् ॥ अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी । (९७)

तापसी । को तस्स धम्मदारपरिच्चाइणो णाम कीत्तइ-स्सदि । (९८)

राजा ॥ स्वगतम् ॥ कथमियं कथा मामेव लक्ष्यीकरोति । याव-दस्य शिशोर्मातरं नामतः पृच्छेयम् । (९९)

विचिन्त्य ॥ अथवा अनार्य्यः खलु परदारपृच्छाव्यापारः । (१००)

प्रविश्य मृण्मयूरहस्ता तापसी ॥ सव्वदमण पेक्ख सउन्त-लावण्णं । (१०१)

---

अनेनेति यावत् । देवगुरोर्मारीचस्य । प्रसूता गर्भं मुक्तवती । प्रसवो गर्भमोचने इत्य-मरः । अत्रार्थस्यैव कर्म्मत्वविवक्षया कर्त्तरि क्तः ॥

(९६) राजेति । हन्तो हर्षद्योतकः । द्वितीयमिति पौरवत्वमेव प्रथममाशाजननं इदमपर सहकारित्वादस्य मातुरस्य प्रश्नं द्वितीयं माशाजननम् । आशा जायतेऽनेनेति आशाजननं मनोरथसञ्चारकमित्यर्थः ॥

(९७) प्रकाशमिति । अथशब्दः प्रश्ने । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्य-मरः । सा अस्य जननी ॥

(९८) तापसीति । कोऽस्येत्यादि । कस्तस्य धर्म्मदारपरित्यागिनो नाम कीर्त्तयिष्यति । धर्म्मदारेति धर्म्मपत्नीत्यर्थः ॥

(९९) राजेति । इयं कथा कथं किं मामेव लक्ष्यीकरोति मामन्येव प्रवर्त्तते उतान्यमिति शेषः । अस्य शिशोर्बालस्य मातरं नामतो नाम्ना पृच्छेय यावदिच्छेयम् ॥

(१००) विचिन्त्येति । विचार्य्येत्यर्थः । अनार्य्यं अप्रशस्तं । उक्तस्यावधारणार्थं । परेति । परपत्नीविषयकप्रश्नक्रियेत्यर्थः ॥

(१०१) प्रविश्येति । सव्वेत्यादि । सर्व्वदमन प्रेक्षस्व शकुन्तलावण्यम् । शकुन्तस्य पक्षिणो लावण्यं कान्तिविशेषम् ॥

बाल ॥ सदृष्टिक्षेपम् ॥ कहिं सा मे अज्जूआ । (१०२)

उभे ॥ प्रहसत । (१०३)

प्रथमा ॥ णामसारिस्सेण वञ्चिदो मादिवच्छलो । (१०४)

द्वितीया ॥ वच्छ इमस्स मोरअस्स रम्मत्तणं पेक्ख त्ति भणिदोसि । (१०५)

राजा ॥ स्वगतम् ॥ किं शकुन्तलेत्यस्य मातुराख्या । अथवा सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते । (१०६)

बाल ॥ अज्जूए रोअदि मे एसो भद्दओ मोरओ । इति क्रीडनकमादत्ते । (१०७)

---

(१०२) बाल इति । सदृष्टिविक्षेपमित्यतो दृष्टिविक्षेपेण सह । कहिमित्यादि । क्वास्ति मे अम्बा । अम्बा माता ॥

(१०३) उभे इति । प्रहसत. अधैर्हसत ॥

(१०४) प्रथमेति । णामेत्यादि । नामसादृश्येन उपच्छन्दितो मातृवत्सल । नामसादृश्ये नामाक्षराणामैक्येन । उपच्छन्दित प्रलोभित. । मातृवत्सलो मातरि स्नेहवान् । स्निग्धस्तु वत्सल इत्यमर ।

(१०५) द्वितीयेति । इमस्सेत्यादि । अस्य मयूरस्य रमणीयत्वं प्रेक्षस्वेति भणितोसि । इति भणितोसि एवमुक्तोसि ॥

(१०६) राजेति । स्वगतमस्फुटम् । अपि शङ्कायाम् । नाम सम्भावनायाम् । मृगतृष्णिका जलत्वप्रतीयमाना मरीचिका । पिपासोरोति शेष । नाममात्रप्रस्ताव. नाममात्रोल्लेख । विषादाय खेदाय कल्पते भवति ॥

(१०७) बाल इति । अज्जूए इत्यादि । अज्जुके रोचते मे भद्रक एष मयूर । अज्जुका ज्येष्ठा भगिनी । अज्जुका भगिनी ज्येष्ठेति नाट्योक्तावमर । रोचते प्रीतिमुत्पादयति । मे मह्यम् । रुच्यर्थानां प्रीयमाण इति चतुर्थी । भद्रक भद्रम् । एतेन बालस्य दमितस्य तापसकृतविश्वासो जात इति । दमितम् । भद्रक इव मोक्ष भद्रका विद्रवति स्त्रियामिति शब्दाब्धि ॥

प्रथमा ॥ विलोक्य सावेगम् ॥ अम्मो रक्खाकण्डओ से मणिबन्धे ण दीसदि (१०८)

राजा ॥ आर्ये अलमावेगेन नन्वयमस्य सिंहशावकस्य विमर्दात् परिभ्रष्टः । इत्यादातुमिच्छति । (१०९)

उभे ॥ मा क्खु मा क्खु एदं । (११०)

विलोक्य ॥ कथं गहिदो ज्जेव । विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः । (१११)

राजा ॥ किमर्थं भवतीभ्यां प्रतिषिद्धोऽस्मि । (११२)

प्रथमा ॥ सुणादु महाभाओ एसा महाप्पहावा अवराजिदा णाम ओसही इमस्स दारअस्स जादकम्मसमए भअवदा मारी-

---

(१०८) प्रथमेति । सावेगं ससम्भ्रमम् । अम्मो इत्यादि । अस्य रक्षाकाण्डकोऽस्य मणिबन्धे न दृश्यते । विस्मये अव्यये अम्म नित्यं स्त्रीभिः प्रयुज्यत इति भरतः । रक्षाकाण्डो रक्षार्थबद्धो वलयाकारनाडीविशेषः । काण्डः स्तम्बे तरुस्कन्धे पादेऽवसरनीरयोः । कुत्सिते दण्डभिन्नाडीवृन्दे रहसि न स्त्रियामिति मेदिनी । मणिबन्धे पाणिग्रन्थौ ॥

(१०९) राजेति । आवेगेन सम्भ्रमेण । ननु रक्षधारणार्थः अयं रक्षाकाण्डः । विमर्दात् मर्दनात् । आदातुं ग्रहीतुम् ॥

(११०) उभे इति । मेत्यादि । मा खलु मा खलु एतम् । एतं रक्षाकाण्डम् । गृहाणेति शेषः ॥

(१११) विलोक्येति । गृहीतमवलोक्येत्यर्थः । कथमित्यादि । कथं गृहीत एव । न तु प्रतिषेधः श्रुत इति शेषः । उर इति । उरसोः स्व स्व वक्षसोर्निहितावर्पितौ हस्तौ याभ्यां ते । अवलोकयत उभे तापस्यौ इति सम्बन्धः ॥

(११२) राजेति । प्रतिषिद्धः रक्षाकाण्डग्रहणे इति शेषः ॥

एषा दिखा एदं किल मादापिदरो अप्पाणञ्च वज्जिअ अवरो भूमिपदिदं ण गेह्लादि। (११३)

राजा ॥ अथ गृह्णाति। (११४)

प्रथमा ॥ तदो सप्पो भविअ तं दंसइ। (११५)

राजा ॥ भवतीभ्यां कदाचिदन्यत्र प्रत्यक्षीकृतमिदम्। (११६)

उभे ॥ अणेअसो। (११७)

---

(११३) प्रथमेति। एषेत्यादि। एषा खलु महाभागः एषा महाप्रभावा अपराजिता नाम सुरमहौषधी अस्य दारकस्य जातकर्मसमये भगवता मारीचेन दत्ता एतां किल मातापितरौ आत्मानञ्च वर्जयित्वा अपरो भूमिपतितां न गृह्णाति। महाप्रभावो महाशक्तिः। सुरमहौषधी सुरलोकसुलभलताविशेषः। दारकस्य बालकस्य। दारको बालकेऽपि स्यादिति मेदिनी। जातकर्म नाडीच्छेदनात् प्राक् कर्त्तव्यसंस्कारविशेषः। यथा, मनुः, प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म विधीयते इति। यद्यपि अष्टौ संस्कारकर्म्माणि गर्भाधानमिव स्वयम्। पिता कुर्य्यात्तदन्यो वा तदभावे तु तत् क्रमादिति वचनो संस्कारेषु पितुरेवाधिकारोऽस्ति न त्वन्येषामिति लभ्यते तथापि ऋत्विक् च त्रिविधो दृष्टः पूर्व्वं जुष्टः स्वयं कृतः। यदृच्छयापि यः कुर्य्यादार्त्विज्यं प्रीतिपूर्व्वकमिति नारदेन स्वयमवृत्तस्यापि ऋत्विकत्वाभ्युपगमात् तत्कृतस्य च ऋत्विक् प्रत्तो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः। यभिरेव कृतं यत्तु तत्कृतं स्वयमेव हि इति दक्षेण स्वयं कृत-*तुल्यत्वप्रतिपादनात्तदधिष्ठिते राजनि सूपपन्न एव महर्षिकृतोऽयं संस्कारः ॥*

(११४) राजेति। अथ यदि। प्रश्नं द्योतयति ॥

(११५) प्रथमेति। तदो इत्यादि। ततः सर्पो भूत्वा तं दशति। भूत्वा अपराजितेति शेषः। तं ग्राहकम् ॥

(११६) राजेति। अन्यत्र यदितरस्मिन् पक्षोपरि। प्रत्यक्षीकृतं दृष्टम्। इदं रक्षाकाण्डस्य सर्पभावेन दंशनम् ॥

(११७) उभे इति। अणेअसो अनेकशः। अनेकस्मिन्नेकस्मिन्ननेकधा। संख्यैकार्थाद्वीप्सायां शस् इति शस् ॥

राजा ॥ सहर्षमात्मगतम् ॥ तत् किं खल्विदानीं पूर्णमात्मनो मनोरथं नाभिनन्दामि । इति बालकं परिष्वजते । (११८)

द्वितीया ॥ सुव्वदे एहि इमं वुत्तन्तं णियमवावडाए सउन्तलाए णिवेदेम्ह । इति निष्क्रान्ते । (११९)

बालः ॥ मुञ्च मं मुञ्च मं अम्बाए सआसं गमिस्सं । (१२०)

राजा ॥ पुत्त्र मयैव सह मातरमभिनन्दिष्यसि । (१२१)

बालः ॥ दुस्सन्तो मम तादो ण क्खु तुमं । (१२२)

राजा ॥ एष विवाद एव मा प्रत्याययति । (१२३)

ततः प्रविशत्येकवेणीधरा शकुन्तला । (१२४)

शकु ॥ सवितर्कम् ॥ विआरकाले वि पदूदिस्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसंसो अत्तणो भाअधेएसुं अधवा जधा

---

(११८) राजेति । पूर्णं फलोन्मुखम् । नाभिनन्दामि स्वश्लीकत्यानन्दामि । परिष्वजते आलिङ्गति ॥

(११९) द्वितीयेति । सुव्वदेइत्यादि । सुव्रते एहि इमं वृत्तान्तं नियमव्यापृतायाः शकुन्तलाया निवेदयावः । इमं वृत्तान्तं भूमिपतितेन रक्षाकाण्डेन स्पृष्टतोऽप्यपरस्य सर्पभावेनादंशनम् । नियमव्यापृताया व्रतपरायणायाः ॥

(१२०) बाल इति । मुञ्चेत्यादि । मुञ्च मां मुञ्च मां अम्बायाः सकाशं गमिष्यामि । सुगमम् ॥

(१२१) राजेति । सुगमम् ॥

(१२२) बाल इति । दुष्मन्तो इत्यादि । दुष्मन्तो मम तातो न त्वम् । सुगमम् ॥

(१२३) राजेति । विवादः पुत्त्रेत्युक्तस्य नाहं ते पुत्त्रः किन्तु दुष्मन्तस्येति विरुद्धवाद । प्रत्याययति निश्चयं विश्वासयति ॥

(१२४) तत इति । सुगमम् ॥

मिस्सकेसीए मे आचक्खिदं तधा सम्भावीअदि एदं इति परिक्रामति। (१२५)

राजा ॥ शकुन्तलां विलोक्य सहर्षखेदम्। अये सेयमत्रभवती शकुन्तला। (१२६)

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्त्ति ॥ (१२७)

---

(१२५) शकु इति। सवितर्कं तर्काभिनयेन सह विचारेत्यादि। विकारकालेपि प्रकृतिस्थां सर्वदमनस्यौषधीं श्रुत्वा न मे आशंसा आत्मनो भागधेयेषु अथवा यथा मिश्रकेश्या मे आख्यातं तथा सम्भाव्यते एतत्। विकारकाले प्रकृतेरन्यथाभावकाले सर्पीभावोचितसमये इति यावत्। प्रकृतिस्थां यथापूर्व्वमवस्थिताम्। ओषधीमपराजितां नाम सुरक्षौषधीम्। आशंसा प्रत्याशा। भागधेयेषु भाग्येषु सर्व्वदमनजीवनमूलेष्विति यावत्। कल्पान्तरमाह अथवेति। यथा स्फुतिवशादधुना राज्ञो व्याकुलत्वमित्यर्थः। तथा तत् प्रयुक्तागमननिबन्धनम्। सम्भाव्यते मन्यते। एतत् ओषध्याः स्वभावेनावस्थानम् ॥

(१२६) राजेति। अये इति विषादे। अये क्रोधे विषादेच सम्भ्रमे स्मरणेपि चेति मेदिनी। शकुन्तलेति श्लोकीयबिभर्त्तीति क्रियायामन्वितम् ॥

(१२७) वसने इति। परिधूसरे धूलिभिः कपोतवर्णे। ईषत्पाण्डुस्तु धूसरः इत्यमरः। वसने वाससी वसाना परिदधाना। वसआच्छादने इति कविकल्पद्रुमः। नियमेन सम्भोगपरित्यागकष्टेन क्षामं शुष्कतां गतं मुखं यस्याः सा। धृता शिरस्येति शेषः। एकैववेणिर्यया सा अतएव शुद्धं दोषलेशशून्यं शीलं चरित्रं यस्याः सा तथोक्ता पतिव्रतेति यावत्। अत्र हारीतः। आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रतेति। अलंमण्डनं वर्ज्जयेन्नारी तथा प्रोषितभर्त्तृका। देवताराधनपरा तिष्ठेद्भर्त्तृहिते रतेति विष्णुधर्म्मोत्तरे क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम्। हास्यं परगृहे यानं त्यजेत् प्रोषितभर्त्तृकेति गरुडपुराणे चाकल्पकल्पनामात्रनिषेधेपि न

शकु ॥ पश्चात्तापविवर्णं राजानं दृष्ट्वा सवितर्कम् ॥ ण क्खु अज्ज-उत्तो अअं । ता को एसो किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि । (१२८)

बालः ॥ मातरमुपगम्य ॥ अम्ब को एसो मं पुत्तकेत्ति ससिणेहं आलिङ्गदि । (१२९)

राजा ॥ प्रिये क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम् । तदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानमिच्छामि । (१३०)

शकु ॥ स्वगतम् ॥ हिअअ समस्सस समस्सस परिच्चत्त-मच्छरेण अणुकम्पिदह्मि देव्वेण अज्जउत्तो क्खेव एसो । (१३१)

---

नाद्य विधवावेश कथञ्चिदपि धारयेदिति विष्णुधर्म्मोत्तरे वैधव्यलक्षणप्रतिषेधात्तथा-विधानाभेकवेणीधारणसमाचारः । असमग्रालङ्कारिकाः । प्रवासोभिचदेयत्वं कार्श्या-च्छायाच्च सम्भ्रमात् । तत्वाङ्गचेलमालिन्यमेकवेणीधरं शिरः । निःश्वासोच्छ्वासरुदित-भूमिपातादि जायते । शकुन्तला अतिनिष्करुणस्य अतिनिर्दयस्य मम दीर्घमतिचिरोद्व्या-पनं विरहव्रतं वियोगरूपं व्रतं बिभर्त्ति पालयति । दीर्घकालीनधर्माधिव्रतस्थिताया अपि पूर्व्वोक्तविशेषणार्थो द्रष्टव्यः । विरहव्रतमिति रूपकालङ्कारः । तदुक्तं दण्डिना उपमैव तिरोभूतभेदा रूपकमिष्यत इति । उपवृत्तं नाम वृत्तम् ॥

(१२८) शकु इति । पश्चादिति । पश्चात्तापेन अनुतापेन विवर्णं मलिनं । एतदेव वितर्के हेतुः । णेत्यादि । न खल्वार्य्यपुत्रोऽयं तत्क एष कृतरक्षामङ्गलं दारकं मे गात्र-संसर्गेण दूषयति । न खलु नैव । कृतेति । कृतं रक्षायै मङ्गलं यस्मिन् तम् । दारकं बालकम् । दूषयति दोषं नयति । रक्षाकाण्डस्य शक्त्यपगमादित्याशयः ॥

(१२९) बाल इति । अम्बेत्यादि । अम्ब क एष मां पुत्रकेति सस्नेहमालिङ्गति । अम्ब मातः । सुध्रूदीह्रजम्वाथोनामिति सम्बुद्धौ ह्रस्वः । पुत्तकेति सम्बुद्धेति शषः ॥

(१३०) राजेति । प्रिये त्वयि प्रयुक्तमाचरितं क्रौर्य्यं न्हंसत्वमपि मे मम सम्बन्धे अनु-कूलः सुखहेतुः परिणामः शेषो यस्य तत् तथोक्तं संवृत्तम् । सपुत्रायास्ते कालेन समागमा-दिति भावः । तत् तस्मादिदानीमात्मानं त्वया प्रत्यभिज्ञातं परिचितमिच्छामि ॥

(१३१) शकु इति । स्वगतमनतिस्पष्टम् । हिअएत्यादि । हृदय समाश्वसिहि समा-श्वसिहि प्रहृष्य परित्यक्तमत्सरेण अनुकम्पितास्मि दैवेन । आर्य्यपुत्र एवैषः । प्रकृत्य

राजा॥ प्रिये (१३२)

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि।
उपरागान्ते शशिनः समुपगता रोहिणी योगम्॥ (१३३)

शकु॥ सहर्षम्॥ जअदु जअदु अज्जउत्तो। इत्यर्द्धोक्ते बाष्पसन्नकण्ठी विरमति। (१३४)

राजा॥ प्रिये (१३५)

---

मत्सरात्परम्। मत्सरीति। परित्यक्तो मत्सरः। शुभद्वेषः क्रोधो वा येन तथोक्तेन। मत्सरोऽन्यशुभद्वेष इत्यमरः। क्वचित् क्रोधोऽपि मत्सर इति रत्नकोषः॥

(१३२) राजेति। प्रिये इति श्लोकीयविशेषणेन सह क्रियायामन्वेति॥

(१३३) स्मृतीति। दिष्ट्या आनन्दे। हे सुमुखि प्रिये स्मृत्या पूर्ववृत्तान्तस्मरणेन भिन्नं खण्डितं मोहरूपं तमो यस्य स तथोक्तस्य मे मम प्रमुखे अग्रे त्वं स्थितासि तावद्रोहिणी उपरागान्ते राहुयोगावसाने शशिनश्चन्द्रमसो योगं सम्पर्कमुपगता। कार्त्तिक्यामुपरागे सतीति भावः। उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि चेत्यमरः। अत्र शकुन्तलायास्तमःस्मृत्यराजसङ्गयोगो रोहिण्याश्च शून्यचन्द्रसङ्गयोगवदय इति बिम्बानुबिम्बत्वप्रदर्शनान्निदर्शनालङ्कारः। तथाच सम्भवद्वस्तुसम्बन्धनिबन्धना। यदुक्तं सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं दर्शयेत् सा निदर्शनेति। आर्या जातिः॥

(१३४) शकु इति। जअदु इत्यादि। जयति जयति आर्यपुत्र। बाष्पेण रुद्धो कण्ठो यस्याः सा। संयोगोऽयमाकस्मिक इति हर्षविवेकात् कण्ठरोधात् आर्यपुत्रेनेऽपोऽग्रमाप्तऽपि अक्षराणामाभाषादौ पठितत्वेन भाषादित्वादेव। बाष्पदयस्तु बाष्पाम्बुदन्तकण्ठव्य मद्गदपौरमित्यपि। पुष्पोनेत्रमपा गात्रकम्पः बाष्पादिरीति इत्युक्ताः। विरमति अन्यवाक्यादिति शेषः॥

(१३५) राजेति। प्रिये इति पूर्ववदन्वयः॥

वाष्पेण प्रतिरुद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ (१२६)

बाल॰ ॥ अम्ब को एसो । (१२७)

शकु ॥ भाअधेआइं पुच्छ । इति रोदिति । (१२८)

राजा ॥

सुतनु हृदयात् प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः सम्मोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ (१२९)

---

(१२६) वाष्पेणेति । जयशब्दे वाष्पेण नेत्रजलेन प्रतिरुद्धे स्तम्भितेपि मया जितं मम जयोभूत् यत् यस्मात् ते तव असंस्कारेण अलङ्कारसविरहेण पाटल ईषद्रक्तवर्णं ओष्ठपुट ओष्ठपुटको यत्र तथाभूत मुख दृष्टम् । श्वेतरक्तस्तु पाटल इत्यमर । "शरीरसंस्कारनिषेधानुपालनात् साध्वाचारत्वनिश्चयादिदमुक्तम् । पाटलोष्ठेति वौष्ठोत्वोरित्यकारलोप ॥

(१२७) बाल इति । अम्ब को एसो अम्ब क एषः ॥

(१२८) शकु इति । भाअइत्यादि । भागधेयानि पृच्छ । भागधेयानि भाग्यानि । तथाच भाग्यैरेवायमिदानीत इति तान्येव प्रष्टुमुचितानीति भाव ।

(१२९) राजेति । सुतन्विति । हे सुतनु प्रत्यादेशेन मत्कृतप्रत्याख्यानेन व्यलीक पीडा ते तव हृदयादपैतु अपसरतु पीडार्थेपि व्यलीक स्यादित्यमर । तदा तत्काले किमपि अनिर्वचनीयो बलवान् मे मनस सम्मोहो भ्रमोऽभूत् । हि यस्मात् प्रबल बलवत् तमो मोहो ध्वान्तं वा येषा तेषा शुभेषु मङ्गलेषु विषयेषु वृत्तय प्रवृत्तय । वृत्तिर्विवरणाजीव कौषिक्यादिप्रवर्त्तन इति मेदिनी । एवं- प्राया प्रायेण बाहुल्येन एवमिदम्प्रकारा । प्रायोभूम्न्यन्तगमन इत्यमर. । व्य भूर्व मित्येषद्वारस पूर्व्वनिपात । अत्र दृष्टान्तयति स्रजमित्यादि । यथाहि

इति पादयोः पतति । (१४०)

अज्ज । उट्ठेदु उट्ठेदु अज्जउत्तो णूणं मे सुहप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणामसुहं आसी जेण साणुक्कोसोवि अज्जउत्तो मइ विरसो संवुत्तो । (१४१)

---

अश्रो नाम प्रबलतमा शिरसि लिप्तामर्पितां खल मालामपि अहिशङ्कया सशङ्क-संशयारोपेण धुनोति कम्पयति । अत्र प्रबलतमयेत्यादिनाऽर्थान्तरन्यास अ प्रस्तुतमित्यादिदृष्टान्ताङ्गः । इदं हरिणी नाम वृत्तम् ॥

(१४०) इतीति । इत्युक्त्वेत्यर्थः । पादयोरिति । कोपशान्त्यर्थमिदम् । तदुक्तम् । सामभेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् । तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात् । तत्र प्रियवाक् साम भेदस्तत्सख्युपार्ज्जनम् । दानं व्याजेन भूषादेः पादयोः पतनं नतिः । सामादौ तु परिक्षीणे स्यादुपेक्षावधारणम् । रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरमिति ॥

(१४१) अज्ज इति उट्ठेदु इत्यादि । उत्तिष्ठतु उत्तिष्ठतु आर्य्यपुत्रः नूनं मे सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामसुखमासीत् येन सानुक्रोशोऽपि आर्य्यपुत्रो मयि विरस संवृत्तः । नूनमित्यादि । परिणामे परिपाकदशायां सुखयतीति परिणामसुखमथच तेषु अतीतेषु दिवसेषु सुखप्रतिबन्धकं सुखव्याघातकं मे पुराकृतं पौर्व्वदैहिककर्म्मजन्यपापं नूनमवश्यमासीत् । मत्यत्रीभूतेऽपि मदीयदोषक्षमे भवत्सुखप्रतिबन्धके अथ स्वपुराकृतानुमानमिति राजप्रश्नपरिजिहीर्षयाह येनेत्यादि येन हेतुना । सानुक्रोशोऽपि अनुरागातिशयेन सानुकम्पोऽपि । अनुकम्पा स्यादनुक्रोश इत्यमरः । विरसो विगतरागः । शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस इत्यमरः । तथाच दशायामपि सुखप्रतिबन्धहेतुत्वाने भवदनुरागच्युतौ निर्निदानायामस्या उपादानाभावेन मम पुराकृतानुमानमावश्यकमिति भावः । यदाह मत्स्यपुराणम् । पुराकृतानि पापानि फलन्त्यस्मिंस्तपोधनाः । रोगदौर्गत्यरूपेण तथैवेष्टवधेन चेति ॥

राजा ॥ उत्तिष्ठति । (१४२)

शकु ॥ अध कधं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो । (१४३)

राजा ॥ उद्धृतविषादशल्यः कथयिष्यामि । (१४४)

मोहान्मया सुतनु पूर्व्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तन्तावदाकुटिलपक्ष्मविलग्नमद्य
कान्ते प्रमृज्य विगतानुशयो भवामि ॥ (१४५)

इति यथोक्तं करोति ॥ (१४६)

---

(१४२) राजेति । सुगमम् ॥

(१४३) शकु इति । अधेत्यादि । अथ कथमार्य्यपुत्त्रेण स्मृतो दुःखभागी अयं जनः । अयमहं मन्ये ॥

(१४४) राजेति । उद्धृतमुन्मूलितं विषादशल्यं हृदयनिहितशोकशङ्कुर्येन स तथोक्तः सन् कथयिष्यामि आमूलं वक्ष्यामि । वा पुंसि शल्यं शङ्कु ना इत्यमरः ॥

(१४५) विषादशल्योद्धारप्रकारमाह मोहादिति । हे सुतनु अधरं परिबाधमानः परिपीडयन् ते तव यो बाष्पबिन्दुरश्रुबिन्दुर्मया मोहात् प्रमादभ्रमात् पूर्व्वं प्रत्यादेशकाले उपेक्षितः न प्रोञ्छितः हे कान्ते अद्य आकुटिलेषु ईषत् कुञ्चितेषु पक्ष्मसु अक्षिलोमसु विलग्नं स्थितम् । कुञ्चितं नतम् । आविद्धं कुटिलमित्यमरः । तं बाष्पबिन्दुं प्रमृज्य प्रोञ्छ्य तावत् विगतानुशयो गतानुतापो भवामि । अथानुशयो दीर्घद्वेषानुतापयोरित्यमरः । वसन्ततिलकं नाम वृत्तम् ॥

(१४६) इतीति । यथोक्तमश्रुबिन्दुमार्जनम् ॥

शकु ॥ प्रमृष्टवाष्पा अङ्गुरीयकं विलोक्य ॥ अज्जउत्त तं एदं अङ्गुलीअअं। (१४७)

राजा ॥ अथकिम् अस्मादद्भुतोपलम्भान्मया स्मृतिरुपलब्धा। (१४८)

शकु ॥ विसमं किदं क्खु इमिणा जं तदा अज्जउत्तस्स पच्चाअणकाले दुल्लहं आसी। (१४९)

राजा ॥ तेन हि ऋतुसमागमचिह्नं प्रतिपद्यतां लता कुसुमम्। (१५०)

---

(१४७) शकु इति। प्रमृष्टवाष्पा राज्ञेति शेषः। अज्जउत्तेत्यादि। आर्यपुत्र तदिदमङ्गुरीयकम्। तदिति यदपायान्ममेयं दुर्दशेति भावः।

(१४८) राजेति। अस्मादङ्गुरीयात्। अद्भुत आश्चर्यं उपलम्भो लाभो यस्य तत् तस्मात्। उपलब्धा जाता॥

(१४९) शकु इति। विसममित्यादि। विषमं कृतं अनेन यत् तदा आर्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत्। विषममन्याय्यम्। यत् अङ्गुरीयकम्। तदा प्रणयविस्मृतौ। प्रत्यायनकाले विश्वासनकाले। दुर्लभम् अनासन्नम्॥

(१५०) राजेति। तेन इदानीमासादितत्वेन लता वल्ली ऋतुसमागमस्य वसन्तेन सह सम्पर्कस्य चिह्नं चिह्नभूतं कुसुमं पुष्पं प्रतिपद्यतां धारयतु। एतेन त्वं लताऽसि वसन्तोऽहम् अङ्गुरीयकञ्चेदं कुसुममिवेति दर्शितम्। तथाच लता यथा वसन्तसमायोगात् कुसुमं धारयति तथा त्वमपि मत्समायोगात् इदमङ्गुरीयं धारयेत्यर्थः। अत्राप्रस्तुतैः ऋतुसमागमलताकुसुमैः वस्तुधर्मैरेभिः प्रस्तुतस्य त्वं मत्समागमोचितमङ्गुरीयकं प्रतिपद्यस्वेत्यर्थस्य गम्यमानत्वादप्रस्तुतप्रशंसाख्योऽलङ्कारः। तदुक्तं दर्पणे। क्वचित् विशेषः सामान्यात् सामान्यं वा विशेषतः। कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात्समम्। अप्रस्तुतात् प्रस्तुतञ्चेद् गम्यते पञ्चधा ततः। अप्रस्तुतप्रशंसा स्यादिति॥

शकु ॥ ण मे विस्सेसेमि अज्जउत्तो ज्जेव णं धारेदु । (१५१)

तत प्रविशति मातलिः । (१५२)

मात ॥ दिष्ट्या धर्मपत्नीसमागमेन पुत्त्रमुखदर्शनेन चायुष्मान् वर्द्धते । (१५३)

राजा ॥ सुहृत्सम्पादितत्वात् साधुतरफलो मे मनोरथः मातले न खलु विदितोऽयमाखण्डलस्यार्थः । (१५४)

मात ॥ सस्मितम् ॥ किमीश्वराणां परोक्षम् एहि भगवान् मारीचस्ते दर्शनमिच्छति । (१५५)

राजा ॥ प्रिये अवलम्ब्यतां पुत्त्रः त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि । (१५६)

---

(१५१) शकु इति । णेत्यादि । नास्य विश्वसिमि आर्यपुत्त्र एवैनं धारयतु । न विश्वसिमि अङ्कुलिगतं स्यास्यतीति न प्रत्येमि ॥

(१५२) तत इति । सुगमम् ॥

(१५३) मातेति । दिष्ट्या आनन्दे । वर्द्धते अभ्युदेति दृद्धिरभ्युदयोऽस्त्रियामित्यमरः । पत्नीलाभस्य पुत्त्रमुखदर्शनस्य चाभ्युदयरूपत्वादिति भावः ॥

(१५४) राजेति । सुहृदा भवता सम्पादितत्वात् परिणमितत्वात् मे मम मनोरथोऽभिलाषः साधुतरमतिशयेन साधु फलं यस्य स तथाभूतः । यतः शकुन्तलाभिलाषात् सपुत्त्रशकुन्तलालाभ इति भावः । खलुः प्रश्ने । अयमर्थः शकुन्तलासमागम आखण्डलस्य महेन्द्रस्य न विदितः । अत्र वर्त्तमाने क्तः ॥

(१५५) मातेति । ईश्वराणामैश्वर्य्यवतां किं परोक्षमगोचरम् किमपि नेत्यर्थः ॥

(१५६) राजेति । अवलम्ब्यतामङ्कमारोप्यताम् । पुरस्कृत्य अग्रे कृत्वा भगवन्तं मारीचम् ॥

अदितिः ॥ सम्भावणीअप्पहावा से आकिदी (१६३)

मातलिः ॥ आयुष्मन् एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः तदुपसर्प । (१६४)

राजा ॥ मातले (१६५)

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्त्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत् स्रष्टुरेकान्तरम् ॥ (१६६)

---

(१६३) अदितिरिति । सम्भेत्यादि । संभावनीयप्रभावास्याकृतिः । सम्भावनीयो मन्तव्यः प्रभावः शक्तिर्यस्याः सा ॥

(१६४) मातेति । पुत्रेति । पुत्रइव प्रीतिः स्नेहः पुत्रप्रीतिस्तत्पिशुनेन तत्सूचकेन । पिशुनौ खलसूचकावित्यमरः । दिवौकसां देवानाम् । माता च पिता च तौ पितरौ अदितिमारीचौ । उपसर्प उपगच्छ ॥

(१६५) राजेति । सुगमम् ॥

(१६६) प्राहुरिति । मातले मुनयो भवन्तो यद् द्वन्द्वं मिथुनं कर्म्म द्वादशधा द्वादशप्रकारेण द्वादशात्मकतयेति यावत् । स्थितस्य वर्त्तमानस्य तेजसः सूर्यस्य कारणमुत्पत्तिस्थानं प्राहुः । उक्तं महाभारते । अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वरा इति । तथा यत् द्वन्द्वं कर्त्तृ भुवनत्रयस्य स्वर्भूपातालात्मकस्य भर्त्तारं इन्द्रादिभिः पालयितारं यज्ञस्य भागो येषां ते यज्ञभागा देवास्तेषामीश्वरं प्रभुं मघवं सुषुवे उदपादि । तथा यस्मिन् द्वन्द्वे आत्मभुवः स्वयम्भुवात् ब्रह्मणः परोऽपि । परतः स्थितोऽपि । ब्रह्मविष्णुशिवेषु विष्णोर्ब्रह्मणः परत्वादिति भावः । श्रेष्ठोऽपीति ध्वनिः । पुरुषः पुमान् । पुंसि चात्मनि पुराणे विष्णौ च तिलकद्रुमे इति शब्दाब्धिः । भवाय जन्मने आस्पदं पदं स्थानमिति यावत् । आस्पदं पदकृत्ययोरिति शब्दाब्धिः । चक्रे कृतवान् । तदाह विष्णुपुराणम् । तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि इति । दक्षमरीचिसम्भवम् अतएव स्रष्टुर्ब्रह्मण एकान्तरमेकेन पुरुषेण व्यवहितमिदं तत् द्वन्द्वं अदितिमारीचात्मकस्त्रीपुंसौ । स्त्रीपुंसौ मिथुनं द्वन्द्वमित्यमरः । प्रश्नयोरयं श्लोकः । तथाच

मातलि ॥ अथ किम् । (१६७)

राजा ॥ प्रणिपत्य ॥ उभाभ्यामपि वां वासवनियोज्यो दुष्मन्तः प्रणमति । (१६८)

मारीच ॥ वत्स चिरं जीवन् पृथिवीं पालय । (१६९)

अदिति ॥ अप्रतिरथो होहि । (१७०)

शकुन्तला पुत्रसहिता पादयो पतति । (१७१)

मारीच ॥ वत्से । (१७२)

---

सुतात् दक्षादुत्पन्नेयमदितिः मारीचश्चायं ब्रह्मसुतान्मरीचेः सम्भूत इति पौत्री पौत्रश्चयो रदितिमारीचयोर्द्वयोरेव षड्रैकपुरुषव्यवहितत्वं प्रागभिहितविष्णुपुराणमहाभारत प्रमाणादवगन्तव्यम् । प्रादुर्भूतविग्रहोऽपि दृत्तम् ॥

(१६७) मातेति । सुगमम् ॥

(१६८) राजेति । प्रणिपत्य नम्रीभूय । वां युवाभ्याम् । उद्देश्यताभावविवक्षायां चतुर्थी । वासवनियोज्यो महेन्द्रकिङ्कर । नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारका इत्यमर । दम्पतीनां साहित्येनेति न्यायात् एकासनगतयोस्तयोः साहित्येनैव नमस्कारो न्याय्यत्व चादित्या पादस्पर्शबाधादभिवादनं परित्यज्य उभयोरेव प्रणिपातः कृत । तदुक्तं मनुना । गुरुपत्नीत युवतिर्नाभिवाद्येह पादयो । पूर्णविंशतिवर्षेण गुणदोषौ विजानता । तथा । कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि । विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन्निति । अतएव शकुन्तलया पादस्पर्शणमहदपदमेव वक्ष्यति ॥

(१६९) मारीति । सुगमम् ॥

(१७०) अदितिरिति । अप्पदीत्यादि । अप्रतिरथो भव । अप्रतिरथ नास्ति प्रतिरथ प्रतियोधो यस्य स ॥

(१७१) शकुन्तलेति । सुगमम् ॥

(१७२) मारीति । सुगमम् ॥

आखण्डलसमो भर्त्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोमीमङ्गला भव ॥ (१७३)

अदितिः ॥ जादे भत्तुणो बहुमदा होहि अअञ्च दीहाऊ उहअ-पक्खं अलङ्करेदु एध उववसध । (१७४)

सर्वे प्रजापतिमभित उपविशन्ति । (१७५)

मारीचः ॥ एकैकं निर्दिशन् । (१७६)

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत् समागतम् ॥ (१७७)

---

(१७३) आखण्डलेति । भर्त्ता ते आखण्डलसमो वासवसमः सुतो जयन्तस्य पाकशासनेः प्रतिमा सादृश्यं यस्य स तथोक्तः । अतस्ते तव सम्बन्धे अन्या वक्ष्यमाणेतरा आशीर्न योग्या उपयुक्ता त्वं पौलम्याः पुलोमदुहितुः शच्या इव मङ्गलमवैधव्यं यस्याः सा तथोक्ता भव । पुलोमजा शचीन्द्राणीत्यमरः ॥

(१७४) अदितिरिति । जादे इत्यादि । जाते भर्त्तुर्बहुमता भव अयञ्च दीर्घायुरुभयपक्षमलङ्करोतु एत उपविशत । अयं सर्वदमनः । उभयपक्षं मातापितृकुलम् । अलङ्करोतु शोभयतु । एतेति सर्वाभिप्रायेण ॥

(१७५) सर्वे इति । प्रजापतिं मारीचम् । अभ्युभयपरिसर्वेत इति द्वितीया । अभितः अभिमुखे ॥

(१७६) मारीचेति । निर्दिशन् अङ्गुल्या दर्शयन् ॥

(१७७) दिष्ट्येति । दिष्ट्या आनन्दे । इयं साध्वी पतिव्रता शकुन्तला इदं सदपत्यं सत्पुत्रः अयं भवान् तत् तस्मात् श्रद्धा आस्थार्थे दृढप्रत्ययः । प्रत्ययो धर्मकार्येषु तथा-श्रद्धेत्यमरादाहृतेति देवधः । वित्तं धनं विधिः प्रवर्त्तकवाक्यमिति कर्त्तव्यता वा कर्मानुष्ठानं वा इति त्रितयं समागतं उपस्थितम् । प्रागुक्तत्रितयमेतत्त्रितयसदृशमित्यर्थः । तथाच शकुन्तला श्रद्धा सदपत्यमिदं वित्तं भवान् विधिरिवेति भावः । यद्यपि यथेदमपत्यं शकुन्तलादुष्यन्तजन्यं तथा वित्तं श्रद्धाविधिभ्यां न जन्यते इति वैधर्म्यं भवति तथापि यथा श्रद्धा वित्तयोगात् विधिर्वाभ्यविधेयः कर्मानुष्ठानं वा लोकस्य प्रतिभाते तथा शकुन्तलासदपत्य

राजा ॥ भगवन् प्रागभिप्रेतार्थसिद्धिः पश्चाद्दर्शनमित्यपूर्व्वः खलु वोऽनुग्रहः । कुतः (१७८)

उदेति पूर्व्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः ॥ (१७९)

मात ॥ आयुष्मन् एवं प्रसीदन्ति विश्वगुरवः । (१८०)

राजा ॥ भगवन् इमामाज्ञाकरीं वो गान्धर्व्वेण विवाहविधिनोपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादि-

---

सम्बन्धाद्ध्यानेऽपि प्रायुपतिष्ठत इत्यवेषम्यं द्रष्टव्यम् । तथाचोक्तं देवलेन । नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनमिति । यज्ञपार्श्वपरिशिष्टेन च । चित्तेऽपि सत्यवे-दिव्येति ॥

(१७८) राजेति । अभिप्रेतस्य अभिलषितस्य सिद्धिर्निष्पत्तिः । सिद्धिर्निष्पत्तियोगयोरिति विश्वः । दर्शनं युष्माकमितिशेषः । इति हेतो र्वो युष्माकमनुग्रहोऽपूर्व्वो विचित्रः ॥

(१७९) वैचित्र्यं दर्शयति उदेतीति । पूर्व्वं प्राक् कुसुमं पुष्पमुदेति उद्गच्छति ततोऽनन्तरं फलं भवतीति शेषः । तथा प्राक् पूर्व्वं घनोदयो मेघोदयः तदनन्तरं तत्पश्चात् पयो वारि जायत इति शेषः । निमित्तं हेतुः नैमित्तिकं निमित्तजन्यं तयोः कारणकार्य्यभावयोरयं क्रमः पौर्व्वापर्य्यक्रमः सर्व्वत्र दृष्ट इति शेषः । तव प्रसादस्य त्वदनुग्रहस्य तु पुरो अग्रे सम्पदः पुत्रकलत्रादिलाभरूपाः सम्पत्तयः भवन्तीति शेषः । अत्र दृष्टान्तोऽलङ्कारः । वंशस्थविलं वृत्तम् ॥

(१८०) मातेति । प्रसीदन्ति अनुगृह्णन्ति । विश्वगुरवो विश्वेषां निखिलानां गुरवो भवद्विधाः । उक्तञ्च कश्यपात्मकं जगदिति ॥

न्यपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य पश्चादेनामङ्गुरीयकदर्शनादूढपूर्व्वामवगतोऽहं तच्चित्रमिव मे प्रतिभाति। (१८१)

यथा गजे साधुसमक्षरूपे
कस्मिन्नपि क्रामति संशयः स्यात्।
पदानि दृष्ट्वा च भवेत् प्रतीति-
स्तथाविधो मे मनसो विकारः॥ (१८२)

मारीच॥ वत्स अलमात्मापराधशङ्कया सम्मोहोऽपि त्वय्युपपन्न एव श्रूयताम्। (१८३)

---

(१८१) राजेति। आचारतो दाशों शकुन्तलामिमां। गान्धर्वेण अन्योन्यसमयपूर्वकेन। विवाहविधिना विवाहेतिकर्त्तव्यतया। उदयस्य परिणीय कस्यचित् कालस्येति अनन्तरमिति शेष। बन्धुभिर्निरस्यै। स्मृतिमोषित्वात् स्मृतिध्वंसात्। अपराध• कृतापराध.। अत्र समस्ते इत्यत आह युष्मदित्यादि। युष्मदीवस्य भवत्सम्बन्धे। सन्ततिर्नित्यजननकुलानीत्यमरः। अत्र युष्मत्सगोत्रस्येति पैठुरन्वे तदनुमापयति महाभारतम्। यथा उद्यन्तोपाख्याने महर्षि काश्यपं दृष्ट्वैव कण्वं तपोधनम्। अग्निमत्स्वसंबाधां पदातिगजसङ्कुलाम्। अवस्थाप्य वनद्वारि सेनामिदमुवाच च इति। अत्र कश्यपापत्यस्यैते समानं गोत्रमादिपुरुषोऽस्येति सगोत्रमस्याश्वसङ्गतिः। एनां शकुन्तलां ऊढपूर्व्वामवगत इत्यन्वयः। ऊढपूर्व्वां परिणीतपूर्व्वाम्। तत् स्मृतिभ्रंशस्य पुनरङ्गुरीयदर्शनात् स्मरणमित्येतत्। चित्रमिव आश्चर्यमिव। प्रतिभाति प्रकाशते॥

(१८२) यथेति। साधुसमक्ष प्रत्यक्षं रूपं यस्य स तस्मिन् कस्मिंश्चिदपि कस्मिंश्चित् गजे स्थितिनि क्रामति गच्छति सति संशयो गजोऽयं न वेति सन्देह. स्यात् अथानन्तरं गजे गते सतीत्यर्थ.। पदानि पदचिह्नानि दृष्ट्वा यथा प्रतीतिर्गजतया प्रत्ययोभवेत् मम मनस-चेतसो विकार तथाविधस्तत्प्रकारः। उपजातिर्वृत्तम्॥

(१८३) मारीति। शङ्का भयम्। सम्मोहो भ्रम। उपपन्नो युक्त। श्रूयतां सम्मोहबीजमिति शेष॥

राजा ॥ अवहितोऽस्मि । (१८४)

मारीच ॥ यदैवाप्सरस्तीर्थावतरणात् प्रत्याख्यानविक्लवां शकुन्तलां मादाय दाक्षायणीमुपगता मेनका तदैव ध्यानादवगतवृत्तान्तोऽस्मि दुर्व्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा स चाङ्गुरीयदर्शनावसानः शाप इति । (१८५)

राजा ॥ सोच्छ्वासमात्मगतम् ॥ एष वचनीयान्मुक्तोऽस्मि । (१८६)

शकु ॥ स्वगतम् ॥ दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो ण उण सत्तं अत्ताणं सुमरेमि अधवा ण सुदो सुण्-हिअभाए मए अअं सावो जदो सहीहिं अच्चादरेण सन्दि

(१८४) राज्ञेति । अवहित॰ साभिनिवेश॰ ॥

(१८५) मारीति । अप्सरस्तीर्थावतरणात् अवतीर्णाप्सरस्तीर्थात् तदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायात् । भूमिमवतीर्णादप्सरोयोनेरित्यर्थं । तीर्थं योनौ जलावतारेऽवेति इत्यायुध॰ । आदायेत्यनेनान्वय । तथाच मेनकादेशात् काचिदप्सरोयोनि स्तत् सखी प्रत्याख्यानसमये भूमिमवतीर्य्य शकुन्तलामानीय मेनकामुपनीतवतीमेनकातुतस्याः सकाशात् तामादाय दाक्षायणीमुपगतेतितात्पर्य्यम् । अतएव वयस्य क पतिव्रतां तामन्य परामष्टुं मुत्सहते मेनका किल सख्यास्ते जन्मप्रतिष्ठेति तत्सखीजनादस्मि श्रुतवान् तत्सहचरीभिस्तयामानीतेति हृदयमाशङ्कते इति राज्ञा अनुमिता । सम्प्रोच्छे विविञ्च गणोभवक्षु इमस्य पतिदोषो इत्यनेन शिष्यकेऽस्यापि राजकृतानुमानस्य तत्त्वकत्व मङ्गीकृतं । प्रत्याख्यानेन भवत्कृतनिराकरणेन विक्लवां विह्वलाम् शकुन्तलामादाय मेनका यदैव दाक्षायणीमदितिमुपगता तदैवध्यानात् चिन्तनात् अवगतवृत्तान्तो विदितवाक्यवोऽस्मि किमित्याकाङ्क्षायामाह दुर्व्वासस इत्यादि । तपस्विनी अनुकम्पार्हा । सहधर्मचारिणी भार्य्या । प्रत्यादिष्टा प्रत्याख्याता । अङ्गुरीयेति अङ्गुरीयदर्शनादवसानं समाप्तिर्यस्य सः ॥

(१८६) राजेति । सोच्छ्वासं सदीर्घनिश्वासम् । एषोऽहम् । वचनीयात्निन्दावादात् ॥

दृट्ठिआ सो राआ जइ तुमं ण सुमरेदि तदा एदं अङ्गुलीअअं दंसेसित्ति । (१८७)

मारीच ॥ शकुन्तलां विलोक्य ॥ वत्से विदितार्थासि तदिदानीं सहधर्म्मचारिणं प्रति न त्वया मन्युः करणीयः । पश्य (१८८)

शापादसि प्रतिहता स्मृतिलोपरुक्षे
भर्त्तर्य्यपेततमसि प्रभुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा । (१८९)

राजा ॥ यथाह भगवान् ।

---

(१८७) शकु इति । दिट्ठिआ इत्यादि । दिष्ट्या अकारणप्रत्यादेशी नार्य्यपुत्र । न पुनः शप्तमात्मानं स्मरामि अथवा न श्रुत शून्यहृदयया मयाऽयं शाप । यत सखीभ्यामत्यादरेण सन्दिष्टास्मि स राजा यदि त्वां न स्मरिष्यति तदा एतदङ्गुरीयकं दर्शयिष्यसीति । अकारणेति । अकारणपरित्यागीत्यर्थः । शप्तं शापप्राप्तविषयम् । शून्यहृदयया अनवहितहृदयया । भर्त्तृप्रेरितमनसेत्यर्थः । न श्रुत इति । कुतोऽवधारितमित्यत आह यत इति । सन्दिष्टा उपदिष्टा तत्प्रकारस्त्वित्यन्त ॥

(१८८) मारीति । विदितार्था विदितवाक्यार्था । सहधर्मचारिणं भर्त्तारम् । मन्युः क्रोधः मन्युर्दैन्ये क्रतौ क्रुधीत्यमर ॥

(१८९) शापादिति । शापात् दुर्वाससः शापात् भर्त्तरि स्मृतिलोपात् विस्मरणात् रुक्षे स्नेहशून्ये सति त्वं प्रतिहता प्राप्तप्रतिघातासि तत्र नविग्नासीत्यर्थ । भर्त्तरि अपेतमपगतं तमो मोहो तस्य स तथोक्ते सति तवैव प्रभुता योग्यता भर्त्तृसहवासविषये इति शेष । तथाहि मलेन उपहतो विनष्ट प्रसाद स्वच्छता यस्य तत् तथोक्ते दर्पणतले दर्पणस्वरूपे । अथ स्वरूपयोरस्त्री तलमित्यमर । छाया प्रतिबिम्बं । छाया सूर्य्यप्रिया कान्ति प्रतिबिम्ब मनातप इत्यमर । न मूर्च्छति न प्रसरति शुद्धे निर्मले तु दर्पणतले छाया सुलभावकाशा सुलभोऽव्याघातलब्धो अवकाशः स्थानं यया सा तथोक्ता भवति । अत्र दृष्टान्तोऽलङ्कारः । वसन्ततिलक वृत्तम् ॥

मारीचः ॥ अस्य कच्चिदभिनन्दितस्त्वया अस्माभिर्विधिवदनुष्ठितजातकर्मादिक्रियः पुत्त्र एष शाकुन्तलेयः । (१९१)

राजा ॥ भगवन् अत्र खलु मे वंशप्रतिष्ठा । इति बालकं हस्तेन गृह्णाति । (१९२)

मारीचः ॥ भाविनं चक्रवर्त्तिनमेनमवगच्छतु भवान् । पश्यतु । (१९३)

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात् सर्व्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ (१९४)

राजा ॥ भगवत्कृतसंस्कारेऽस्मिन् सर्व्वमाशंसे । (१९५)

---

(१९०) राजेति । सुगमम् ॥

(१९१) मारीचेति । कच्चिदितीष्टप्रश्ने । कच्चित् कामवेदन इत्यमरः । अस्माभिर्विधिवत् यथाविधि अनुष्ठिता कृता जातकर्मादि क्रियायस्य स एष शाकुन्तलेयः शकुन्तलापुत्त्रः पुत्त्रस्त्वया अभिनन्दितः कच्चित् ॥

(१९२) राजेति । अत्र खलु अत्रैव पुत्त्रे इत्यर्थः । वंशप्रतिष्ठा कुलस्य गौरवम् । प्रतिष्ठा गौरवे स्थितावपि मेदिनी ॥

(१९३) मारीचेति । भाविनं भविष्यन्तम् । चक्रवर्त्ती भविष्यतीत्यवगच्छतेत्यर्थः ॥

(१९४) रथेनेति । अनुद्घातेन अभूतलस्खलनोद्घट्टनेन स्तिमिता अचञ्चला गतिर्यस्य स तेन रथेन । स्तिमितोऽचञ्चले क्लिन्ने इति विश्वः । विमानेनेति यावत् । तीर्णजलधिर्लङ्घितार्णवः अप्रतिरथोऽप्रतिद्वन्द्वीव सन् अयं शाकुन्तलेयः पुरा अग्रे सप्तद्वीपां वसुधामुर्व्वीं जयति । यावत् पुराभ्यां भव्य इति भविष्यति लट् । अथ इह सत्त्वानां प्राणिनां प्रसभदमनात् बलेन शासनात् सर्व्वदमन. सर्व्वदमनसंज्ञोऽयं पुनर्लोकस्य भुवनस्य भरणात् भरत इति आख्यां संज्ञां यास्यति प्राप्स्यति । इदं शिखरिणी नाम वृत्तम् ॥

अदिति ॥ इमाए दुहिदिमनोरहसम्पत्तीए कण्णो दाव सुदवित्थारो करीअदु दुहिदिवच्छला मेणआ उण इध मं परिचरन्ती सण्णिहिदा ज्जेव । (१९६)

शकु ॥ आत्मगतम् ॥ मणोगदं मे वाहरिदं भअवदीए । (१९७)

मारीच ॥ तपःप्रभावात् सर्व्वमिदं प्रत्यक्षं तत्रभवतः कण्वस्य । (१९८)

राजा ॥ अतः खलु ममानतिक्रुद्धो मुनिः । (१९९)

मारीच ॥ तथाप्यसौ दुहितुः सपुत्त्रायाः पत्या परिग्रहमिय-मस्माभिः आवयितव्यः । कः कोऽत्र भोः । (२००)

---

(१९५) राजेति । भगवता भवता कृतसंस्कारे अस्मिन् पुत्रे सर्व्वमङ्गल भाव्यं सम्भावये ॥

(१९६) अदितिरिति । इमाए इत्यादि । अस्या दुहितृमनोरथसम्पत्ते कण्व-श्रावत् श्रुतविस्तार क्रियताम् । दुहितृवत्सला मेनका पुनरिह मा परिचरन्ती सन्नि हितैव । दुहितुर्मनोरथस्य प्रियसमागमाभिलाषस्य सम्पत्ते परिणामस्य श्रुतो विस्तारो येन स तथोक्त क्रियताम् । अस्या दुहितृमनोरथसम्पत्ते विस्तारः श्राव्यतामित्यर्थः । दुहितृवत्सला दुहितृस्नेहवती परिचरन्ती शुश्रूषमाणा सन्निहिता उपस्थिता ॥

(१९७) शकु इति । मणो इत्यादि । मनोगत मे व्याहृत भगवत्या । भगवत्या अदित्या ॥

(१९८) मारीति ॥ तप प्रभावात् तप सञ्चे । प्रत्यक्षमनुभूयमानम् । तत्रभवतो नैष्ठिकब्रह्मचारित्वेन श्लाघ्यस्य ॥

(१९९) राजेति । अतः तपःप्रभावविदिताखिलवृत्तान्तत्वात् । मम सम्बन्धे । अनतिक्रुद्ध दुर्व्वासः शापकृतत्वेन मदपराधाभावादिति भाव ॥

(२००) मारीति । तथापि तप प्रभावप्रत्यक्षीकृताशेषवृत्तान्तत्वेऽपि । दुहित शकु-न्तलायाः । पत्येत्यादि । भर्त्तृकृतपरिग्रहरूप प्रियमित्यर्थः । क क इति । भोः अत्र क क वर्त्तते इति शेष ॥

प्रविश्य शिष्य ॥ भगवन्नयमस्मि । (२०१)

मारीच ॥ वत्स गालव मद्वचनादिदानीमेव वैहायसागत्वा तत्रभवते कण्वाय प्रियमावेदय तथा पुत्त्रवती शकुन्तला दुर्व्वाससः शापनिवृत्तौ स्मृतिमता दुष्मन्तेन परिगृहीतेति । (२०२)

शिष्य ॥ यथाज्ञापयन्ति गुरवः । इति निष्क्रान्त । (२०३)

मारीच ॥ राजानं प्रति ॥ वत्स त्वमपि सापत्यदारः सख्युराखण्डलस्य रथमारुह्य स्वां राजधानीं प्रतिष्ठस्व । (२०४)

राजा ॥ सप्रणामम् ॥ यदाज्ञापयति भगवान् । (२०५)

मारीच ॥ सम्प्रति हि (२०६)

तव भवतु विडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम् ।
युगशतपरिवृत्तैरेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ (२०७)

---

(२०१) प्रविश्येति । अयमस्मि अहमिति शेष ॥

(२०२) मारीति । वैहायसा आकाशोचितया । पुंस्याकाशविहायसी इत्यमर । आवेदनीयमाह यथेत्यादि इत्यन्तम् ॥

(२०३) शिष्य इति । सुगमम् ॥

(२०४) मारीति । सापत्यदार अपत्यदारै सहित । आखण्डलस्य इन्द्रस्य । राजधानी प्रधाननगरीम् । प्रधाननगरी राज्ञा राजधानीति कथ्यते इतिशब्दार्णव । प्रतिष्ठस्व गच्छ ॥

(२०५) राजेति । सुगमम् ॥

(२०६) मारीति । सम्प्रति एवमेवं भवत्विति श्लोकीयेनान्वय ॥

(२०७) तवेति । वेवेष्टीति विट् विट व्यापकमोजस्तेजो यस्य स विडौजा इन्द्र । इन्द्रो मरुत्वान् मघवा विडौजा पाकशासन इत्यमर । तव प्रजासु प्राज्या प्रचुरा वृष्टिर्यस्मात् स तथोक्तो भवतु । प्रभूतं प्रचुरं प्राज्यमित्यमर । त्वमपि विततो विस्तृतो यज्ञो येन स तथाभूत सन् वज्रिणं वासवं अलं पर्याप्तं प्रीणय यज्ञभागैस्तर्पय ।

राजा ॥ भगवन् यथाशक्ति श्रेयसे यतिष्ये । (२०८)

मारीच ॥ वत्स । किन्ते भूयः प्रियमुपहरामि । (२०९)

राजा ॥ अतः परमपि प्रियमस्ति तथाप्येतदस्तु । (२१०)

प्रवर्त्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहती न हीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ (२११)

इति निष्क्रान्ताः सर्वे । सप्तमोऽङ्कः ॥ (२१२)

इति महाकविकालिदासविरचितमभिज्ञानशकुन्तलं नाम नाटकं समाप्तम् ॥

---

युगशतं व्याप्य परिहृत्तैर्जातविनिमयैस्तथा उभय लोकयो स्वर्गमर्त्त्ययोरनुग्रहेण हितचेष्टया श्लाघनीयैः प्रशंसनीयैः । तव त्वत्कृत्ये स्वर्गहितचेष्टया वज्रिणस्तु मर्त्त्यहितचेष्टया श्लाघनीयैरित्यर्थः । एवमुक्तप्रकारैरन्योन्यकृत्यैः परस्परकर्म्मभिर्जयतस्तत्कर्मैव वर्त्तेथां युवामिति शेषः । मालिनि नाम वृत्तमिदम् ॥

(२०८) राजेति । शक्तिमनतिक्रम्य यथाशक्ति । अनतिक्रमार्थेऽव्ययीभावः । श्रेयसे कल्याणाय ॥

(२०९) मारीति । भूयः पुनस्ते तव सम्बन्धे किं प्रियमुपहरामि उपनयामि ॥

(२१०) राजेति । अतः सापत्यदारसमागमात् परमितरत् । अपि॰ प्रश्ने । इदानीं गृहीतराजभूमिक एव निजवचनमाह तथापीत्यादि । एतदारभ्य वस्तुतो दुष्मन्तएव तदानीमेव सूत्रधारनिति न मन्तव्यम । तथापि दुष्मन्तेनेतरप्रियस्यानभ्यर्थनीयत्वेऽपि । एतत् वक्ष्यमाणम् ॥

(२११) प्रवर्त्ततामिति । पार्थिवः क्षितिपः प्रकृतीनां पौरवर्गाणां हिताय प्रवर्त्ततां प्रवृत्तिमान् भवतु । प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे इति मेदिनी । तथा श्रुतौ श्रवणविषये महति प्रशस्ता सरस्वती वाणी कविकृतभारतीत्यर्थः । न हीयतां लोकैर्नत्यज्यताम् । अपिच अात्मना भवतीत्यात्मभूः कृतजन्मपरिग्रहः अत परिगता प्राप्ता शक्तिर्जन्मनिवारणसामर्थ्यं यस्य स । परिगत इति प्राप्ते विश्रुतचात

वेष्टिते इति मेदिनी । अथवा परिगताः परितः स्थिताः मल्लयोमालाद्याः संसृष्ट । यद्वा परिगतमल्लिगौरीयुक्तः । मल्लिरश्वान्तरे गौर्य्यामिति मेदिनी । नीलकण्ठिनः शिवो मम च पुनर्भवं पुनर्जन्म क्षपयतु नाशं विधाकरोतु । नान्दिपदेनैतेनापि भरतः कविनाभिप्रेतार्थमाशास्ते इति द्रष्टव्यम् । रुचिरा नाम वृत्तमेतत् । तदुक्तम् । जभौ सजौ गिति रुचिरा चतुर्ग्रहैरिति । सङ्केतस्तु मखिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः । जोगुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः । गुरुरेको गकारस्तु लकारो लघुरेकक इत्युक्तः ॥

(२१२) इतीति । एवमुक्तौ सत्यामित्यर्थः । सर्व्वे भरताः । षष्ठ परिच्छेदः ॥

नवाष्टसप्तषड्भागमिताब्दे शकभूपतेः ।<br>
भाद्रानवम्यां टीकेयं समाप्तिपदमागता ॥ १<br>
नवद्वीपाख्यभूमौ श्रीमद्भागीरथीतटे ।<br>
ग्रामं पूर्व्वस्थली नाम विद्धि वासस्थली मम ॥

इति श्रीकृष्णनाथ सार्व्वभौमविरचितायामभिज्ञानशकुन्तलटीकायां अर्थद्योतनिकाख्यायां सप्तमाङ्कविवरणम् ।

समाप्तोऽयं ग्रन्थः ।



# शुद्धिपत्रम् ।



| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ४ | ग्रन्थोऽपि | ग्रन्थोपि |
| २ | १८ | सुर्येन्द | सूर्येन्दु |
| २ | २४ | वत्तमाने | वर्तमाने |
| ३ | १६ | वाविस्तरेण | वामिस्तरेण |
| ३ | २६ | तस्रमीदा | तस्मादमी |
| ४ | ११ | बध | बुध |
| ५ | ११ | नखे | न्खे |
| ५ | १४ | नखे | न्खे |
| ६ | २० | पुव्वह्ने | पुव्वह्ने |
| १४ | ३ | समो | सोम |
| १४ | ८ | यार्पा | यार्सा |
| १० | १२ | दीयो | दीनो |
| १० | २४ | मङ्गल | मङ्गल |
| १८ | १६ | रत्नाल्प | रत्नाल्प |
| १६ | २० | यन्नयसे | मन्नयसे |
| १६ | २६ | मिमात्पदः | मित्पमरः |
| १६ | २६ | साभ्य | साभ्या |
| २० | ११ | सुञ | सुञु |
| २० | १८ | समे | समे |
| २२ | १८ | मणसिव | मणमिव |
| २२ | १३ | छमय | छमब |
| २५ | ११ | योवन | यौवन |
| २६ | ११ | भ्रमर | भ्रमर |

१

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६१ | २४ | उपेन्द्र | इन्द्र |
| ६२ | १२ | खनियोग | स्वनियोग' |
| ६३ | ३ | वड्डवियस्य' | वड्डदृस्य |
| ६३ | १३ | त्रिदू | त्रिदू |
| ६६ | २१ | समुस्या | समुपस्या |
| ६७ | २ | स्वभावा | स्वभावा |
| ६७ | १६ | निमित्तेन | निमित्तेन |
| ६७ | २१ | माव | भाव |
| ६८ | ४ | दत्तत्या | ददत्या |
| ७१ | २६ | भूजे | भुजे |
| ७२ | १२ | अत्तापा | अत्तापा |
| ७४ | ७ | आयत्तिष्टदो | आयत्तिष्टदो |
| ७४ | २४ | मलम | मूलम् |
| ७८ | २८ | समदान | समदना |
| ८१ | १३ | इन्द | इन्दु |
| ८३ | ७ | मवितव्यम् | भवितव्यम् |
| ८३ | २२ | नमून | नमून् |
| ८३ | २७ | ऽभ्यचता | ऽभ्युचता |
| ८५ | १८ | स्थिर | स्थिर |
| ८५ | १८ | निध्वान | निधान' |
| ८७ | १० | मण | भण |
| ८८ | २२ | रुपद्रुत | रुपद्रुत |
| ८९ | १ | वसु | कसु |
| ९४ | २६ | स्थाने | स्थाने |
| ९७ | २१ | इत्याति | इत्यादि |
| ९८ | १५ | मायात | मायत |
| ९८ | २९ | अभ्युप | अभ्युप |
| ९९ | ३ | मतवत्वेन | उतवत्वेण |

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०७ | १ | ने | नः |
| १०७ | २६ | तन्मर्षयतु | मर्षयतु |
| १०२ | ८ | दति | इति |
| १०७ | ४ | कटिन॑ | कठिन॑ |
| १०८ | १० | अन्व्युको | अम्बुको |
| १०८ | २० | पिय | प्रिय |
| १०८ | २१ | दयन | दर्शन |
| १०९ | २ | पिपास | पिपासा |
| ११० | २२ | दवेन | दैवेन |
| १११ | २२ | सुक्ता | सुक्ता |
| १११ | २४ | गगण | गगन |
| ११५ | ५ | एड॑ | एद॑ |
| ११५ | ७ | दाणि | दाणि॑ |
| ११५ | २५ | कोमगर्भौ | कोपगर्भौ |
| ११६ | २३ | आनन्वये | आमन्त्रये |
| ११७ | २५ | क्षुनादिना | क्षुण्ठनादिना |
| ११८ | २२ | रङ्गभे | रङ्गभूमे |
| १२१ | १२ | निरुर्यन्ति | निरुद्धयन्ति |
| १२१ | १४ | प्रतितनूस्रते | प्रतिपत्तूस्रते |
| १२१ | २१ | नोमित्यर्थ॑ | नीयेत्यर्थ लापत् |
| १२१ | १ | भोड्ड | भोड्ड |
| १२२ | २ | कथमिति | कथमतिपि॑ |
| १२५ | १४ | स्त्रोमृति | पत्नोमृति |
| १२६ | १ | आग्नमिडु॑ | समाग्नमिडु॑ |
| १२६ | ६ | ज्ञायति | ज्ञायतः |
| १२६ | १७ | एष | एषएष |
| १२६ | १७ | समाख्याभिद्र॑ | समाद्रभिद्र॑ |
| १२७ | १२ | अभेनि | अभेति |
| १२८ | २४ | प्रदि | यदि |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२८ | २८ | वंधा | वुंधा |
| १३० | २४ | दणु | दद्रु |
| १३१ | ३ | दति | इति |
| १३४ | ४ | सवियक्षम् | सविस्मय |
| १३५ | १३ | नखिनी | नलिनी |
| १३७ | २० | कथ | कथ् |
| १३८ | ८ | मद्दीयी | मद्विषी |
| १३८ | १८ | निषीदताम् | निषीदतम् |
| १४१ | १४ | काष्टादि | काष्ठादि |
| १४१ | १५ | पुष्कारा | पुष्करा |
| १४३ | ११ | ग्टहिणी | ग्टहिणी |
| १४३ | १६ | मूपण | भूषण |
| १४४ | ८ | माम्भिंछेत्र | मम्भिंठेव |
| १४४ | १७ | नियतेव | नियतैव |
| १४५ | १ | क्लुप्त | क्लृप्त |
| १४५ | ७ | क्लृप्तानि | क्लृप्तानि |
| १४५ | ८ | समिद्वन्तो | समिद्वन्तो |
| १४५ | २१ | कणोत्क्रस्ता | कणूत्क्रस्ता |
| १४६ | १ | वत्से | वत्से |
| १४६ | ४ | वतूमो | वतूसो |
| १४६ | ० | भोभो | भोभोः |
| १४७ | ५ | सविस्मा | सविस्मयमा |
| १४८ | १२ | सत | मत |
| १५० | २३ | पन्यन | पन्यान |
| १५१ | १ | वुपेत्व | वुपेत्य |
| १५२ | १२ | एँषा | एषा |
| १५१ | १५ | वचनम् | वचनम् |
| १५२ | १० | तुमं | तुम |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १५२ | १० | मिश्राभि | मिश्राभि |
| १५३ | १ | वतृमे | वतृषे |
| १५३ | १३ | तथा | तथा |
| १५४ | २३ | नाविकिनी | नावीकिनी |
| १५५ | १० | पुरस्कृत्य | पुरस्कृत्य |
| १५६ | ५ | शुश्रूषस्व | शुश्रूषस्व |
| १५६ | २२ | जनश्चेति | जनचेति |
| १५६ | २४ | प्रतिपोन्य | प्रतीपोन्य |
| १५७ | १३ | प्यसन | व्यसन |
| १५७ | १८ | एत | एत |
| १६० | ७ | मान्य | मान्यै |
| १६२ | ६ | मोका | मोका |
| १६३ | १२ | स्वीकार | स्वीकार |
| १६३ | १५ | प्ररिपोष्ट | परिपोष्ट |
| १६५ | १६ | निपयो | निपय |
| १६५ | १८ | वुद्धि | बुद्धि |
| १६५ | २२ | दयमति | दह्यति |
| १६७ | २० | मवते | मुपते |
| १६८ | ११ | जन्य | जन्यु |
| १६८ | १२ | दे यो | दु यो |
| १६८ | २१ | पत्रर्कषेण | पतृकर्षेण |
| १६८ | २१ | तान् | ताम् |
| १७० | १ | विषमाग्न | विषमाग्न |
| १७० | १७ | सास्त्र | सास्त्र |
| १७१ | २ | कन्यापन्नो | कन्यापन्नो |
| १७१ | १८ | दास | दास |
| १७२ | १२ | भूत | भूत |
| १७२ | १८ | विप्रोदशो | प्रप्रोदशो |

| पृष्ठे | | पङ्क्ती | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| १०१ | ... | ४ | ... | तत्र | ... | मत्र |
| १०१ | ... | ८ | ... | स्टश्रीत | ... | स्टश्रीतः |
| १७७ | ... | ३ | ... | विरुधा | ... | वीरुधा |
| १७७ | ... | २१ | ... | द्रष्ट | ... | द्रष्टुं |
| १७८ | ... | २० | ... | तधापि | ... | तथापि |
| १७७ | ... | ४ | ... | विप- | ... | विप्- |
| १७८ | ... | ७ | ... | अयमो | ... | अयमि |
| १७८ | ... | २४ | ... | देद | ... | देह |
| १८० | ... | १४ | ... | त्यन् | ... | त्यम् |
| २८० | ... | १८ | ... | मूसे | ... | भूमे |
| १८१ | ... | १ | ... | मिवि | ... | शिवि |
| १८१ | ... | १५ | ... | प्रकागम् | ... | प्रकायम् |
| १८५ | ... | ५ | ... | माद्दयं | ... | मादयं |
| १८५ | ... | १८ | ... | त्यादौ | ... | त्यादि |
| १८५ | ... | २२ | ... | शुप | ... | सुप |
| १८७ | ... | ८ | ... | व्यवसन | ... | व्यवसन् |
| १८७ | ... | १४ | ... | मंयाः | ... | यंयाः |
| १८८ | ... | ६ | ... | भचन्त्रिय | ... | मचन्त्रिय |
| १८८ | ... | १६ | ... | तनं | ... | नसं |
| १८८ | ... | १८ | ... | कथ | ... | कष |
| १८८ | ... | २१ | ... | यस्मा | ... | यस्माः |
| १८८ | ... | २४ | ... | पतुसे | ... | पतुंसे |
| १८९ | ... | १८ | ... | दस्य | ... | दस्यु |
| १८९ | ... | १८ | ... | सुता | ... | सुता |
| १९० | ... | ८ | ... | स्वगत | ... | स्वगत |
| १९० | ... | २६ | ... | अव्यय | ... | मव्यय |
| १९१ | ... | १२ | ... | ग्राचे | ... | गाथे |
| १९१ | ... | १७ | ... | मत्नी | ... | पत्नी |

| पृष्ठे | | पङ्क्तौ | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| १८१ | ... | २३ | . | मन्या | ... | स्मृन्वा |
| १८२ | .. | २५ | | तवात | ... | तावत् |
| १८३ | . | १४ | . | दीर्घापाङ्गौ | .. | दीर्घापमाङ्गौ |
| १८३ | . | २२ | . | मधु | .. | मधु |
| १८३ | .. | २४ | .. | स्मृतं | ... | स्मृतं |
| १८३ | .. | ८ | . | सर्वे | .. | सर्वं |
| १८४ | ... | २२ | . | मत्यत्य | .. | मपत्य |
| १८६ | _ | १६ | .. | मश्च | .. | माश्च |
| १८६ | . | २१ | .. | यस्या | ... | यस्याः |
| १८८ | ... | १ | .. | साम्रूपम् | .. | सारूप्यम् |
| १८८ | ... | ७ | .. | सन्याय | .. | सन्धाय |
| २०० | ... | २४ | ... | मित्यर्थ | ... | मित्यर्थः |
| २०१ | ... | २ | ... | यौवनै | .. | यौवने |
| २०१ | ... | २४ | ... | स्वातन्त्य | ... | स्वातन्त्र्य |
| २०२ | ... | ८ | .. | पराङ्मुखी | ... | पराङ्मुखी |
| २०३ | ... | २० | ... | विकल्प | .. | विकल्पे |
| २०४ | .. | १६ | .. | व्याकौ | ... | व्यूतौ |
| २०५ | .. | १ | ... | शकुन्तला | : | शकुन्तला |
| २०५ | ... | १ | .. | चिन्तन्तयति | .. | चिन्तयति |
| २०५ | ... | ११ | ... | कर्पु | ... | कर्पं |
| २०७ | ... | ८ | ... | सिद्य | ... | सिद्य |
| २०८ | .. | १८ | .. | न्मृषा | ... | न्मृषा |
| २०९ | . | १४ | .. | गरिव | ... | गारिव |
| २०९ | .. | १० | .. | बुध्रि | .. | बुध्रि |
| २१५ | .. | १६ | .. | व्याप्नोतिति | ... | व्याप्नोदिति |
| २१५ | ... | २५ | ... | करस्य | ... | कटकस्य |
| २१६ | . | ११ | . | इदेग्य | .. | इदेग्य |
| २१६ | | १२ | | नरकः | .. | नारकः |

| पृष्ठे | | पङ्क्तौ | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| २१८ | ... | १ | ... | मशन्ना | ... | समन्ना |
| २१८ | ... | ११ | ... | तथा | ... | तया |
| २१८ | ... | १२ | ... | छतपूर्व्व | ... | छतं पूर्व्वं |
| २१८ | ... | २७ | ... | मक्षत्र | ... | मक्षत्रा |
| २१९ | ... | १ | ... | पृष्टे | ... | पृष्टे |
| २१९ | ... | १६ | ... | हत्तं | ... | हत्तं |
| २२१ | ... | २० | ... | अकौतूहलं | ... | सकौतूहलं |
| २२५ | ... | ८ | ... | मश्चत्तापसाह्य | ... | पश्चात्तापसह्य |
| २२५ | ... | १७ | ... | दुन्मनस्कत्वात् | ... | दुन्मनस्कत्वा |
| २२६ | ... | ९ | ... | चेत | ... | चेत |
| २२६ | ... | ११ | ... | स्वयं | ... | स्वयं |
| २२६ | ... | १४ | ... | धारयन् | ... | धारयन् |
| २२८ | ... | ८ | ... | मति | ... | इति |
| २३० | ... | २४ | ... | इषि | ... | इष्टि |
| २३० | ... | २६ | ... | आदिश | ... | आदिष्टा |
| २३१ | ... | ८ | ... | मतिकृति | ... | प्रतिकृति |
| २३१ | ... | १० | ... | लेखम | ... | लेखन |
| २३१ | ... | १६ | ... | स्वप्न | ... | स्वपन |
| २३१ | ... | २१ | ... | तयाच | ... | तया |
| २३१ | ... | २१ | ... | मारुतेन | ... | मारुतेन च |
| २३५ | ... | १ | ... | परामष्टु | ... | परामष्टु |
| २३५ | ... | ११ | ... | परामष्टु | ... | परामष्टु |
| २३५ | ... | १८ | ... | प्रतिबधो | ... | प्रतिबोधो |
| २३५ | ... | २० | ... | समाश्वाशित | ... | समाश्वसित |
| २३५ | ... | २५ | ... | यचिरं | ... | चिरं |
| २३५ | ... | २५ | ... | ततुपत्र | ... | ततुपुत्र |
| २३६ | ... | १६ | ... | स्वहतो | ... | स्वयतो |
| २३७ | ... | ४ | ... | चत | ... | यत्न |

# शुद्धिपत्रम् ।

| पृष्ठे | | पङ्क्तौ | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| २३७ | ... | ११ | .. | गमागम | . | समागम |
| २३७ | ... | १८ | .. | प्रद्भवि | ... | प्रभवि |
| २३७ | ... | २२ | ... | मखीति | ... | सखीति |
| २३७ | ... | २६ | ... | ममापि | .. | ममापि |
| २३८ | ... | १५ | ... | अवह्नियते | ... | अवह्नियते |
| २३७ | .. | १ | .. | नातुष्टितम् | .. | नातुष्ठितम् |
| २३८ | ... | ७ | .. | रुदस्य | ... | रुमस्य |
| २४० | ... | ८ | ... | भयशीलस्य | ... | भयशीलस्य |
| २४० | ... | १२ | ... | केय | .. | कय |
| २४० | ... | २१ | ... | निनम्नं | .. | निमम्नं |
| २४१ | ... | १ | ... | अचतनं | .. | अचेतनं |
| २४१ | ... | १८ | .. | मर्व्वं | .. | सर्व्वं |
| २४२ | .. | २५ | ... | द्वेषेप कि | .. | द्वेषेषु किं |
| २४३ | ... | १० | .. | स्वदु | .. | स्वादु |
| २४३ | ... | १२ | ... | वद्धा | .. | बद्धा |
| २४३ | ... | १८ | ... | द्रूपं | .. | द्रूपं |
| २४४ | ... | २३ | .. | सक्ता | .. | त्यक्ता |
| २४५ | ... | १६ | .. | खेलूंमः | .. | खलूंमः |
| २४६ | ... | ८ | ... | पङ्क्य | .. | पद्मय |
| २४६ | .. | १२ | .. | विति । | .. | विति |
| २४६ | ... | १८ | .. | निंवेश्य | .. | विनिवेश्य |
| २४७ | .. | ६ | .. | श्रूयताम् | . | श्रूयताम् |
| २४८ | .. | ४ | . | सेखित | ... | सेखितं |
| २४८ | ... | १८ | ... | आचार्य्यं | .. | आचार्य्यं |
| २५० | ... | २४ | .. | प्रतिपयो | | मतीपयो |
| २५१ | ... | १६ | .. | भ्रगर | .. | भ्रमर |
| २५१ | .. | २४ | .. | द्व | .. | एव |
| २५२ | .. | १२ | .. | विप्रलम्भो | . | विप्रलम्भो |

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५२ | २१ | स्पष्म् | स्पष्टम् |
| २५२ | २३ | कर्म्मणामनु | कर्म्मणानु |
| २५३ | १८ | वाप्पस्तु | वाप्यस्तु |
| २५३ | २२ | सर्व्वथा ।भ्रपम् | सर्व्वथाभ्रयम् । |
| २५३ | २३ | प्रय | प्रिय |
| २५४ | ४ | वेदिषाऐ | वेदिश्चाए |
| २५४ | १० | मियुक्त | नियुक्त |
| २५४ | ११ | मर्त्ता | [illegible] |
| २५४ | २२ | लतापिटपोलताविटपो | लताविटपो |
| २५६ | १७ | कार्य्योप | कार्य्येप |
| २५७ | १६ | यक्षः | पक्षरः |
| २५७ | २२ | यिप्ययो | यिप्ययो |
| २५८ | ७ | यक्षः | यक्षरः |
| २५८ | १२ | ऽनिर | ऽनिल |
| २५८ | ११ | उतृपसै | उतृपत्यै |
| २६० | १ | धोस | घोष |
| २६१ | १४ | असंसय | असंसत्र |
| २६१ | १६ | सप्र | सप्र |
| २६२ | ८ | सुदक | सुदक |
| २६३ | ४ | मविष्पदि | भविष्यदि |
| २६३ | १५ | मक्षा | मक्षा |
| २६३ | १६ | पिन्नेन | पितेन |
| २६४ | ३ | दूय | दूत |
| २६४ | ७ | मत्तं | मत्तं |
| २६४ | ७ | खलवेनं | खल्वेनं |
| २६४ | १५ | स्रोत | स्रोत |
| २६४ | २० | कश्मन | कश्मलं |
| २६४ | २१ | प्रमिषे | प्रतिमे |

| पृष्ठे | | पङ्क्तौ | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| २६५ | ... | १४ | ... | मिलेति | ... | मिश्रेति |
| २६५ | ... | २१ | ... | पयोदुगम | ... | पयोद्गम |
| २६७ | ... | १८ | .. | निप्पा | ... | निंप्पा |
| २६८ | ... | ७ | ... | भूतले | ... | भूथलें |
| २६८ | ... | १५ | .. | नोय | ... | नील |
| २७० | ... | १२ | ... | पयेड्ं | ... | पयोऽहं |
| २७१ | .. | ६ | ... | स्थिरो | ... | स्थिरो |
| १७१ | ... | २४ | . | मर्त्तं | ... | मर्त्तं |
| २७१ | ... | १७ | ... | मिंतत्य | ... | मिंतस्य |
| १७६ | .. | ८ | ... | षघा | ... | रथा |
| २७८ | ... | १ | ... | मर | ... | मरें |
| २७८ | ... | १२ | ... | रिन्द्रिस | ... | रिन्द्रस |
| २७९ | ... | २ | ... | सौभाग्थ | ... | सौभाग्य |
| २७९ | ... | १६ | ... | तुर | ... | हर |
| २८१ | ... | १९ | ... | ऽर्त्तिन | ... | वर्त्तिन |
| २८२ | ... | ५ | ... | शिखरा | ... | शिखरा |
| २८३ | ... | १६ | ... | सर्व्वतः | ... | पर्व्वतः |
| २८५ | ... | १३ | ... | क्रुतोः | ... | क्रतोः |
| २८८ | ... | १५ | ... | दृष्टे वे | ... | दृष्टे वे |
| २८८ | ... | २१ | ... | द्राचा | ... | दाचा |
| २८९ | ... | ५ | ... | वरिवर्त्तते | ... | परिवर्त्तते |
| २८९ | ... | १५ | ... | लक्षयो | ... | लक्ष्मयो |
| २९० | ... | ९ | ... | एव | ... | इव |
| २९१ | ... | १ | .. | समद्दपुं | ... | समद्रुं |
| २९१ | ... | २१ | ... | तेत् | : | सत् |
| २९५ | ... | ५ | ... | कथयति . | ... | कथयति |
| २९५ | .. | ९ | .. | निर्वृतिं | ... | निर्वृतिं |
| २९५ | . | २६ | . | मत्तरोहेण | . | मरोहेण |
| २९६ | .. | १० | ... | कारीय | . | कारिय |

| पृष्ठे | | पङ्क्तौ | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| २९७ | ... | १४ | ... | पतिव्मर्तं | ... | पतिव्रतं |
| २९९ | ... | १ | ... | शतूमे | ... | शतूसे |
| २९९ | ... | २० | ... | रोति | ... | रिति |
| ३०० | ... | ११ | ... | भक्षाया | ... | भक्षया |
| ३०१ | ... | १७ | ... | मङ्गतं | ... | तद्गुत |
| ३०२ | ... | २० | ... | न त्वम् | ... | न यत्त्वम् |
| ३०३ | .. | २४ | ... | सा ध्वो | ... | साध्वो |
| ३०७ | ... | १ | ... | साघ | ... | साधु |
| ३०७ | ... | १० | ... | बाधः | .. | बधः |
| ३०९ | ... | ११ | ... | यत्सनेन | ... | यत्नेन |
| ३१० | ... | १ | ... | बिम्ब सेमि | ... | बिम्बसेमि |
| ३११ | ... | १८ | ... | सोपन | ... | सोक्य |
| ३१४ | ... | १ | ... | जघन्य | .. | जघन् |
| ३१४ | ... | ११ | ... | पैलम्याः | ... | पोलोम्याः |
| ३१४ | ... | २० | ... | तधा | ... | तया |
| ३१४ | ... | २५ | ... | मिथि | ... | बिधि |
| ३१५ | ... | ११ | ... | धम्मं | ... | धर्म्मं |
| ३१५ | ... | १४ | ... | ऽपुर्व्वोरि | ... | ऽपूर्व्वोर्वि |
| ३१५ | ... | १९ | ... | सम्भसयोः | ... | सम्यक्तयो |
| ३१६ | ... | १० | ... | तयाः। | ... | तया। |
| ३१७ | ... | १ | .. | तोऽधि | ... | तोऽस्मि |
| ३१७ | .. | १५ | ... | यति | ... | यती |
| ३१७ | ... | १६ | . | परामद् | . | पराङ्गु |
| ३१७ | ... | १८ | .. | मितां। | .. | मितम्। |
| ३१७ | ... | १९ | .. | लतां। | ... | लतम्। |
| ३१८ | .. | ८ | : | सुच्चे | .. | सुच्चे |
| ३१८ | ... | २० | . | लिग्ना | . | लग्ना |
| ३१९ | .. | १८ | .. | तमि | | भवि |

| पृष्ठे | | पङ्क्तौ | | अशुद्धम् | | शुद्धम् |
|---|---|---|---|---|---|---|
| ३१८ | ... | २३ | ... | सच | ... | सचा |
| ३२० | ... | १६ | ... | शुश्रूमाणा | ... | शुश्रूषमाणा |
| ३२१ | ... | २ | ... | तथा | ... | यथा |
| ३२१ | ... | ६ | ... | सक्यु | ... | सख्युः |
| ३२१ | ... | ११ | ... | यत्तौ | ... | यत्तौ |
| ३२२ | ... | ३ | ... | भस्ति | ... | नस्ति |
| ३२२ | ... | ३ | ... | तधा | ... | तथा |
| ३२२ | ... | ५ | ... | च्छीयताम् | ... | क्षीयताम् |
| ३२२ | ... | २१ | ... | प्रौर | ... | पौर |
| ३२२ | ... | २२ | ... | प्रवित्ति | ... | प्रवृत्ति |
| ३२२ | ... | २२ | ... | पक्षदि | ... | प्रकृति |
| ३२२ | ... | २२ | ... | मात्तादि | ... | मात्रादि |
| ३२२ | ... | २३ | ... | श्रतौ | ... | श्रुतौ |
| ३२२ | ... | २५ | ... | घात | ... | घ्रात |
| ३२३ | ... | १ | ... | मेदिनि | ... | मेदिनी |
| ३२३ | ... | २ | ... | नान्दि | ... | नान्दी |
| ३२३ | ... | ३ | ... | कविश्रा | ... | कविया |
| ३२३ | ... | ५ | ... | धुर्खः । | ... | धुर्यः । |
| ३२३ | ... | ६ | ... | गुरु | ... | गुरुः |
| ३२३ | ... | ८ | ... | मितर्थः । | ... | मित्यर्थः |

---